सरस्वतीभवन-ग्रन्थमाला
[ ११७ ]

प० श्रीसुरेशझाविरचिता

# श्लोकसिद्धान्तकौमुदी

[ प्रथमो भागः ]




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

पं० श्री सुरेशझा शिक्षाशास्त्री



...करणसाहित्याचार्यः, न्यायतीर्थं, सा० रत्नम् ।
... सं० वरिष्ठाध्यापकः-राजस्थानयोधपुरशिक्षा-
... ।
...म् — नेपालराज्यमहुतरीमण्डलान्तर्गतसांढा
ग्रामनिवासी । सम्प्रति काशी निवासी
...:—५।:२।१६२० ई० ।

## अत्र विदुषां सम्मतयः

...न्तः सुरेशझामहोदयाः पाणिनीयव्याकरण-
...मुदी श्लोकबद्धां कृत्वा अन्तेवासिनां कल्या-
...रायन्तः विराजन्ते । तेषामयं प्रयासः सर्वथा
...ीय इति मदीया मतिः ।

गौरीनाथशास्त्री
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ 117 ]

# ŚLOKASIDDHĀNTA KAUMUDĪ

[ Part I ]

Written & Edited
by
Pt. ŚRĪ SUREŚA JHĀ



Research Publication Supervisor
DR. BHĀGĪRATHA PRASĀDA TRIPAṬHĪ
'VAGIŚA ŚASTRĪ'
Director, Research Institute
Sampurnanand Sanskrit Vishvavidyalaya
VARANASI
1982

Published by.—
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi.

Available at—
**Sales Department**
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi-221002. ( India )

First Edition—1100 Copies,
Price 31-00 Rs

Printed by—
Ghanaśyāma Upādhyāya
Manager,
Sampurnanand Sanskrit Vishvavidyalaya Press
Varanasi.

सरस्वतीभवन-ग्रन्थमाला

[ ११७ ]

# श्लोकसिद्धान्तकौमुदी

[ प्रथमो भागः ]

लेखकः सम्पादकश्च

पण्डितश्रीसुरेशझाः




अनुसन्धानप्रकाशनपर्यवेक्षकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणस्याम्

२०३८ तमे वैक्रमाब्दे १९०३ तमे शकाब्दे १९८२ तमे खैस्ताब्दे

# प्रास्ताविकम्

वेदपुरुषस्य षडङ्गानि प्रसिद्धानि। तत्र व्याकरणं तन्मुखमभ्युपगम्यते। मुखं पुरुषस्य खल्वनूनकान्यङ्गानि संपोषयतीति प्राधान्यं तदीयम्। एवमेव वेदाङ्गेषु मुखस्थानं व्याकरणं भजते प्रामुख्यम्। व्याकरणमन्तरा वेदव्याख्यानं शक्यमकर्तुमिति तदाकूतम्। ऐन्द्रापिशलिकाशकृत्स्नशाकटायनादीनि बहूनि व्याकरणानि भगवतः पाणिनेः प्रागिह विराजन्ते स्म। यद्यपि पाणिनिना प्राक्तना दश वैयाकरणा अष्टाध्याय्यां स्मृता अपि, तथापि तेषां सर्वेषां व्याकरणानामनुपलम्भात् साम्प्रतं पाणिनीयं व्याकरणमेव प्राचीनतमं राजते।

तत्राप्यष्टाध्यायीसूत्रक्रमानुसारि पातञ्जलं महाभाष्यं मूर्धन्यायते। तदनु काशिकावृत्ति-परिभाषावृत्तिप्रभृतयः सूत्रक्रमानुसारिणो वृत्तिग्रन्थाः प्रथन्ते। सूत्रक्रमानुसारिषु व्याख्यानेषु तत्तद्विषयाणामनेकत्र संदृब्धत्वात् कोमलमतिबालानामसौविध्यमालक्ष्य सूत्राणि विषयानुसारेण व्यवस्थाप्य प्रकरणानि विनिर्धारितानि। सर्वेषां सूत्राणां प्रकरणानुसारेण व्यवस्थापनादियं सृतिः प्रक्रियात्मिका समाम्नातेति रामचन्द्राचार्येण स्वकीयग्रन्थस्य प्रक्रियाकौमुदीति नामधेयमनुष्ठितम्।

रामचन्द्राचार्येण पाणिनिपरम्परायां विमलसरस्वतीकृतरूपमालावताराद् शर्ववर्मकृतकातन्त्राज्जैनपरम्पराकपाल्यकीर्ति-(शाकटायन)-विरचिताच्छाकटायन-व्याकरणाच्चेत्यपाणिनीय - सम्प्रदायगतग्रन्थद्वयीतः प्रेरणामनुभूय प्रक्रियाग्रन्थोऽयं प्रणीतः। तत्र भट्टोजिदीक्षितस्य गुरुणा विभाविता प्रकाशाख्यव्याख्या पदपदार्थप्रस्फोरिणी प्रथिता। किन्तु प्रक्रियाकौमुद्यामष्टाध्याय्याः सर्वाणि सूत्राणि न समावेशितानीति तन्न्यूनत्वं विभाव्य भट्टोजिदीक्षितेन प्राक्तनसकलव्याकरणग्रन्थातिशायिनी वैयाकरणसिद्धान्तकौमुदी कौमुदीव मनोमोदकारिणी प्राणायि।

यद्यपि विषयदृशा वैयाकरणसिद्धान्तकौमुद्याः सर्वाङ्गपूर्णत्वं न कस्यचिद् वैयाकरणस्याविदितम्, तथापि तस्या ज्ञानं लघु न शक्यते स्म विधातुमिति परिकल्प्य वरदराजाचार्येण मध्यसिद्धान्तकौमुदी ततश्च लघुसिद्धान्तकौमुदी विरचिते।

इतो भिन्ना तावत् तृतीया परम्पराऽपि व्याकरणनिकाये दृष्टिपथमवतरति श्लोकात्मना ग्रन्थरचनायाः। तत्र व्याडेः श्लोकसंग्रहाख्यो ग्रन्थो नामशेषतामुपेतो वैयाकरणैः सादरं स्मर्यते। पञ्चमे ख्रीस्तशताब्दे महावैयाकरणेन भर्तृहरिणा सकलं व्याकरणदर्शनं श्लोकमुखेन प्रकाशयता सुप्रथितं त्रिकाण्डात्मकं वाक्यपदीयमवतारितम्।

तदनु पाणिनीयव्याकरणं काव्यात्मनाऽभिव्यङ्क्तुं बहुभिर्व्याकरणचुञ्चुभिः प्रवृत्तम्। षष्ठे ख्रीस्तशताब्दे बलभ्यां महाकविभट्टिना रामकथाश्रितं रावणवधनामकं महाकाव्यं प्राणायि व्याकरणाधारकम्। व्याकरणमुखेनेह महाकाव्यं संदृब्धम्। लक्षणाधारकं लक्ष्यं तदभिधीयते। एवं तावत् काव्यमुखेन व्याकरणाध्ययनं सौविध्यापादकं स्यादिति धिया परतोऽनेके प्रयासाः समजायन्त। दशमे ख्रीस्तशताब्दे राष्ट्रकूटस्य राज्ञस्तृतीयकृष्णस्य सभापण्डितेन महावैयाकरणेन श्रीहलायुधेन तृतीयकृष्णकथावर्णनमुखेन कविरहस्यमिति ग्रन्थतया पाणिनीयो धातुपाठो व्याख्यातः। एकादशख्रीस्तशताब्दे कलिकालसर्वज्ञेन हेमचन्द्राचार्येण द्व्याश्रयमहाकाव्यं व्यरचि यत्र काव्यमुखेन हैमव्याकरणमनायासेन विज्ञातं भवति। तत्र द्वितीये भागे प्राकृतव्याकरणाभ्युपगमाय प्राकृतकाव्यमपि व्यतानि।

त्रयोदशे ख्रीस्तशताब्दे मुग्धबोधव्याकरणकारेण बोपदेवेन कविकल्पद्रुमः काव्यकामधेनुश्चेत्यादयो व्याकरणग्रन्थाः काव्यमुखेन प्रणीताः।

अस्मिन् विंशे ख्रीस्तशताब्दे गद्यकाव्यमुखेन कौमुदीकथाकल्लोलिनीत्याख्यो ग्रन्थो वैयाकरणसिद्धान्तकौमुदी-प्रयोगसरणिमवलम्ब्य विरचितः श्रीरामशरणत्रिपाठिना। ततः पूर्वं पण्डितशिरोमणिना श्रीदेवीप्रसादशुक्लचक्रवर्तिना श्लोकसिद्धान्तकौमुदी प्रणिन्ये इति कर्णाकर्णिकयाकर्णितम्। क्वचिल्लुप्ता सा न प्रकाशमायातेत्येव पार्यतेऽभिधातुम्। काव्यमुखेन व्याकरणशिक्षणार्थं तदीया रचना, आहोस्विद् वैयाकरणसिद्धान्तकौमुद्येव श्लोकात्मना परिवर्तिता सेति न शक्नुमो निर्णेतुम्।

साम्प्रतं सरस्वतीभवनग्रन्थमालायाश्चतुर्दशोत्तरशतप्रसूनतया संफुल्लेयं ललिता श्लोकसिद्धान्तकौमुदी भवत्कराम्बुजलालिता सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन प्रकाशमानीता विलसति। इह वैयाकरणसिद्धान्तकौमुदीगताः सर्वे विषया यद्यपि श्लोकात्मना समुन्मीलिताः सन्ति, तथापि तेषां प्रतिपादनं भट्टिकाव्य-कविरहस्य-द्व्याश्रयकाव्य-कौमुदीकथाकल्लोलिनी-

त्यादिदृशा काव्यमुखेन नास्ति। वस्तुतस्तत्र सर्वत्र लक्षणाधारकाणि लक्ष्याणि काव्यात्मना पुरस्कृतानि सन्ति, न तु लक्ष्याणि तद्व्याख्यानानि च। 'लक्ष्यलक्षणे व्याकरणम्' इति वार्तिकेन कात्यायनो लक्ष्यलक्षणात्मकस्यैव ग्रन्थस्य व्याकरणत्वमाख्याति। लक्षणाधारकलक्ष्याश्रयेण काव्यप्रणयनं नाम नास्ति तथायासकरम्, यथा रूक्षस्य लक्षणशास्त्रस्यानूनकं विश्लेषणं हृद्यया पद्यविधया सायासं सधैर्यं च प्रणेत्रा पार्यते कर्तुम्। पण्डितप्रवरेण श्रीसुरेशझामहाशयेन फक्किकाकान्तारनिबिडां वैयाकरणसिद्धान्तकौमुदीं श्लोकात्मना विभाव्य व्याकरणविष्टपस्वान्तनिशान्तं कुमुदिनीदलमिव समुत्फुल्लितम्।

वैयाकरणसिद्धान्तकौमुद्याः पदपदार्थस्फोरणाय प्रवृत्तानां स्वोपज्ञ-प्रौढमनोरमा-तद्व्याख्याशब्दरत्न-शब्देन्दुशेखर-तत्त्वबोधिन्यादीनां विस्तारविस्तीर्णानां व्याख्यानां तत्त्वगुम्फनमपि यथास्थानं समपादि सुरेशेनेव श्रीसुरेशेन। यद्यपि गुर्जरदेशीयकोविदेन श्रीमदमृतलालशास्त्रिव्यासेन परिभाषेन्दुप्रभाख्यो ग्रन्थ आर्याछन्दोभिर्ग्रथितः परिभाषेन्दुशेखरं निर्मन्थनता, तथापीह श्लोकसिद्धान्तकौमुदीपद्येषु काचन काव्यपद्यापि जागर्ति, सा तत्र सुदुर्लभा नाम।

पदं समर्थं परिनिष्ठितं तद् ॥
ब्रोभूयते यत्कृतसन्धिकार्यम्।
तस्माद् विकल्पेन च तद्धिताः स्यु-
रर्थे विभिन्ने प्रथमादियुक्तात् ॥ ( ३५२ पृ० )

इति हृद्यं पद्यं 'समर्थानां प्रथमाद्वा' इति सूत्रार्थविश्लेषणाय प्रवर्तते। शब्दादिरूपरटनाल्पीकरणाय ग्रन्थेऽस्मिन्ननायासं पद्यबन्धो विराजते—

गणेशः प्रथमो देवः, गणेशं नौमि साञ्जलिः।
गणेशेन सुसिद्धिर्मे गणेशाय नमो नमः ॥
गणेशात् लभते ज्ञानं गणेशस्य स्तुतिः शुभा।
गणेशे भक्तिमानस्मि हे गणेश शुभं कुरु ॥ इति।

वैयाकरणसिद्धान्तकौमुद्यामुपन्यस्तानि प्रयोगोदाहरणानि खलु साम्प्रतिकलोकमानसग्रहणशक्तिमालोच्य ग्रन्थेऽस्मिन् यथास्थानं परिवर्तितानीत्युद्धृतश्लोकविन्यासेन विज्ञायते।

बहुत्र ग्रन्थान्तरमतं स्पष्टीकृतमिह यथा—

धातुभेदानुपादाय तदर्थे कर्मतादिकान् ।
बोधयन्त्यो द्वितीयाद्या निर्वक्तव्या विभक्तयः ॥

इति जागदीशं मतमुपन्यस्तं सिद्धान्तकौमुद्यामनुल्लिखितम् । 'कुचुटुतुपु' इति वर्गनिर्देशकेषु व्यञ्जनोत्तरमुकारस्यैव प्रयोगः किमर्थं कृतः पूर्वाचार्यैरिति जिज्ञासायां मातृकायां स्वरेषु पञ्चमत्वमुकारस्य तत्कारणतया निर्दिश्यते ग्रन्थकारेण—

कुचुटुतुपवः पञ्च उदितः कथिता इह ।
वर्गाणां बोधकाः सर्वे पञ्चमोकारसंयुतात् ॥
उकारः पञ्चमो वर्णशिक्षाक्रमे प्रदर्शितः । इति ।

जिह्वामूलीयस्योपध्मानीयस्य च कश्चिद् वर्णो मातृकापाठगतवर्ण इव नास्ति । किमिव तदाकृतिर्लेख्येति विचिकित्सायामिह ग्रन्थकारेण—

)( गजकुम्भाकृतिः शास्त्रे उपध्मानीयमुच्यते ।
≍ इन्द्रवज्राकृतिः किन्तु जिह्वामूलीयमुच्यते ॥

इत्याकृतिर्निरदेशि व्याकरणान्तरसमुल्लिखिता । एवं तावन्नूनं ग्रन्थोऽयं व्याकरणादिविविधशास्त्रमन्थनविभावितो विलसति । अनेकत्र प्रमाणानि समुदाहृतानि, बहुत्र च तानि स्वयमेवोहितानि । अनुशीलयद्भिर्ग्रन्थेऽस्मिन् प्रतिपृष्ठं विश्लेषणात्मकं किमपि नावीन्यं समधिगंस्यत इति नः प्रत्ययः ।

कटुमहौषधं सितालेपेनेव पाणिनीयं व्याकरणमिदं हृद्यपद्यमुखेन प्रस्तुतं कोमलमतीनामाकर्षणाय स्यादिति विचिन्त्य सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयेन प्रकाशनार्थमङ्गीकृतम् । श्लोकसिद्धान्तकौमुदीरूपस्य तस्यास्य पूर्वार्द्धमेतर्हि सरस्वतीभवनग्रन्थमालायाश्चतुर्दशोत्तरशतपुष्पतया विकचितं विद्वद्वराणां जिज्ञासूनां च करकञ्जयोः समर्पयतो मे जञ्जन्यते नूनममन्दानन्दसन्दोहः । एतदीयमुत्तरार्द्धमपि मुद्रयमाणमचिरादेवाक्षि-साक्षीभवितेति विज्ञाय मुदमाप्स्यन्ति विचक्षणाः । प्रयासेनानेन जिज्ञासुजना ध्रुवमुपकृताः, सुधीजनाश्च सम्प्रीणिताः स्युरिति बाढं प्रत्येति

दीपावल्यां २०३८ वै०
वाराणस्याम्
( २७–१०–८१ ख्री० )

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः
अनुसन्धानसंस्थानस्य

# भूमिका

शब्दा नाभिनवा मिलन्ति महतां मोदाय जाने तथा
भावा नापि समुद्भवन्ति तरला निःस्वोऽस्मि ताभ्यामहम् ।
कर्तव्यं करणीयमेव समये तस्मात् पुराणं पदं
भावं चापि नयन् लिखामि महतामग्रे निजां भूमिकाम् ।।

विद्वत्प्रेमप्रसन्नताफलकृते नास्त्यत्र कश्चिद् गुणः
सन्तः सन्तु तथापि मोदमनसः सौजन्यवत्त्वादिह ।
सौजन्यं तु तदेव लोकविदितं त्यक्त्वाऽपि सम्प्रार्थनां
मोदन्तेऽतितरां कृतिं विलोक्य कृतिनां शास्त्रीयवार्तान्विताम् ।।

अयि सद्योऽनवद्यविद्याविद्युद्विद्योतद्योतमानमानसाः सकलशास्त्रीय-पदवाक्यसिद्धिकारणं व्याकरणं विद्वांसः ।

सर्वथा सर्वेषां विदितचरमेवास्ति यन्निखिलमहीवर्तुलमुखतिलकायमानो वैयाकरणसिद्धान्तकौमुदीनामा ग्रन्थः समस्तानेव व्याकरणग्रन्थान् निर्मथ्य व्याकरणपठनार्थिनां विद्यार्थिनामुपकृतये तत्रभवता श्रीभट्टोजिदीक्षितेन विनिर्मितः सर्वेषामेव विपश्चितां परमानन्दमनुभावयतीति ।

पूर्वकाले भगवच्छ्रीपाणिनिमुनिप्रणीताया अष्टाध्याय्याः पठनपाठनप्रणाल्ये-वासीदिति परम्परया श्रूयते मन्यते च । तत्पठनेनैव जनाः पण्डिता भवन्ति स्म । तदवस्थायां श्रीपाणिनिकृताष्टाध्यायी सूत्राणामध्ययनाध्यापनकालेऽध्येतॄणाम-ध्यापकानाञ्च तदर्थज्ञाने पूर्वपरानुसन्धानादिबहुव्यापारेण तथा सूत्राणामुदाहरण-प्रत्युदाहरणपदानामनुसन्धाने महत्कष्टमासीदिति विज्ञायानुभूय च व्याकरण-कर्तॄणां मुनित्रयाणां ग्रन्थान् तथा काशिकाद्यनेकव्याकरणग्रन्थान् निर्मथ्य पर्यालोच्य च सकलजनहितकामनया कृपालुना श्रीमता भट्टोजिदीक्षितेन सूत्रवृत्त्युदाहरणप्रत्युदाहरणप्रदर्शनपरा सिद्धान्तकौमुदी विरचिता । तदुक्तं तेन स्वयमेव—मुनित्रयं नमस्कृत्येत्यादीति ।

सिद्धान्तकौमुद्या निर्माणानन्तरमेव प्रायस्तट्टीकाभूतानां शब्दरत्नमनोरमा-शब्देन्दुशेखर-परिभाषेन्दुशेखर-बृहन्मञ्जूषा-लघुमञ्जूषाद्यनेकग्रन्थानां निर्माणं समपद्यत । यद्यप्येते टीकाग्रन्थाः सिद्धान्तकौमुद्या एव स्पष्टार्थं प्रतिपादनाय

विनिर्मिताः, कौमुद्याश्च सर्वथा एतेषां ग्रन्थानां सम्बन्धोऽपेक्ष्यत एव; किन्तु तथा नैव दृश्यते। ते ग्रन्थास्तु पृथक् तिष्ठन्त एव स्वीयस्वीयास्तित्वं नीत्वा प्रकाश्यन्ते पाठ्यन्ते च मूलग्रन्थसिद्धान्तकौमुदीतः कियत्क्रोशं दूरं गत्वा कौमुद्या अनपत्यायमाना भवन्तः केवलं पुस्तकालयशोभामेव वर्धयन्ते वा केषाञ्चित्परिगणितानां प्राज्ञानां सविधे तिष्ठन्ति। अतस्तत्तट्टीकाग्रन्थविशिष्टज्ञानेन छात्रा वञ्चिता एव भवन्तीति नाप्रत्यक्षमिदानीम्।

अपरञ्च सिद्धान्तकौमुद्याष्टीकाभूतानां सर्वेषामेव ग्रन्थानां मूलतोऽप्यधिकाधिककाठिन्यं वावर्धमानमभूत्। ते तु इन्द्रस्य टीका विडौजेति लोकोक्तिमनुसरन्तोऽध्येतॄणां कृतेऽनुपयुक्ता इव प्रतीयन्ते। एतेनानुमीयन्ते पौर्वकालिकाचार्य्याणां लेखकानां शास्त्रीयविषयवस्तुबोधने काठिन्यं प्रियमासीदिति। तत एव जटिलक्लिष्टपदप्रयोगैर्विषयान् सग्रन्थीन् कृतवन्तः कठिनग्रन्थलिखनेनैव स्वस्वपाण्डित्यप्रदर्शनं कर्तुमीहाञ्चक्रिरे। मन्यन्ते च समालोचकास्तत एव संस्कृताध्ययनस्य दिनप्रतिदिनं ह्रासोऽभूदिति। एतेन वचसा नाक्षिपामो वयं पूज्यपादान् प्राचीनाचार्यवर्यान्, किन्तु तेषां काठिन्यं प्रियमासीत्, ते च भाविसन्तानानुग्रहधिया नैव सरलतमशिक्षणमार्गान् प्रदर्शितवन्त इति स्पष्टो विषयः।

संस्कृतं प्राकृतञ्चापि स्वयमुक्तं स्वयंभुवेत्यादि वचनेन संस्कृतभाषायाः सर्वथा सर्वभाषातः प्राथम्यं प्राचीनतमत्वमक्षुण्य मिति कथने स्वीकारेण वा नैवास्ति केषाञ्चिदपि विचिकित्सा। भाषासु अस्या देवगिरः प्राथम्यं भाषाविज्ञानपण्डितैरपि बहुत्राधिकाधिकं प्रतिपादितमेवास्ते। संस्कृतभाषाया ज्ञानमन्तरेण भारतीयत्वमार्यत्वं वा स्वस्मिन् कथयितुं ज्ञातुं वा नैव प्रभवन्ति प्रभविष्यन्ति वा कदापि केऽपि जनाः। यतः संस्कृतभाषाऽध्ययनेनैव प्राक्तनाचार्य्याणां जपतपःपरिपूतस्वान्तानां साक्षात्कृतब्रह्मपदानामृषीणां मुनीनां चारित्र्यज्ञानं तदुक्तपरःसहस्रस्मृतीनीति पुराणेतिहासकाव्यकोषाणां ज्ञेयग्रन्थानां बोधो भवितुमर्हति।

सर्वविधज्ञानविज्ञानकर्तव्याकर्तव्यबोधिकाया भगवत्याः श्रुतेस्तात्पर्यावधारणं संस्कृतभाषाज्ञानमन्तरा सर्वथाऽसंभव एव। एतेषां पूर्वाचार्यकृतग्रन्थानां सम्यग् ज्ञानाय संस्कृतव्याकरणाध्ययनं परमावश्यकमिति नैव तिरोहितम्। यतश्शब्दार्थज्ञानाय व्याकरणशास्त्रस्यैवाखण्डं प्रभुत्वमस्तीति श्रीपतञ्जलिप्रणीतव्याकरणमहाभाष्ये पस्पशाह्निके प्रारम्भ एव रक्षोहागमलघ्वसन्देहाः प्रयोजनमित्यादि प्रघट्टकेन व्याकरणाध्ययनस्य नितान्तमेवावश्यकत्वं प्रदर्शितमस्ति।

अथास्य व्याकरणशास्त्रस्याध्ययनप्रसङ्गे नवनवगुणरागी प्रायशः सर्वलोक इत्याद्याभाणकेन साम्प्रतिके प्रगतिशीले संसारे सर्वेषामेव जनानां सर्वत्र सारल्यं सौविध्यं परमापेक्षितं दरीदृश्यते। अत एव समयानुसारश्चैत्रिकचालचित्रिक-शिक्षायाः प्रचारः प्रसारः क्रमेण सम्पद्यमानः सम्पत्स्यमानो वा श्रूयते दृश्यते चापि। नेदानीन्तनानां जनानां तत्त्वालोकसदृशप्रारम्भा मनोरञ्जनाय बोभूयन्ते इत्याधुनिकानां विशिष्टविज्ञानां प्रतिप्रान्तं गोष्ठीषु विचारासञ्चार प्रसाराश्चलन्ति प्रसरन्ति प्रख्याप्यन्ते च सर्वकारैरपि। राजस्थानप्रदेशे योधपुर-संविभागे बहुष्वेव मण्डलेषु शिक्षणगोष्ठीकार्येषु शिक्षकप्रशिक्षणकार्ये प्रशि-क्षकपदं प्राप्य लेखकः स्वयमप्यन्वभीभवत् यत् साम्प्रतिकाश्छात्रा शिक्षकाश्च किं कामयन्ते इति।

तदवधार्य च्छात्राणां संस्कृताध्ययनेऽध्यापकानां पाठनेऽपि सौकर्यं सारल्यं सरसत्वं च यथासंभवेदिति कामयमानः किञ्चिद्वर्षपूर्वमहं लघुकौमुद्याश्छायामा-श्रित्य बालसंस्कृतश्लोकव्याकरणं व्यरीरचं प्राचकाशञ्चापि। यदवलोक्य संस्कृत-पण्डिताश्छात्राश्च भृशमतूतुषन्। राजस्थानस्य समाजशिक्षाविभागीयनिर्देशकेन तत्पुस्तकं स्वीकृतं परिपत्रितञ्चापि। तस्मादेव दिनान्मनसि महती उत्कण्ठा उत्थिता जागरीता चाभूद् यत् पाणिनीयव्याकरणस्य सिद्धान्तकौमुद्याः संस्कारो नवीनविधिना कर्तव्यो मया यश्च संस्कारो मूलग्रन्थेन सर्वथा सम्बद्धः सन् तद्विषयवस्तूनि साधु सम्यक् प्रतिपादनं कुर्यादिति।

'शनैः पन्थाश्शनैः कन्याः शनैः पर्वतलङ्घनम्' इत्याभाणकानुसारं कार्यं प्रारब्धम्। मध्ये मध्ये बहुविघ्नाः समुपस्थिताः; किन्तु प्रारभ्य चोत्तमजना न परित्यजन्तीति भर्तृहरिसूक्तिं सर्वदा स्मरन् कार्ये निरत एवाभूवम्। क्रमशश्चतुः-पञ्चवर्षेषु संग्रन्थनप्रणाल्याधारेण सर्वसूत्रवार्त्तिकपरिभाषाणां प्रतिपाद्यविषयान् सर्वथा गृहीत्वा द्वादशसहस्रसंख्याकं श्लोकसिद्धान्तकौमुदीनामानं ग्रन्थमेतं विरचय्य बहूनामेव शास्त्रशिक्षाविशेषज्ञानां व्याकरणपण्डितानां पुरतोऽदीधर-मवालुलोकञ्च। राजस्थाने जयपुरमहाराजस्य संस्कृतमहाविद्यालये तत्रत्याचार्यान् पाण्डुलिपिं प्रादर्शयम्, ते चाभूतपूर्वोऽयं ग्रन्थ इत्यादि कथनेन सन्तोषान् प्राचीकटन्।

ततो विहारप्रदेशे प्रसिद्धदरभंगायां श्रीकामेश्वरसिंहसंस्कृतविश्वविद्याल-यस्य प्राचार्याणां तथा विश्वविद्यालस्य तात्कालिक कुलपति प्रख्यातनामधेय डा० श्रीरामकरणशर्मणां सन्निकटेऽस्य ग्रन्थस्य पाण्डुलिपिं प्रसार्यापीपठं ते च

विद्वांसः श्रुत्वा दृष्ट्वा ज्ञात्वा च प्रामोमुद्यन्त । सर्वविधविद्याव्यसनिनो गुणग्राहिणः श्रीरामकरणशर्माणोऽस्य प्रकाशनभारमपि स्वीकृतवन्तः; किन्तु समयाभावात् किञ्चित्कारणाच्च तेषां सविधेऽहं समये नैव समुपस्थितः ।

इत्थं घूर्णमानः कदाचिद्भारतस्य राजधानीम् "हस्तिनापुरं" दिल्लीं गत्वा तत्र स्थितश्रीलालबहादुरशास्त्रिसंस्कृतविद्यापीठस्य प्राचार्यडा०श्रीमण्डनमिश्रस्य निश्रायां समुपस्थाय ग्रन्थस्य पाण्डुलिपिं प्रादर्शयम्, दृष्ट्वा श्रुत्वा च हृष्टाः सन्तस्ते मिश्रवर्याः सह प्राध्यापकैः प्रोदसीसहन्निम्नलिखित किञ्चिद् वाक्येन ।

**शीघ्रं प्रकाशतां यातु श्लोकसिद्धान्तकौमुदी ।**
**छात्राणामुपकाराय रचिता सरला बहुः ॥**

तत्पश्चाद् वाराणसीमागत्य श्रीविश्वनाथं प्रणम्य सर्वथा सर्वत्र जगति प्रसिद्धस्य श्रीसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिं प्रसिद्धवैदुष्यवन्तं श्रीबदरीनाथशुक्लमहोदयं स्वकीयग्रन्थस्य पाण्डुलिपिमदीदृशम् । संस्कृतविद्याजीवातूनां सर्वदा संस्कृताध्ययनाध्यापनतः संस्कृतस्वान्तानां शुक्लमहोदयानां तथाऽत्रत्यानुसन्धानसंस्थानस्य निदेशकानां श्रीवागीशशास्त्र्युपाह्वानां डॉ० भागीरथप्रसादत्रिपाठिनां गुणग्राहितयाऽस्य श्लोकसिद्धान्तकौमुदीग्रन्थस्य प्रकाशनमस्यां काश्यां जातमिति तेषामाभारान् प्रकटयन् कृतिमिमां सर्वविपश्चितां पुरतः समुपस्थापयतो मोमुद्यते मानसं मे ।

यद्यपि सगुणं निर्गुणं वापि स्वकाव्यं कस्य न प्रियमिति श्रीगोस्वामिना तुलसीदासेन कथितमस्ति; तथापि—'आ परितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम्' इति कविकुलकमलदिवाकरश्रीकालिदासस्य वचनानुसारं विज्ञानां कौमुदीकोविदानां प्रसन्नतैवास्य ग्रन्थसुवर्णस्य शुद्धितायै निकषोपलमिति श्रीमतां साधुवादं यत्किञ्चिद्वादं वा प्रतीक्षमाणो जेघ्रीयमाणोऽस्मि । अस्याभिनवग्रन्थस्य निर्माणे कियत्साफल्यं प्राप्तवान् लेखक इति सहृदया आप्ता विद्वांस एव वक्तुं प्रभवन्ति ।

यद्यपि हस्तावनद्धकङ्कणदर्शनाय नैव क्वचिद् दर्पणस्य प्रयोजनं जायते इति लोकोक्तिरस्ति । प्राज्ञाः स्वयमेव सर्वं द्रक्ष्यन्ति ज्ञास्यन्ति च; तथापि सङ्क्षेपेणास्य ग्रन्थस्य नवीनता स्पष्टतोपयोगिता च किञ्चित्प्रदर्श्यते । पश्यन्तु परामर्शकाः

१—सर्वप्रथमं संज्ञाप्रकरणादावेव इति हल्संज्ञेति प्रतीकमादायफक्किका स्फोटनम्—

**हलन्त्यमित्यस्य च शाब्दबोधे किं हल्पदं ज्ञातुमनाः समुत्कः ।**
**निरीक्षते सूत्रमिहादिरन्त्येनेत्यादि तत्रापि किमित्पदार्थः ॥१॥**
**तज्ज्ञातुकामः पुनरेति पूर्वं हलन्त्यमित्यत्र च दोष एषः ।**
**परस्परापेक्षकदोषमेनं हतुं . हलन्त्यं क्रियते द्वितीयम् ॥२॥**
**हलोऽन्त्यमित्स्यादिति बुध्यतेऽर्थस्तेनात्र सर्वं किल सङ्गतं स्यात् ।**
**एवं न कस्यापि भवेदपेक्षाऽन्योन्याश्रयो नैव कथञ्चिदस्ति ॥३॥**

२—जिह्वामूलीयोपध्मानीयपदार्थयोः पार्थक्यं कुत्रापि केनापि नाद्यावधि-प्रदर्शितं लघुकौमुद्यां सिद्धान्तकौमुद्याञ्च । सर्वत्र प्रकाशितपुस्तके समानाकारं प्रदर्शितमस्ति, तन्नोचितं यतो जिह्वामूलीयमुपध्मानीयञ्च वस्तु विभिन्नमस्ति, न तु समानम्, तयोः स्पष्टीकरणं श्लोकसिद्धान्तकौमुद्यां नवीनं वस्तु—

**)( गजकुम्भाकृतिः शास्त्रे जिह्वामूलीयमुच्यते ।**
**⌣⌢ इन्द्रवज्राकृतिश्चिह्नमुपध्मानीयमुच्यते ॥**

इत्यनयोर्भेददर्शनं सङ्केतभेदेन कर्तुमुचितमस्ति, तत्केनापि नैव प्रदर्शितमिति विमृश्यतामाचार्यवर्यैः । यद्यप्युभयत्रार्द्धविसर्गसादृश्यं विद्यते, किन्तु तयोः प्रदर्शन-मुपर्यधोमुखं कृत्वाऽर्द्धचन्द्रसदृशचिह्नं तथावामदक्षिणयोरास्यं कृत्वाऽर्द्धचन्द्र-सदृशचिह्नं बोधव्यमस्ति, नतु समानाकारकं चिह्नम् ।

३—एवं स्थानप्रयत्नविवेके बाह्यपदेन किं ज्ञेयम्? यतो मुखाद्बहिर्बाह्यमिति मुखाद्बहिस्तु किमपि स्थानं प्रयत्नो वा वर्तत एव नहीति शाशङ्कमानाश्छात्रा भवन्ति, तस्य स्पष्टीकरणं छात्राणां पाठकानां कृतेऽत्यावश्यकं वस्तु, तच्च सम्यक् प्रदर्शितमस्ति ग्रन्थेऽस्मिन् ।

**वर्णोत्पत्तेरत्र पश्चान्मूर्ध्नि प्रतिहते सति ।**
**विवृते खलु प्राणाख्ये वायावुत्पद्यते च यत् ।**
**तदेव बाह्यमित्युक्तं विवारादिदशकमित्यादि ।**

विमर्शः सर्वथा नवीनं वस्तु महदुपयोगि च छात्राणां सौकर्येण ज्ञानाय दर्शितमस्ति ।

४—कुचुटुतुपु एते उदितः । अत्र कुचुटु-इत्यादिना तत्तद्वर्गाणां पञ्चानामेव कथं बोधः? अत्र का वाचो युक्तिरिति शङ्कायामुदित्सवर्णग्रहण-मित्यादिना नैव समाधानं जायते, यतः सवर्णास्तु अन्येऽपि वर्णा भवन्ति, तेषां ग्रहणं कुतो न जायेत ? । तदस्याः शङ्कायाः साधूत्तरमस्मिन् ग्रन्थे प्रदत्तमस्ति ।

लौकिकानादिवर्णशिक्षाक्रमे उकारस्य पञ्चमत्वमस्ति यथा—अ आ इ ई उ ऊ इत्यादिशिक्षणे। तदत्र पञ्चमोकारवर्णसंयोगात् ककाराद्यारभ्य पञ्चानामेव बोधो भवतीति तात्पर्यं केनापि न प्रदर्शितमस्तीति सर्वथा नवीनं वस्तु।

५—नाज्झलाविति सूत्रे स्थितायाः फक्किकायाः स्फोटनं पश्यन्तु तावत्—

नन्वाकारस्य हकारस्य सावर्ण्यं न निषिध्यते।
नाज्झलाविति सूत्रेऽस्मिन् वर्णसामाम्नायिकग्रहः॥
विश्वपाभिः प्रयोगेऽस्मिन् कथं ढत्वं न जायते।
इत्याशङ्कादशायां वै उत्तरं प्रतिपाद्यताम्॥
कालसमयवेलासु तुमुन् सूत्रप्रमाणतः।
नाज्झलाविति सूत्रेऽत्र आकारोऽपि च बुध्यते॥
आकारस्य हकारस्य सावर्ण्यं वारणं ततः।
विश्वपाभिः प्रयोगेऽस्मिन् ढत्वकार्यं न जायते॥
हे यियासो पिपासो हे भाष्यप्रयोगदर्शनात्।
प्लुताऽकारोऽपि प्रश्लिष्टः सावर्ण्यं न तयोरपि॥

इत्यादिरूपेण संज्ञाप्रकरणे एव कतिविधानि नवीनानि वस्तून्युपनिबद्धानि सन्ति।

६—एवं सन्धिप्रकरणेऽकारस्य प्रथमोपस्थितत्वात्प्रथममकारस्वरस्यैव सन्धिकार्यप्रदर्शनं कर्तव्यमस्तीति प्रथमम्–"अकः सवर्णे दीर्घः" सूत्रमेवात्र धृतमस्ति। सिद्धान्तकौमुद्यां सवर्णदीर्घसन्धिं परित्यज्य प्रथमं यण्सन्धिप्रदर्शनस्य किं कारणमिति केनापि कुत्रापि नैव कथितमस्मिन् ग्रन्थे, तदुत्तरमित्थं प्रदत्तमस्ति—दीर्घेकारवर्णस्य सावित्रीबोधकत्वं विद्यते सावित्रीदेव्याश्च जगज्जननीत्वमिति दर्शनायैव श्रीदीक्षितेन प्रथमं 'सुध्युपास्यः' इति प्रयोगस्य साधनं कृतमिति।

७—'अचि किं ? कुमारी शेते' इति फक्किकास्फोटनं विलोकनीयम्। पुनश्च—प्रादूहोढोढ्येषैष्येष्विति वार्त्तिकस्थायाः फक्किकायाः समाधानं पश्यन्तु तावत् किञ्चित्—

अर्थवद्ग्रहणेनैव क्वापि नानर्थकग्रहः।
व्रश्चभ्रस्जेति सूत्रेऽस्मिन् राजिभ्राजिद्वयग्रहात्॥

तस्माद्रूढपदेनात्र क्तान्तस्यैव ग्रहो भवेत् ।
क्तवत्वन्तपदस्यैकदेशो न गृह्यते ततः ।।
प्रोढवानेव रूपं स्यात् प्रौढवान् न प्रयुज्यते ।

इत्याद्यनेकफक्किकास्थलं सर्वथा सरलं प्रतिभायात् पाठकानाम् ।

८—अजन्तपुंलिङ्गप्रकरणमादित एव द्रष्टव्यं सर्वथा नूतनतां रोचकतां नयन् ग्रन्थः समुत्साहयति च्छात्रान् न वा । कृत्तद्धितसमासाश्चेति सूत्रे चकार-पदप्रयोजनं नैव केनापि कुत्रापि प्रदर्शितमस्ति अस्यां श्लोकसिद्धान्तकौमुद्यां तदुत्तरमित्थमस्ति—

अत्र चकारशब्देन निपाताव्ययसंग्रहः ।
तेषामपि यथासंज्ञा तदर्थं क्रियतेऽत्र च ।।

९—अत्रत्या फक्किका पूर्वसूत्रेण सिद्धे समासग्रहणं नियमार्थमित्यत्र प्रतिपादितं वस्त्वेवमस्ति—

ननु समासकार्येऽपि धातुप्रत्ययभिन्नता ।
वर्तते पूर्वसूत्रेण संज्ञा स्यादेव तत्कथम् ।।
समासग्रहणञ्चात्र क्रियते तद्वदाधुना ।
नियमार्थमिदं तावत् समासग्रहणं भवेत् ।।
संघाते यत्र दृष्टं स्यात् पूर्वो भागः पदं तथा
उत्तरः प्रत्ययो नैव तस्य संज्ञा भवेद्यदि ।
समासस्यैव नान्यस्य वाक्यस्य जायते क्वचित् ।
तस्माद् गोविन्दधेनुं तामभ्याजादौ न संज्ञया ।
सुपां लुग्जायते तेन सर्वमिष्टं सुसिद्ध्यति ।
समासग्रहणं तावत् स्वांशे साफल्यमश्नुते ।
जन्मवान् प्रत्ययान्तोऽस्ति नियमेनैव वार्यते ।
बहुपटवोऽत्र पूर्वपदं न तन्निवार्यते ।

इत्यादौ नवीनता कठिनतमविषयस्यापि स्पष्टप्रतिपादकताऽस्ति नवेति श्रीमन्तो जानीयुः ।

१०—रामस्यैकत्वात् तत्र द्विवचनादिविभक्तिप्रयोगः कथमिति शङ्कायां किमुत्तरम् ? यद्यपि लघ्वीयं शङ्का तथाप्युत्तरं प्रदेयमेव भवति छात्राणां तदुत्तरं सरलप्राञ्जलपद्येन रामशब्दरूपप्रदर्शनसमये कृतमस्ति ।

यथा—

रामः श्रीभगवान् लोके रमन्ते यत्र योगिनः ।
रामौ दाशरथिश्चाथ कृष्णाग्रजश्च कथ्यते ॥
रामाः परशुरामेण सह भवन्ति ते त्रयः ॥

इत्यादिरूपेण नवीनं नवीनं वस्तूपस्थाप्य समाहितं सत्छात्राणां कौतूहलं विदधद्विराजति सर्वत्रैव ।

११—एवं क्रमशः अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ इति चतुर्दशस्वरवर्णान्तशब्दानां रूपाणि प्रत्येकविभक्तौ सम्यक् संसाध्य सरल-प्राञ्जलपद्यैः प्रयुक्तानि छात्राणामभ्यासकार्याय कियन्त्युपकारकाणीति कृपया ५४ पृष्ठे रामशब्दरूपं बालशब्दरूपं ६५ पृष्ठे गोपाशब्दरूपं ६७ पृष्ठे हरिशब्द-रूपं८०पृष्ठे भानुशब्दरूपाणि पिपठिषन्तु प्रेक्षकाः । सूत्रप्रवेशपूर्वकं रूपाणां साधनं कृत्वा तेषाञ्च प्रयोगो द्रष्टव्य एव किञ्चिदत्रोदाहरणरूपेण दर्श्यते चापि—

बालः पठति शालायां बालौ तौ पठतः सदा ।
बालाः पठन्ति ते सर्वे बालं पाठयते गुरुः ॥
बालौ बालान् समाहूय बालेन सह गच्छति ।
बालाभ्यां कोऽपि बालैः सह खेलति शिक्षकः ॥
बालाय मधुरं दत्ते बालाभ्यां द्वे च पुस्तके ।
बालेभ्यस्तानि सर्वाणि देहि पक्वफलानि च ॥ इति ।

पतिशब्दः—

पतिः प्राणसमः स्त्रीणां पतयः सुखनाशकाः ।
पतिं सा सेवते धन्या पतीन् करोति पुंश्चली ॥
पत्या सह सती याति पतिभिः सा वराङ्गना ।
पत्ये सा रोचते धन्या पतिभ्यो द्रौपदी प्रिया ॥
पत्युः पृथङ् न शोभाऽस्ति पतिभ्यः सा पलायते ।
पत्युः प्रियतमा राधा पतीनाञ्च नृणां सुखम् ॥
पत्यौ भक्तिं करिष्यामि पतिषु वचसां गुणाः ।

द्विवचने—

पती पती पतिभ्यां त्रिः पत्योः पत्योः स्थलद्वये ।
प्रथमादिक्रमाद्रूपं द्विवचनेषु जायते ॥

अत्र विशेषवस्तु--

पतिना वानरेन्द्रेण सीतायाः पतये नमः ।
इत्यादि रूपसिद्धचर्थं घिसंज्ञा केवलेऽपि च ॥
आर्षत्वं वा विजानीयात् सूत्रानित्यत्वमस्ति वा ।
संज्ञापूर्वककार्यं वा अनित्यमिति कथ्यताम् ॥

इत्यादि सर्वत्र प्रकरणे वैशिष्ट्यम् सर्वदाऽपेक्षितं प्रदर्शनीयं वस्तु वर्तत एव ।

इत्थमजन्तहलन्तसर्वविधशब्दानां सविशेषं ग्रन्थग्रन्थिस्फोटनपूर्वकं साधनं प्रयोगं च विधाय, अव्ययगणः सर्वथा नवीनतामाकलयन्नमरकोशवत्सुलभाभ्यासयोग्यतां प्राप्नोत् ।

१२—स्त्रीप्रत्ययप्रकरणे स्त्रियामित्यधिकारसूत्रत एव सर्वथा नवीनतां प्राप्य पाटवं प्रापयति । अत्र स्त्रीत्वविवेचने किं तावत् स्त्रीत्वं कतिविधं तद् वागुपानत्स्रगित्यादौ कथं स्त्रीत्वमित्यादि विमर्शो विशेषयोग्यताऽऽधायकः । यथाऽत्र प्रारम्भिको विचारः ।

शास्त्राद्भवति लोकाच्च शब्देषु लिङ्गनिर्णयः ।
पारिभाषिकमप्यस्ति क्वचिद् दारादिनामनि ॥
दाराः पुंस्येव भूम्न्येव कोशेषु कथितं यथा
अर्थनिष्ठं शब्दनिष्ठं लिङ्गं द्विधाऽत्र बोध्यते ॥
किञ्चित्पदेऽर्थतः स्त्रीत्वं क्वचित्तु शास्त्रबोधनात्
शास्त्रे त्रयो गुणाः ख्याताः सत्वं रजस्तमस्तथा ।
तेषामुपचये पुंस्त्वं स्वल्पत्वे स्त्रीत्वमिष्यते ।
सर्वेषां समतायाञ्च नपुंसकमिति स्थितिः ।
स्तनकेशवती नारी लोमशः पुरुषः स्मृतः ।
एतयोरन्तरं यच्च तन्नपुंसकमुच्यते ।
स्रग्वागुपानदित्यादौ स्त्रीत्वं पाणिनिनोच्यते ।
शासनं शास्त्रकारस्य व्यवहारेण गम्यते ।

इत्यादि पद्यप्रघट्टकेन सर्वं कथं स्पष्टीकृतमिति तत्र तत्र पश्यन्तु पाठकाः ।

१३—अजाद्यतष्टाविति सूत्रे फक्किकायाः सरलं लघूत्तरं तावद् द्रष्टव्यम् —

विशेषणादजादीनां स्त्रीत्वस्य पश्चाजी इति ।
अत्र स्त्रीत्वं समाहारे तस्माट्टाबत्र न जायते ।
पञ्चानामजानाञ्च समाहारोऽत्र विग्रहः ॥

एवमेव—बहुकुरुचरा, कटुका वक्ष्यमाणेत्यादि फक्किकानां श्लथीकरणं सर्वथाऽऽकर्षकं शास्त्रार्थपूर्वकञ्चास्ते। अस्मिन् स्त्रीप्रत्यये वैयाकरणानां मते जातिनिर्णयो गुणपदविवेचनं कीदृशं स्पष्टार्थप्रतिपादकमिति द्रष्टव्यम्।

१४—कारकप्रकरणे प्रारम्भ एव कारकपदपरिष्कारविचारः कृपयाऽवश्यं द्रष्टव्यः। सर्वथा मतमतान्तरेण शास्त्रार्थपूर्वकं सर्वप्रदत्तमस्ति। यदवलोक्य विद्वांसः प्रमोदेरन्नेवेति मम विश्वासः।

'कारके' इतिसूत्रं 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे' प्रथमा इत्यतः पूर्वमेव प्रदेयमासीत् किमर्थं तत् कर्तुरीप्सिततमंकर्मेति सूत्रसमीपे श्रीभट्टोजिदीक्षितेन दत्तमिति प्रश्नस्य किमुत्तरम्? दद्यात्कोऽपि। अस्मिन् ग्रन्थे तदुत्तरं मूले एव कृतमस्ति तन्निरीक्ष्यताम्। कर्तृकर्मकरणहेतुसम्प्रदानापादानादिपदपरिष्कारस्तत्तत्स्थले विलोक्यतां सर्वत्र वैशिष्ट्यं स्थले स्थले नवीनपदार्थप्रदर्शनाऽपूर्वता रोचकता पाठकानां मनांसि मोदयिष्यन्त्येव।

तावदेकमुदाहरणं पश्यन्तु तमब्ग्रहणं किम्? गङ्गायां घोषः।

**पदं कारकं पूर्वतश्चानुवृत्तं**
**ततः कारकार्थः समायाति एव।**
**स्थितं कारकं स्यात् प्रकृष्टार्थदायि**
**तदर्थं तमप् सूत्रमध्ये किमर्थम्॥ १।**
**तदस्मात्प्रकारात्तमब् व्यर्थमेव**
**नवं न्यायमेकं समाविष्करोति।**
**प्रकर्षो न चाश्रीयते शब्दगम्यः**
**क्वचित्कारकस्याधिकारे तथा च॥ २।**
**भवेत्सप्तमी किञ्चिदाधाररूपे**
**प्रयोगेऽथवा गौणे रूपेऽत्र वाक्ये।**
**अतः पूर्ण आधारत्येव कार्या**
**विभक्तिः सदा सप्तमी नैव वाच्यम्॥ ३।**
**मुनेरस्य वासस्तटिन्यां सुराणां**
**महान् घोष एषोऽथवा नर्मदायाम्।**
**भवेत्सप्तमी गौणरूपेऽपि वाक्ये**
**न तैलं तिलेष्वादिवाक्येषु एव॥ ४।**

कारकप्रकरणे – तुभ्यं वृद्धिरिति प्रयोगे चतुर्थी केन ? रजकायवस्त्रं ददाति, रजकस्य वा वस्त्रं ददाति, शिष्याय चपेटिकां ददातीत्यादि सर्वं शास्त्रार्थपूर्वकं सरलेन प्राञ्जलेन पद्येन निर्णीतमस्ति ।

मुक्ताफलाय करिणं हरिणं पलाय सिंहं निहन्ति भुजविक्रमदर्शनाय एवं शृङ्गायहरिणं हन्तीत्यादौ च कथं न निमित्तात्कर्मयोगे इति सप्तमीत्यादि सर्वम् सम्यक् प्रतिपादितमत्र ।

कृति किम् तद्धिते मा भूत् कृतपूर्वी कटमित्येषा फक्किका द्रव्यष्टा वैशिष्ट्य-मावहति न वेति स्वयं समीक्षेरन् सुधियः । विशेषतः समासप्रकरणे महान् श्रमोऽत्र येन छात्राणां सुखेन सर्वसमासज्ञानं जायेत । कृपया २४१ पृष्ठेऽव्ययी-भावस्यप्रारम्भे बहुव्रीहिसमासस्यादौ द्वन्द्वसमासस्यादौ सर्वसमासशेषप्रकरणे ३१४ पृष्ठेऽवलोकनीयम् । समासानां चतुर्विधत्वं पञ्चविधत्वं षड्विधत्वं सप्तविधत्वं द्विविधत्वञ्चेत्यादि मतमतान्तरेण निर्णयः कृतोऽस्ति । अत्र भूमिकायां सर्ववैशिष्ट्य-प्रदर्शनमशक्यं विद्वांसः क्वचिदपि पदैकमात्रपठनेन सर्वं निश्चिनेदुरिति जानामि ।

तद्धितप्रकरणे सर्वथा सर्वेषां शब्दानां साधु सम्यक् सिद्धिप्रकारस्तेषां प्रयोगश्च कृतो विशेषतोऽपत्याधिकारप्रकरणं सर्वथा सारल्यं नीत्वाऽऽकर्षत्येव पाठकजनान् ।

एवं सुबन्तभागं (पूर्वार्द्धं) सर्वथा सम्यक् परिष्कार्य प्रदर्श्य च महता श्रमेणो-हापोहेन च तिङन्तभागस्योत्तरार्द्धस्यापि व्यावहारिकसामयिकदृष्टिमवलम्ब्य निर्माणमास्ते तिङन्तादौ सर्वथानवीनताकर्षकपदार्थविमर्शः सहर्षग्राह्यः कृतः । किमधिकं प्रत्येकं धातोः प्रत्येकलकारे शृङ्गग्राहिकया क्रियारूपाणां साधनं तेषां सामयिकव्यावहारिकरोचकपदप्रदप्रयोगाः सन्ति । एवं दशगणीस्थधातूनां रूपाणि सोपक्रमं संसाध्य प्रतिपुरुषं प्रयुज्याऽन्ते विशेषयोग्यतोपयोगिनामुणादि-गणशब्दानाममरकोषवत् सुश्लोकीकरणं दृष्ट्वा पठित्वा च छात्रा झटिति विना क्लेशेनं व्याकरणशास्त्रज्ञानं प्राप्नुयुः ।

इत्थं मुनित्रयं नमस्कृत्येत्यारभ्य इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शि-तमित्यन्तं सर्वं सपरिष्कारं सविशेषं वस्तु प्रदर्श्य श्लोकसिद्धान्तकौमुदी पूर्णा सती श्रीमतां विद्वज्जनानां मूल्याङ्कनमपेक्षते । तदिदं नवीनं प्राभृतं स्वीकृत्य

पीतव्याकरणरससुधा बुधा अस्या नवकौमुद्याः प्रचारणेन मामनुग्रहीष्यन्त्याशासानोऽस्मि ।

अथाऽस्य प्रकाशनकार्ये सर्वथाऽसहाय आसम्, यत्ने कृतेऽपि वर्णसंयोजकजनभ्रान्त्या ममैवान्यद्रष्टुर्वा दृष्टिदोषतया क्वचित् क्वचित् त्रुटिरजायत, सा च त्रुटिः शुद्धिपत्रावलोकनेन मार्जनीया कृपया । 'गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः' इति संस्मर्य क्षमन्तां पाठकाः ।

अथास्य ग्रन्थस्य प्रकाशनकार्यं श्रीमतां सहृदयविज्ञवर्याणां **श्रीगौरीनाथशास्त्रिणां** कुलपतित्वकाले सम्पन्नमिति तेषामाभारान् प्रकटयन्नभिनन्दामि तत्कार्यकुशलतां तांश्च । विश्वविद्यालयस्यानुसन्धानसंस्थानर्निदेशकस्य बहुम्युत्पन्नस्य **श्रीवागीशशास्त्रिणो डॉ० भागीरथप्रसादत्रिपाठिनः** साहाय्यं सौहृदं सौजन्यं सर्वदा स्वान्ते स्मरणीयं स्यादेव । तदुत्तरं ग्रन्थस्यास्य प्रकाशनकार्ये सर्वविधप्रबन्धकर्तुः प्रकाशनाधिकारिणः **श्रीहरिश्चन्द्रमणि** त्रिपाठिनो महती कृपा जातेत्यभिनन्दामि तम् ।

**उपाध्यायं घनश्यामं मुद्रणस्य प्रबन्धकम् ।**
**साधुवादेन संयुक्तं करोमि कार्यहेतुतः ॥**

अत्र काशीनिवासे वर्षं यावत् सर्वविधसौविध्यप्रदातुः स्वभागिनेयस्य साधुवेलासंस्कृतमहाविद्यालयस्य वेदान्तप्राध्यापकश्री**भरतलालझाशर्मण**श्चिरञ्जीवित्वं कामयमानो विरमाम्यधस्तनपद्यप्रदर्शनेन ।

**अथावसाने—**

**श्रीमद्भारतवर्षशासनकलाविज्ञेन्दिराशासने**
**काश्यां संस्कृतपाठनेन महिते सं० विश्वविद्यालये ।**
**श्रीचन्द्रेश्वर ना० प्र० सिंहकृपया मुद्रापयित्वा नवं**
**श्लोकव्याकरणं ददेऽत्र सुधियो दद्युश्शुभाशीर्वचः ॥ १ ॥**

**इयं द्वादशसाहस्री सौरेशी कौमुदी नवा ।**
**छात्राणामुपकाराय जायेताभिनवा शुभा ॥ २ ॥**

श्रीकाश्यां
विजयादशम्याम्
वि० सं० २०३८

विदुषामाश्रवः
**श्रीसुरेशझाः**

# अथात्मनिवेदनम्

भाषा संस्कृतनामतः प्रथमतः प्रख्यापिता वेधसा ।
तामेनां कठिनां मृतां वदति हा !!! गोरण्डभण्डो जनः ।
अस्या देवगिरः पदं न निहितं पाठ्यत्रिभाषा क्रमे ।
तस्मात्संस्कृतरागिणः स्वयमिमामर्चन्तु पान्तूत्सुकाः ॥ १ ।

भाषेयं युवतिः सदैव सुभगा पत्या सदा सङ्गता ।
श्रीमद्व्याकरणेन पाणिनिसुतेनानेन यूना सह ।
यत्पत्युर्दृढता सदार्थपरता सैवाङ्गना शोभना
तामेनां सुरभारतीं प्रतिजनः कः प्रक्षिपेदङ्गुलिम् ॥ २ ।

वेदोऽस्तीह धनं परं सुविदितं सर्वार्यदेशेष्विह ।
वेदेनानुगृहीतमस्ति सकलं शास्त्रं पुराणादिकम् ।
तज्ज्ञानाय च संस्कृतस्य नियमाद् ज्ञानं परं कारणं ॥
तज्ज्ञानाय निदानमस्ति जगतां लोकेष्वियं कौमुदी ॥ ३ ।

ऐन्द्रं चान्द्रमतीव जर्जरमभूज्जैनेन्द्रनन्दी कृतं
लुप्तं क्वापि च दैशिकं समभवत् सारस्वतं हैमकम् ।
भ्रष्टं मुष्टि च शाकटायनकृतं गौडं शिवं वामनं
सर्वं रोदिति केवलं भुवि सदा जाहस्यते पाणिनिः ॥ ४ ।

तत्र हेतुर्वरदानम्—

मित्रे चर्षौ कृतमिह यदा सूत्रमेतत्तदैव ।
विश्वामित्रः सह भगवता प्राकटीन्मोदमानः ॥
विश्वामित्रं यदिह कृतवान् विश्वमित्रं यथार्थं
भायाद् भूयादजरममरं सर्वदा पाणिनीयम् ॥ ५ ।

तच्छात्रं समधीत्य पाणिनिमुनेर्वेदाङ्गमुख्यं स्मृतं
सर्वत्रैव सभासु विज्ञपुरतो विद्वायमाना जनाः ।
तस्मात्पाणिनिशास्त्रमेव प्रथमं सर्वे पठन्त्युत्सुकाः,
तत्सारल्यधिया प्रयत्तमिह तच्छ्रीमत्समक्षे धृतम् ॥ ६ ।

क्लिष्टं व्याकरणं जगत्सु विदितं सर्वैरिदं मन्यते
कष्टं शास्त्रमिदं स्वयं निगदितं भट्टोजिनोदाहृतौ ।
द्वौ दोषावपहृत्य पाणिनिकृतौ शास्त्रं नवीनं कृतं
सुस्पष्टं सरलं प्रसादगुणवत् कालानुगं वाञ्छितम् ॥ ७ ।

भ्रान्तं प्रान्तमनेकमेव निभृतं स्वान्तं न शान्तं तदा
राजस्थानमुपेत्य योधपुरके ख्याते सिरोहीपुरे ।
स्थित्वाऽध्यापनकार्यनिरतो गीत्वा च यत्पाठितं
तत्सर्वं प्रकटीकृतं नवगिरा श्रीकौमुदीकाव्यतः ॥ ८ ।

संग्रन्थनप्रणाल्या व्याकरणाध्यापनमपि संभवितृ ।
इति मनसैव प्रणीतं सर्वेषामेव मोदमानाय ॥ ९ ।

सूत्रार्थः प्रकटीकृतस्तदनुगं वस्तूपपाद्यं धृतं
शब्दानामिह साधनं नवनवं वाक्यं समुद्धृत्य वृत् ।
नापेक्षा क्वचिदन्यदीयवचनस्यास्तीति कष्टं विना
स्पष्टार्थप्रतिपादनाय भवितु शक्तो न किं पाठकः ॥ १० ।

ग्रन्थग्रन्थिविमोचनं सुसरलैर्वाक्यैः कृतं प्रायशः
स्थाने स्थान इहास्ति भव्यनव्यरचना क्लिष्टा स्फुटा फक्किका ।
शास्त्रार्थस्थलमेत्य पाठकजना नन्देयुरेव स्वयं
श्लोकव्याकरणं पठन्तु सरलं सञ्जीवनं पाणिनेः ॥ ११ ।

शब्दानामिह सर्वरूपमुदितं सोपक्रमं साधितं
तेषां वाक्यविधानतो झटिति तद्बोधः स्वयं जायते ।
धातूनां कथिता क्रिया प्रतिगणं संसाधिता बोधिता
खेलं खेलमधीत्य पाठकजनाः स्युर्बोधवन्तो न किम् ॥ १२ ।

भ्वादावादौ पदार्थानां स्पष्टताऽऽनन्ददायिनी ।
दशस्वपि गणेष्वत्र क्रिया नृत्यति नर्तकी ॥ १३ ।

ण्यन्त-सन्नन्त-यङन्त-यङ्लुक्षु प्रायशः क्रिया ।
एकैकस्य लकारस्य पुरुषे पुरुषेऽस्ति वै ॥ १४ ।

किमधिकम्—

शब्दरूपावली धातुरूपावली प्रयोजनम् ।
सर्वमत्र गतार्थं सत् तन्तन्यते मनोमुदम् ॥ १५ ।

सुबन्ते तिङन्ते कृदन्ते क्वचिच्च
पदानां स्वरूपं न शिष्टं विशिष्टम् ।
कथं कीदृशी चारुता तत्पठित्वा
स्वयं ज्ञायतां पाठकैर्विज्ञवर्यैः ॥ १६ ।

हस्तावनद्धनिजकङ्कणदर्शनाय
प्रायः प्रयोजनमिहास्ति न दर्पणस्य ।
प्राज्ञाः स्वयं सपदि पुस्तकदर्शनेन
जानीयुरेव कथनं न बिभाति किञ्चित् ॥ १७ ।

अत्र मम विश्वासः :—

अधीत्य मद्व्याकरणं नवीनं
बालोऽपि मालोपमपद्यपूर्णम् ।
पटुर्भवेत् संस्कृतभाषणादौ
प्रौढा युवानः कवयेयुराशु ॥ १८ ।

अत्र त्रुट्यर्थं क्षमा प्रार्थना—

नमो नमो नमो नित्यं दोषज्ञनामधारिणे ।
गुणान् विहाय यः पूर्वं दोषान् दृष्ट्वाऽतिनन्दति ॥ १९ ।

तेषामेव हि सौभाग्यात् यत्ने कृतेऽपि दूषणम् ।
विराजते क्वचित् क्वापि तद्दोषज्ञस्य भोजनम् ॥ २० ।

तस्मात्—

दोषान् दृष्ट्वा न रोषांस्ते विदृक्षेऽहं कृताञ्जलिः ।
पोषाम् वाञ्छन्तु पत्रेण सन्तोषान् कल्पयन्तु मे ॥ २१ ।

अथवा —

वैयाकरणविज्ञस्तु गुणं दोषेऽपि पश्यति ।
दुष्यतेरच् गुणं कृत्वा दोषं साधयते यतः ॥ २२ ।

तथापि—

शुद्धिपत्रं विलोक्यैव संशोध्यं पुस्तकं पुरः ।
ततोऽधीयीत मर्मज्ञः सानन्दः किन्न जायते ॥ २४ ।

काव्यादौ भाषणे लेखे गुणदोषौ सहोदरौ ।
गुणान् गृह्णन्ति दोषांश्च मार्जयन्ति सुधीजनाः ॥ २५ ।

क्वाहं मन्दमतिप्राज्ञः क्व काशी विदुषां पुरी ।
प्रकाशनञ्च यज्जातं तदेव बहु मन्यते ॥ २६ ।

क्वाति गम्भीरकौमुद्या लेखनं क्वास्म्यहं पुनः ।
गुरुदेवप्रसादेन तथापि पारगोऽभवम् ॥ २७ ।

भूमिकाभिर्भृतं नैव पत्रं माहाध्र्यसंयुतम् ।
विदुषामग्रतस्तावद् यावद्वाक्यं न शोभते ॥ २८ ।

सद्विद्याचार्यवर्यैर्विलसति मिथिला मण्डले ग्राम सांढ़ा
तद्वासी श्रीसुरेशः सकलजनमुदे ग्रन्थरत्नं प्रणीय ।
दत्ते धत्ते सहृदयविदुषामग्रतस्तन्निरीक्ष्य
साशीर्वादं प्रसादं वितरतु मनसाऽधीतिने व्याकृतौ मे ॥ २९ ।

आश्विनशुक्ला विजयादशमी
वि० संवत् २०३८

विद्वज्जनकृपाकाङ्क्षी
आचार्यसुरेशझाः
ग्रा० सांढा
पो. सुरसन्ड ( जलेश्वर सीतामढी )

# विषयानुक्रमणिका

इति पूर्वार्द्धं समाप्तम्



॥ श्रीः ॥

मैथिलश्रीसुरेशझाप्रणीता

# श्लोकसिद्धान्तकौमुदी

## संज्ञाप्रकरणम्

सुश्रीः सौम्यादेवी वाणी ।
नम्या रम्यावीणापाणिः ॥

नत्वा विद्यागुरुं देवं, महेशं व्रजमोहनम्
वैयाकरणसिद्धान्तकौमुदीं संस्करोम्यहम् ।
प्रथितपाणिनिशास्त्रमिदं नवं
सरलसुन्दरवाक्यसुगुम्फितम् ।
कठिनतामपसार्य मनोहरं
कृतमिदं पठताशु मुदेऽस्तु वः ॥

अथ संज्ञाप्रकरणम् —

व्याकरणस्य रचयिता श्रीपाणिनिमुनिः सर्वतःप्रथमम् १ अइउण् २ ऋलृक् ३ एओङ् ४ ऐऔच् ५ हयवरट्, ६ लण् ७ ञमङणनम् ८ झभञ् ९ घढधष् १० जबगडदश् । ११ खफछठथचटतव् १२ कपय् १३ शषसर् १४ हल् ॥

इति चतुर्दशसूत्राणि तपस्यया श्रीशङ्करं सन्तोष्य ततः प्राप्तवान् एतच्चतुर्दशसूत्राधारेणैव सम्पूर्णं व्याकरण शास्त्रं रचितवान् सः । तद्यथा श्रूयते—

नृत्तावसाने नटराजराजो
ननाद ढक्कां नवपञ्च १४ वारम् ।
उद्धर्तुकामः सनकादिसिद्धा-
नेतद्विमर्शे शिवसूत्रजालम् ॥

एतेषु चतुर्दशसूत्रेषु प्रथमतश्चतुर्थसूत्र यावत् अच्(स्वर)वर्णानां निर्देशः पञ्चमसूत्रतश्चतुर्दशसूत्रपर्यन्तं हल् ( व्यञ्जन ) वर्णानां निर्देशो दर्शितः तदित्थम्—अचः ( स्वराः ) नव, हलः व्यञ्जनानि त्रयस्त्रिंशदिति-शिक्षायां प्रसिद्धम् ।

सिद्धान्तकौमुद्यां—

उपर्युक्त १४ चतुर्दशसूत्रेषु अन्तिमवर्णा इत्संज्ञकास्तेषां लोपश्च जायते, ते च केवलम् अच् एच् अल् हलादिप्रत्याहार ( संक्षिप्तसंज्ञा ) प्रयोजनकाः सूत्रेषूच्चार्य्यन्ते ।

हलन्त्यम् । १ । ३ । ३

उपदेशेषु अन्त्यं हल् तदित्संज्ञकमुच्यते ।
इत्संज्ञा यस्य वर्णस्य तस्य लोपः सदा भवेत् ॥
पाणिन्याद्युपदेशेषु इत्संज्ञाऽस्ति प्रतिज्ञया ।
लोपस्तस्यापि विज्ञेयः प्रथमा स्वादिप्रत्यये ॥

आदिरन्त्येन सहेता । १ । १ । ७१

इत्संज्ञकेन अन्त्येन युक्तमक्षरमादि यत् ।
मध्यमानां बोधकं सत् स्वस्य च बोधकं भवेत् ॥

एवञ्च अच्कथनेन अ इ उ ऋ ऌ प्रभृतीनां बोधो भवति । एवमेवानेन एच् यण् अल् हल् शर् खरादि ४२ द्वाचत्वारिंशत् प्रत्याहाराः साधनीयाः ।

अत एवोक्तम् इति हल्संज्ञा ।

अत्रत्या फक्किका—

हलन्त्यमित्यस्य च शाब्दबोधे; किं हल्पदं ज्ञातुमनाः समुक्तः ।
निरीक्षते सूत्रमिहादिरन्त्येनेत्यादि तत्रापि किमित्पदार्थः ॥
तज्ज्ञातुकामः पुनरेति पूर्वं हलन्त्यमित्यत्र च दोष एषः ।
परस्परापेक्षस्वरूपदोषं हर्तुं हलन्त्यं क्रियते द्वितीयम् ।
तत्रैकशेषेण च लोऽस्ति लुप्तः हलो लकारस्य च लोप आस्ते ।
एवं न कस्यापि भवेदपेक्षाऽन्योन्याश्रयो नैव कथञ्चिदस्ति ॥

उपदेशेऽजनुनासिक इत् । १ ३ । २

अनुनासिकविशिष्टा अचः स्युरित्संज्ञकाः ।

सूत्रे दृष्टं पदे नैव अनुबन्धः इत्संज्ञकः।
इत्संज्ञाया भवेदर्थो यः परित्यज्य गच्छति॥

प्रत्याहारेष्वितां नैव ग्रहणं जायते क्वचित्।
इत्संज्ञकास्तु संज्ञार्थमुच्चार्यन्तेऽनुशासने॥

अतएव अच्प्रत्याहारे तदन्तर्वर्तिनां णकचादिवर्णानां बोधो न भवति। अत्र फक्किका—

लण् सूत्रेऽत्र लकारस्य अकार इद् विधीयते।
तं गृहीत्वा च 'र" नामा प्रत्याहारः प्रदर्शितः॥

एवं, र कथनेनात्र रलयोर्बोध इष्यते। तत्र शङ्कास्ति कस्यापि टकारो मध्यगस्त्विह। तद्बोधोऽपि कुतो नैव रकथनाद् भविष्यति? तदुत्तरं कृतं प्राज्ञैः प्रत्याहारेष्वितां नहि। ग्रहणं जायते तस्माट्टस्य बोधो न जायते। प्रमाणमुपदेशेऽनुनासिकपदं स्थितम्। न दृश्यते ककारेऽत्र परेऽचि यण् विधियतः। शब्देन्दुशेखरे प्रत्याहारोऽयं खण्डितोऽस्ति 'रः'। तस्माच्छङ्का समाधानं बुद्धिवैशद्यहेतवे।

ऊकालोऽज्झ्रस्वदीर्घप्लुतः १। २। २७

उ ऊ उ३ सदृशः कालो यस्य उच्चारणे भवेत्।
तस्य च क्रमतः संज्ञा ह्रस्वदीर्घप्लुता इति॥
एकमात्रो भवेद् ह्रस्वो द्विमात्रो दीर्घ उच्यते।
त्रिमात्रस्तु प्लुतो ज्ञेयः सम्भवन्ति स्वरेष्वमी॥

मात्रालक्षणम्—

अथवा—यावान् कालः समायाति नेत्रोन्मीलनमीलने।
तावान् कालो भवेन्मात्रा शब्दशास्त्रे विशेषतः॥
अथवा—ह्रस्वाकारस्य कथने यावान् कालः प्रयुज्यते।
तावत्पर्यन्तकालस्य मात्रानाम प्रसिध्यति॥
अ इ उ ऋ लृ पञ्चैव ह्रस्वाः मूलस्वराः स्मृताः।
आ ई ऊ ॠ ॡ चतुर्वर्णाः ए ऐ ओ औ च दीर्घकाः॥

अ आ इ ई उ ऊ आदि स्वराः सन्ति चतुर्दश १४
व्यञ्जनानि त्रयस्त्रिंशत् ३३ मातृकाशिक्षणे शिशोः ॥[१]

पाणिनीयशिक्षाशास्त्रे—

त्रिषष्टि ६३ र्वा चतुष्षष्टि ६४ र्वर्णाः शम्भुमते मताः।
स्वराः विंशतिरेकश्च २१ स्पर्शानां २५ पञ्चविंशतिः।
यादयश्च स्मृता अष्टौ चत्वारश्च यमाः स्मृताः
अनुस्वारो विसर्गश्च ᳲ ᳳ दुःस्पृष्टो लृः प्लुतः क्वचित्।

स्पष्टीकरणम्—

पाणिनिशिक्षाशास्त्रानुसारेण वर्णशिक्षाक्रमे त्रिषष्टिः ६३ चतुष्षष्टिर्वा६४वर्णाः सन्ति ते च—अइउऋ इति चतुर्णां ह्रस्वदीर्घप्लुतभेदेन द्वादश १२ भेदाः, एकेन लृ वर्णेन सह ते त्रयोदशसंख्यकाः। तत्पश्चाद् ए ऐ ओ औ इति चतुर्णां दीर्घप्लुतभेदेनाऽष्टौ भेदा भवन्ति मिलित्वा च ते एकविंशति २१ संख्यकाः स्वराः संजाताः। ४ चत्वारो यमवर्णाः, अन्तःस्थाश्च ४ चत्वारः चत्वार ४ ऊष्माणः, १एकोऽनुस्वारश्चैको१जिह्वामूलीय एक१उपध्मानीय एको१दुःस्पृष्टः१। ततःपश्चात् २५ पञ्चविंशतिर्वर्गीयाः मिलित्वा सर्वे व्यञ्जनवर्णाः ४२ द्वाचत्वारिंशज्जाताः। २१ एकविंशतिस्वरेण सह ते ६३ त्रिषष्टिसंख्यका वर्णाः प्रभवन्ति। लृकारश्च प्लुतोऽपि मतान्तरेऽस्ति तथाच ६४ चतुष्षष्टिसंख्यकास्ते ( अज्झल्वर्णाः ) भवन्ति। एवं प्रकारेण पुरातनवर्णशिक्षाक्रमे ६३ वा ६४ वर्णाः पाठ्यन्ते स्म।

उच्चैरुदात्तः—१।२।२९।

नीचैरनुदात्तः।१।२।३०।

ताल्वादिषु सभागेषु ऊर्ध्वभागेन निःसृतः।
अज् वर्ण उदात्तोऽस्ति नीचैर्जातोऽनुदात्तकः॥

---

१ अत्र लोकप्रसिद्धवर्णशिक्षाक्रमः—
अ आ इ ई उ ऊ ऋ ॠ लृ ॡ ए ऐ ओ औ अं अः।
क ख ग घ ङ। च छ ज झ ञ। ट ठ ड ढ ण। त थ द ध न।
प फ ब भ म। य र ल व। श ष स ह। क्ष त्र ज्ञ॥ इति॥

**समाहारः स्वरितः । १ । २ । ३१**

उदात्तश्चानुदात्तश्च यस्मिन्नचि समाहृतौ ।
स स्वरः स्वरितो ज्ञेयः स्वरधर्मा इमे त्रयः ॥

**तस्यादित उदात्तमर्धह्रस्वम् । १ । २ । ३२**

स्वरितस्यादितो भागः उदात्तः समुदाहृतः ।
अनुदात्तः परो भागो ह्रस्वदीर्घप्लुते स्वरे ॥
परे उदात्तस्वरिते श्रवणं स्पष्टमस्य वै ।
अन्यत्रोदात्तश्रवणं प्रातिशाख्ये प्रसिध्यति ॥
वेदव्याकरणं वस्तु प्रातिशाख्यं निगद्यते

**मुखनासिकावचनोऽनुनासिकः । १ । १ । ८ ।**

नासिकया मुखेनापि यस्योच्चारणमत्र स्यात् ।
अनुनासिकस्तु स ज्ञेयः संस्कर्तादौ निरीक्षताम् ॥
नवविधोऽत्र प्रत्येकमच् द्विधा जायते इतः ।

**तुल्यास्यप्रयत्नं सवर्णम् । १ । १ । ९**

तुल्यास्यं तुल्यप्रयत्न सवर्णाः पाणिनेर्वचः ।
समानस्थानयत्नानां सावर्ण्यं तेन जायते ॥
वर्णानस्यति विग्रहादास्यमत्र मुख स्मृतम् ।
आस्याद्बहिर्भवं बाह्यमुदात्तादि विविच्यताम् ॥
दीर्घाभावद्लृवर्णस्य भेदा द्वादश एवहि ।
एचो द्वादशभेदाश्च ह्रस्वाभावोयतोऽत्र वै ॥
यस्य वर्णस्य यस्मात् स्थानादुच्चारणं भवेत् ।
स्थानं तत्कथ्यते तस्य कण्ठताल्वादिभेदवत् ॥
[१]कण्ठ [२]तालु तथा [३]मूर्ध [४]दन्तो[५]ष्ठौ [६]नासिका [७]उरः ।
जिह्वा[८]मूलमुप[९]ध्मेति जानीत स्थाननामतः ॥
कण्ठस्थानं कवर्गस्य विसर्गस्याह्योः पुनः ।
तालुस्थानं चवर्गस्य इयशानां तथा भवेत् ॥
मूर्धस्थानं टवर्गस्य ऋरषाणां तथैव च ।
दन्तस्थान तवर्गस्य लृलसानां पुनश्च तत् ॥
एदैतोः कण्ठतालुस्या दो दौतोः कण्ठोष्ठमिति ।
वकारस्य च दन्तोष्ठ मनुस्वारस्य नासिका ॥
जिह्वामूलं भवेत्स्थानं जिह्वामूलीयकस्य च ॥

ओष्ठस्थानं पवर्गस्य उकारस्य च वस्य च।
वर्गाणामन्तिमो वर्णो नासिका स्थानवान् स्मृतः ॥

अथ प्रयत्नाः—

वर्णोच्चारणकालेषु प्रयासो जायते च यः।
स प्रयासः प्रयत्नोऽस्ति बाह्याभ्यन्तरभेदवान् ॥
आभ्यन्तराश्च पञ्चैव बाह्या एकादशस्मृताः।
सर्वेषां नामभेदादि स्पष्टमत्र प्रदर्श्यते ॥
आकण्ठात्कलकं ज्ञेयं तदूर्ध्वं बाह्यमुच्यते।
आभ्यन्तराः मुखे सन्ति प्रयत्नाः पञ्च सन्ति ते ॥

स्पष्टीकरणम्—

मुखप्रदे मध्ये यत् स्थानं वा करणं स्थितम्।
तदेवाभ्यन्तरं ज्ञेयं बाह्यमन्यदितः परम् ॥

आभ्यन्तरप्रयत्नाः—

स्पृष्टः प्रयत्न आद्यः स्याद् ईषत्स्पृष्टो द्वितीयकः।
तृतीयो विवृतस्तुर्य्यः ईषद्विवृतनामकः ॥
संवृतोऽपि प्रयत्नोऽस्ति क्वापि क्वापि प्रयोगके।
स्पृष्टप्रयत्नवन्तस्ते वर्गीयाः पञ्चविंशतिः ॥
स्वराणां विवृतत्वं स्याद् ईषद्विवृतमूष्मणाम्।
प्रयोगकालेऽकारस्य संवृतत्वं विधीयते ॥

बाह्यप्रयत्नविवेचनम्—

वर्णोत्पत्तेरत्र पश्चाद् मूर्ध्नि प्रतिहते सति।
निवृत्ते खलु प्राणाख्ये वायावुत्पद्यते च यत् ॥
तदेव बाह्यमित्युक्तं विवारादिदशैकमिति।
गलबिलस्य विस्तारः विवारश्चात्र बुध्यताम् ॥
गलबिलस्य सङ्कोचः संवरः कथ्यते पुनः।
विवृतसंवृतशब्दाभ्यामिमावथौ स्मृताविह ॥

बाह्यप्रयत्ना एकादश-यथा—

उदात्तश्चानुदात्तश्च स्वरितश्च तृतीयकः।
संवारश्च विवारश्च श्वासो नादोऽथ सप्तमः ॥

अघोषश्च तथा घोषः अष्टमो नवमः क्रमात् ।
अल्पप्राणो महाप्राणः प्रसिद्धो बाह्यनामतः ।।

अचां धर्मं उदात्तादिर्विवारादिर्हलामपि ।
श्वासो घोषो विवारोऽपि खरो वर्णाः कठोरकाः ।।

हशो वर्णास्तु संवारनादघोषाः सुकोमलाः ।
प्रथमश्च तृतीयश्च पञ्चमो यगचौ तथा ।
अल्पप्राणप्रयत्नास्ते महाप्राणा इतः परे ।।
)( गजकुम्भाकृतिः शास्त्रे उपध्मानीयमुच्यते ।
≍ इन्द्र वज्राकृतिः किन्तु जिह्वामूलीयमुच्यते ।।

अथवा

उपर्यधो मुखं भूत्वा अर्द्धचन्द्रस्वरूपकम् ।
'क' स्य वर्णस्य पूर्वं तु जिह्वामूलीयमुच्यते ।।

वामदक्षिणयोरास्यं कृत्वा चेदर्द्धचन्द्रकम् ।
पस्य वर्णस्य पूर्व-मुपध्मानीयमुच्यताम् ।।

अनुस्वारो विसर्गश्च स्वरात्परौ तु तिष्ठतः ।
अनुस्वारः शिरोविन्दुः पार्श्वे विन्दू विसर्गकः ।।

यवरलाश्च चत्वारः अन्तस्थपदसंज्ञकाः ।
शषसहाश्च चत्वारः ऊष्माणः सन्ति नामतः ।।
अन्त्यवर्णात्पूर्ववर्णः पदेषु उपधा भवेत् ।
अलोऽन्त्यात्पूर्वं उपधा सूत्रस्यार्थस्तु तादृशः ।। १ । ४१
अचोऽन्त्यादि टि सूत्रेण उपान्त्यसहितं पदे । १ । ६४
टिसंज्ञकं सदा ज्ञेयं—यु परं स्याद् घिसंज्ञकम् ।। (इ + उ = यु)

स्पष्टीकरणम्—

संज्ञापदे स्वरादन्त्यात् परं स्वश्च टिसंज्ञकम् ।
इकारान्तमुकारान्तं पदं घिसंज्ञकं सदा ।।

अ अ । ८ । ४ । ६८

विवृतस्य अकारस्य संवृतोऽनेन जायते ।
पदसाधनकाले तु सदैव विवृतः स्मृतः ।।

दण्डायनस्य सिद्धिस्तु तस्मात् सवर्णदीर्घतः ।
दण्डाढकेऽपि तस्माद्धि दीर्घः सावर्ण्यतोऽभवत् ।।

पूर्वत्रासिद्धम् । ८ । २ । १

अष्टाध्यायेषु सूत्रेषु अन्तिमं चरणत्रयम् ।
सपादसप्ताध्यायानामग्रे एतन्न तिष्ठति ।।

ऋलृवर्णयोः सावर्ण्य वाच्यम वा० ।

मिथः सवर्णसंज्ञा स्याद् एतयोः ऋलृवर्णयोः ।
ऋवर्णेन लृबोधः स्याद्लृवर्णेन च उस्तथा ।।

नाज्झलौ । १ । १ । १०

अचां हलां मिथः क्वापि सावर्ण्य नैव जायते ।
दधि + हरति शीतलं यण्दीर्घौ भवतो नहि ।।
अन्यथाऽत्र हकारादि वर्णानां च स्वरादिवत् ।
जायेत ग्रहण तेन दीर्घादिश्च भविष्यति ।।

अणुदित्सवर्णस्य चाप्रत्ययः । १ । १ । ६९

अविधीयमानोऽण् वर्णः उदिद् वा स्यात् सवर्णवान् ।
अष्टादश प्रकाराः स्युस्तदेवम इ उ स्वराः ।।
तदुक्तम् 'अ' इति अष्टादशानां बोधको भवेत् ।
तथेकार उकारश्च अष्टादशप्रकारकः ।।
परेणैव णकारेण अणत्र ज्ञायतां सदा ।
कुचुटुतुपवः पञ्च उदितः कथिता इह ।।
वर्गाणां बोधकाः सर्वे पञ्चमोकारसंयुतात् ।।
उकारः पञ्चमो वर्णशिक्षाक्रमे प्रदर्शितः ।
ऋकारस्त्रिशतःसंज्ञा लृकारोऽपि तथैव च ।।
सावर्ण्येन द्वयोः संख्या त्रिंशज्जातेति बुध्यताम् ।
एचः स्युर्द्वादशानां संज्ञा ह्रस्वस्य वर्जनात् ।।
एदैतोरोदौतोश्च सावर्ण्यं न मिथो भवेत् ।
ऐऔच् सूत्रस्य प्रारम्भ सामर्थ्यादिति भाषितम् ।।
तस्मात्त्चतुर्विंशतेश्च संज्ञा नैचः प्रदर्शिता ।

अत्र फक्किका—

नन्वाकारहकारस्य सावर्ण्यं न निषिध्यते ॥
नाज्झलाविति सूत्रेऽस्मिन् वर्णसमाम्नायिकग्रहः ।
विश्वपाभिः प्रयोगेऽस्मिन् कथं ढत्वं न जायते ॥
इत्याशङ्कादशायां वै उत्तरं प्रतिपादितम् ।
कालसमयवेलासु तुमुन् सूत्रप्रमाणतः ॥
नाज्झलाविति सूत्रे आकारोऽपि च श्लिष्यते ।
आकारस्य हकारेण सावर्ण्यं वारणं भवेत् ॥
विश्वपाभिः प्रयोगेऽस्मिन् ततो ढत्वं न जायते ।
हे यिपासो हे पिपासो भाष्य प्रयोग दर्शनात् ॥
प्लुताऽऽकारोऽपि प्रश्लिष्टः सावर्ण्यं तत्रापि नहि ।

तपरस्तत्कालस्य । १ । १ । ७०

तत्कालस्यैव बोधः स्यादच्यत्र तपरो भवेत् ।
तत्पुरुषो बहुव्रीहिः समासो वर्तते इह ।
अत्कथने ह्रस्वबोधः आत्कथने दीर्घबोधनम् ॥
अदिदुत्कथनेनात्र षण्णां बोधः प्रदर्शितः ॥

वृद्धिरादैच् । १ । १ । १

वृद्धिरादैजिति सूत्रात् आ ऐ औ वृद्धिसंज्ञकः ।
वृद्धिर्भवति यत्रास्ति तत्रेदमुपतिष्ठते ॥

अदेङ्गुणः । १ । १ । २

अदेङ्गुण इति सूत्रात् अ ए ओ गुणसंज्ञकः ।
गुणो भवति यत्रास्ति तत्रेदमुपतिष्ठते ॥

भूवादयो धातवः । १ । ३ । १

भूवागम् पठादीनां धातुसंज्ञा क्रियार्थके ।
सेटोऽनिटो विकल्पेटः धातवस्त्रिविधा मताः ॥
सकर्माऽकर्म भेदेन धातवो द्विविधा पुनः ।
ते तिङन्ते विशेषेण भविष्यन्ति विवेचिताः ॥

निपात एकाजनाङ् । १ । ४ । ७

एकाच् निपात आङ् भिन्नस्तस्य संज्ञा प्रगृह्य इति ।
इ+इन्द्रः उ+उमेशस्तस्माद्दीर्घोऽत्र नेष्यते ॥

प्रागीश्वरान्निपातानामधिकारः प्रवर्तते । १ । ४ । ५६

चादयोऽसत्त्वे । १ । ४ । ५७

अद्रव्यार्थाश्चादयोये ते स्युर्निपातसंज्ञकाः ।
प्रादयोऽपि निपाताः स्युरद्रव्यार्थे विशेषतः ॥ १ । ४ । ५८

उपसर्गाः क्रिया योगे । १ । ४ । ५९

गतिश्च । १ । ४ । ६०

क्रियायोगे तु प्रादीनां गतिसंज्ञा विधीयते ।
यत्रोपसर्गसंज्ञापि क्रियते कार्यमस्ति चेत् ॥
प्रपरापसमावानु निस्निर्दुस् दुरिति च ।
व्याङ् न्यध्यपि स्वति प्रत्युदुपाभिप्रति प्रादयः ॥

न वेति विभाषा । १ । १ । ४४

निषेधस्य विकल्पस्य विभाषा नाम जायते ।
विभासाश्वेरिति सूत्रे प्रयोजनं विलोक्यताम ॥

स्वं रूपं शब्दस्यासंज्ञा । १ । १ । ६८

अन्यत्र व्यवहारेषु शब्दाः स्वरूपबोधकाः ।
व्याकरणे कृताः संज्ञाः किन्तु सङ्केतितार्थकाः ॥

येन विधिस्तदन्तस्य । १ । १ । ७२

विशेषणं तदन्तस्य संज्ञा भवति स्वस्य च ।
चयो नयो जयो रूपमेरच् सूत्रे प्रयोजनम् ॥

अस्यापवादः—

समास-प्रत्यय-विधौ न तदन्ते विधिर्भवेत् । वा.
तस्मात् कृष्णमुपश्रितः समासो नात्र जायते ॥
नारायनोऽत्र फक् कार्यं सौत्रनाडौ न फग् विधिः ।

उगिद्-वर्णग्रहणं यत्र तत्रेदं न प्रवर्तते। वा
उगितश्चेति सूत्रेण तस्मादतिमहती भवेत् ॥

विरामोऽवसानम्। १।४।११०

वर्णानामभावो हि विरामः कथ्यते बुधैः।
तस्यावसानसंज्ञास्ति - वाऽवसानेऽत्र योज्यताम् ॥

परः सन्निकर्षः संहिता। १।४।१०९

वर्णानामतिसामीप्यं संहिता कथ्यते बुधैः।
संहितायाः विवक्षायां सन्धिर्भवति नान्यथा ॥

सुप्तिङन्तं पदम्। १।४।१४

सुबन्तं च तिङन्तं च पदं भवति संस्कृते।
रामः कृष्णः पदं ज्ञेयं तिङन्तेऽस्ति करोति च ॥
सुप् तिङन्तचयं वाक्यं बालकः सेवते गुरुम् ॥

हलोऽनन्तरा संयोगः। १।१।७

अनन्तराः हलः क्वापि युक्ताः संयोग संज्ञकाः।
शुद्धः क्रुद्धः प्रियो बन्धुः सर्वमेवमुदाहरेत् ॥

ह्रस्वं लघ्विति सूत्रेण अ इ उ लघुसंज्ञकः। १।४।१०
दीर्घश्च गुरुसंज्ञंस्यात् आ ई ऊ गुरुसंज्ञकः ॥ १।४।१२
संयोगे गुरु सूत्राच्च सिद्धौ 'सि' गुरुशंज्ञंकम्। १।४।११

अनुस्वारविसर्गाभ्यां युक्तोऽपि गुरुसंज्ञकः।
गुरुः बालं प्रशिक्षेत 'रुः लं' चात्र गुरू मतौ ॥
प्रसङ्गे तत्र तत्रैव अन्यसंज्ञा निरूपिता।
सावधानमधीयीत स्वयं बोधं विवर्धयेत् ॥

॥ इति संज्ञाप्रकरणम् ॥



# परिभाषाप्रकरणम्

**संगतिः—कस्मिन्नपि शास्त्रज्ञानप्रवृत्तिकाले तत्रत्यसंज्ञाज्ञानं कर्तव्यं समुचितं भवति तत्पश्चात् तच्छास्त्रीयपारिभाषिकज्ञानमावश्यकमिति संज्ञाप्रकरणान्तरं परिभाषाप्रकरणमारभ्यतेऽत्र ।**

परितो भाषते या सा परिभाषा निगद्यते ।
कार्यसंशयकालेऽहि निर्णयार्थं प्रयुज्यते ॥



**इको गुणवृद्धी । १ । १ । ३**

**गुणो भवति वृद्धिर्वा यस्मिन् सूत्रे च कथ्यते ।**
**तत्रेकः पदमायाति षष्ठ्यन्तमिति निश्चयः ॥**

**अचश्च । १ । २ । २८**

**ह्रस्वदीर्घप्लुतशब्दैर्यत्र किञ्चिद् विधीयते ।**
**तत्कार्यमचःस्थाने जायते नियमोऽस्त्ययम् ॥**
**ह्रस्वो नपुंसके प्रातिपदिकस्यात्र दृश्यताम् ।**

**आद्यन्तौ टकितौ । १ । १ । ४६**

**शब्दानामादिवर्णस्य पूर्वं टित्कार्यमुच्यते ।**
**प्रयोगे भवितेत्यादौ तृच आदौ च यण्विधिः ॥**
**शब्दानामन्त्यवर्णस्य कित्कार्यं क्रियते सदा ।**
**वाययति क्रियादौ वै अन्त्यस्य कृतमस्ति युक ॥**

**मिदचोऽन्त्यात्परः । १ । १ । ४७**

**मित्कार्यं यस्य शब्दस्य तत्राचामन्तिमस्य च ।**
**परं भवति मित्कार्यं स तत्तस्यावयवो भवेत् ॥**
**नपुंसके च नुम्कार्यं वनानि सुपुमांसि च ॥**

**षष्ठी स्थाने योगाः । १। १। ४९**

**अनिर्धारितसम्बन्धा षष्ठी स्थानार्थबोधिका ।**
**'एरुः' सूत्रेण तिस्थाने 'तु' शब्दः क्रियते यथा ॥**

स्थानेऽन्तरतमः । १। १। ५०

प्रसङ्गे सत्यनेकस्य तत्रादेशस्य सदृशः ।
सुध्युपास्ये यथा यण् यः मध्वरौ वः सदृक् कृतः ।
यत्रानेकस्य च प्राप्तिस्तत्रान्तरतमो भवेत्
सादृश्यमन्तरतमस्तच्चतुर्विधमस्ति वै ॥
आ[1]द्यं स्थानकृतं बोध्यं द्वितीयम[2]र्थतो भवेत्
गु[3]णकृतं तृतीयं तत् प्रमा[4]णकृतमन्तिमम् ॥

तस्मिन्निति निर्दिष्टे पूर्वस्य । १। १। ६६

सप्तम्यन्तेन निर्दिष्टं कार्यं तत्पूर्वमेव हि ।
अचोऽव्यवहितपूर्वस्य इको यण् स्वागते यथा ॥

तस्मादित्युत्तरस्य । १। १। ६७

पञ्चम्या विहितं कार्यं तत्परस्यैव जायते ।
अतोभिस ऐस् कार्यं यथाऽदन्तात्परं कृतम् ॥

अलोऽन्त्यस्य । १। १। ५२

षष्ठीविभक्तिनिर्दिष्टं कार्यं सूत्रेषु यद्भवेत् ।
अन्त्यस्यालस्तु तत्कार्यं त्यदादीनाम आदिषु ॥

ङिच्च । १। १। ५३

ङित्कार्यमन्त्यवर्णस्य स्थाने सदा विधीयते ।
गवाग्रे च गवेन्द्रे च यथाऽवङ् कृतमस्ति वै ॥

आदेः परस्य । १। १। ५४

परस्य विहितं कार्यं तत्रादेरेव जायते ।
अलोऽन्त्यस्यापवादोऽयं विधिरित्यवधार्यताम् ॥

अनेकाल् शित्सर्वस्य । १। १। ५५

अनेकाल् शिच्च आदेशः स्थाने सर्वस्य जायते ।
अस्तेर्भूरिति सर्वस्य तथैव इदमश्च ईश् ॥

**अत्र फक्किका—**

तस्मादित्युत्तरस्यादेः लघुन्यासेन सिध्यति । १ । १ । ६९
आदेः परस्य योगोऽयं किमर्थं क्रियते पृथक् ॥
एवञ्चाष्टौ प्रयोगेऽस्मिन् योगस्यास्य प्रवर्तनात्
जसोऽकारस्य च औशादेशः स्यात् परमस्ति यत् ॥
आदिशकारलोपेऽपि निर्बाधमन्तिमस्य रुः ।
तदाऽष्टावितिरूपं न अष्टौरिति विपद्यते ॥
यथास्थिते तु तन्न्यासे नायं दोषः प्रवर्तते ।
आदेः परस्य सूत्रस्य परत्वं वर्तते नहि ।
परत्वं वर्ततेऽनेकाल् शित्सर्वस्येति तद् भवेत्
ततोऽनेकालिति सूत्रात् जसः सर्वस्य औशिति ।
अष्टौ रूपे न चापत्तिः पृथक् सूत्रं ततः कृतम् ॥

## स्वरितेनाधिकारः । १। ३। ११

स्वरितेनात्र संयुक्तपदं स्यादधिकारवत्
अधिकारस्य सूत्रस्य अन्यसूत्रे प्रयोजनम् ॥
[परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ।] वा ।
परान्नित्यं तथा नित्यादन्तरङ्गविधिर्बली ।
अन्तरङ्गादपवादो बलवांस्तु परः परः ॥
[असिद्धं बहिरङ्गमन्तरङ्गे । [वा]
अन्तरङ्गस्य कर्त्तव्ये बहिरङ्गं न तिष्ठति ।
पचावेदं प्रयोगेऽत्र तस्माज्जातो न एत ऐः ॥
[अकृतव्यूहाः पाणिनीयाः । ] वा०
निमित्तनाशमालोक्य कार्यं तद्धेतुकं नहि ।
निषेदुषीमिह क्वसो रिट् तस्मान्न प्रवर्तते ॥
सिद्धान्तकौमुदीकाव्ये सुरेशझाविनिर्मिते ।
परिभाषाप्रकरणं समाप्तमिति बुध्यताम् ॥

॥ इति परिभाषाप्रकरणम् ॥



# अथ सन्धिप्रकरणम्

संगतिः—संज्ञापरिभाषाज्ञानान्तरं प्रथमं कार्यप्रदर्शनमुचितमिति बुद्धचा वर्णानां सन्धिः प्रदर्श्यते, तत्रापि अकारस्य प्राथम्यात् प्रथमं सवर्णदीर्घसन्धिरेव प्रदर्श्यते ।

**तत्र प्रथमं स्वरसन्धिः**

वर्णानामतिशयितः सन्निधिः संहिता स्मृता ।
संहितायां भवेत् सन्धिः स सन्धिस्त्रिविधो भवेत् ॥

**सन्धिलक्षणम्—**

अक्षरद्वयसंयोगं सन्धिं वदति पण्डितः ।
क्वचिद् वर्णविकारोऽपि मेलनं सन्धिरिष्यते ॥
एकपदे द्वयोः क्वापिएकवर्णस्य वा द्वयोः ।
परिवर्तनमेकं यत् जायते सन्धिरत्र सः ॥

अकारस्य प्रथमोच्चारणमस्ति तेन—
प्रथमं दीर्घसन्धिरेव कथ्यते—

**अकः सवर्णे दीर्घः ॥ सू. ६। १। १०१**

स्वरवर्णात् परस्तादृक् स्वरवर्णो भवेद् यदि ।
तदा समानयोर्दीर्घसन्धिं कुर्यात्पदादिषु ॥

**उदाहरणम्—**

दैत्य+अरिश्च दैत्यारिः, श्री + ईशः श्रीश उच्यते ।
बहु + ऊर्मिः बहूर्मिः स्याद् दीर्घः सर्वत्र जायते ॥

**सन्धिविच्छेदं कुरु—**

विद्यालये रवीन्द्रो मे भानूदये च गच्छतु ।
कन्यागारे मुनीशो न वधूत्सवेषु गच्छति ॥
पितॄणे च नदीशे च विधूदये वधूहने ।
पूर्वादकः सवर्णेऽचि परे दीर्घो द्वयोरिह ॥

**अत्र विशेष :—**

अकोऽकि दीर्घं इत्येव सुवचं कथितं बुधा।
वर्णैकलाघवं तस्मादिदं सर्वैश्च मन्यते॥

**अत्र फक्किका—**

अचि किं कुमारी शेते।
अकः सवर्णे दीर्घोऽत्र अचि किमनुवर्तते।
तदभावेऽपि सवर्ण-परे दीर्घो भविष्यति॥
दैत्यारिरादिरूपाणि सिध्दघन्त्येव न संशयः।
अच्यभावेऽत्र दोषो य स्तमहं दर्शयाम्यधः॥
कुमारी शयितुं शेते रोते वा नात्र सिद्ध्यति।
सवर्णस्य परत्वेन दीर्घः प्राप्नोति निश्चयात्॥
नाज्झलाविति सूत्रेण सवर्णत्वं न वार्यते।
यतोऽक्षरसमाम्नाय पठितस्यैव वारणम्॥
दीर्घोकारस्य शस्यात्र सावर्ण्यं वारणं नहि।
तस्मादचीति वक्तव्यं पाणिन्युक्तौ न संशयः॥

**दीर्घस्यापवादः—**

"शकन्ध्वादिषु पररूपं वाच्यम्"॥ वा.
शकन्धुः कर्कन्धुश्च मार्तण्डः कुलटादिषु।
पररूपं भवदेषु किन्तु दीर्घो न जायते॥
गुणसन्धिः—"एकः पूर्वपरयोः—६।१।८४॥ इत्यधिकृत्य।

**आद्गुणः। ६। १। ८७**

आद्गुणः पाणिनेः सूत्रं तस्यार्थो दर्शितो यथा। ६।१।८७।
अवर्णादचि सञ्जाते परे तदोभयोः स्थले।
गुणश्चैको भवेद्वर्णः स्थानयत्न सदृक् सदा॥

**स्पष्टीकरणम्—**

अवर्णस्य इवर्णेन संहितायां गुणोऽत्र ए।
अवर्णात् पर उवर्ण श्चेत्तदा ओ भवेद्गुणः
अवर्णस्य ऋवर्णेन अर् गुणः क्रियते पदे
ऌवर्णेन अकादरस्य अल् गुणो जायते सदा॥

उरण् रपरः । १ । १ । ५१

ऋ लृ स्थानिक आदेशो रपरो लपरः सदा ।
उरण् रपरः सूत्रेण कृतेन नियमेन वै ।।

उदाहरणानि—

उप + इन्द्रः उपेन्द्रः स्यात् तव + उदयस्तवोदयः ।
महा + ऋषिः महर्षिः स्यात् तवल्कःस्यात् तव + लृकः ।।

सन्धिविच्छेदं कुरु—

महेशे च रमेशेऽत्र चन्द्रोदये महोत्सवे ।
राजर्षौ किलदेवर्षौ तवल्कारे पदे तथा ।।

झरो झरि सवर्णे । ८ । ४ । ६४

हलः परस्य वा लोपः सवर्णे झर्परे झरः ।
कृष्णर्धिः कृष्णर्द्धिश्च कृष्णर्द्धिरपि पक्षतः ।।
द्वित्वाभावे यदा लोपस्तदा एकधमुच्यते ।
अथ द्वित्वं धलोपो न तदा रूपं द्विधं भवेत् ।
लोपेऽसति यदा धस्य द्वित्वं तदा त्रिधं वदेत् ।।
यणो मयश्च द्वे वाच्ये वार्तिके यदि मन्यते ।
पञ्चम्यन्तं यणश्चात्र षष्ठी मयः पदं पुनः ।।
तदा द्वित्वं ककारस्य अनचि चेति लस्य च ।
तवल्कार इहोच्येत विज्ञैः रूपचतुष्टयम् ।।
द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि ।
द्वित्वद्वयविकल्पेन रूपं ज्ञेयं चतुर्विधम् ।।

वृद्धिसन्धिः—

वृद्धिरेचि । ६ । १ । ८८

वृद्धि रेचीति सूत्रेण—अवर्णादचि च परे ।
एकादेशो भवेद् वृद्धिर्गुणापवादतः सदा ।।

स्पष्टीकरणम्—

अवर्णात्पर एकारः ऐकारो वा क्वचिद् भवेत् ।
तदा ऐकार वृद्धिः स्यात् मतैकता ममैहिकम् ॥
अवर्णात् पर ओवर्णः औवर्णो वा यदा क्वचित् ।
औकारस्तु तदा वृद्धिः तवौदनः महौषधिः ॥
कन्यैषा च महैश्वर्यं राजकीयौषधालयः ।
सैडका सर्वथैक्यञ्च जलौघः साध्यतां ततः ॥

पररूपगुणापवादः—

एत्येधत्यूठ्सु । । ६ । १ । ८९

एत्येधत्यूठ्सु सत्स्वत्र परेषु वृद्धिरिष्यते ।
अवर्णेन सहैजादिरेति रेधति रूठ् यदि ॥

उदाहरणम्—

उप+एति उपैति सः प्र+एधते स प्रैधते ।
विश्व ऊहश्च विश्वौहः प्रष्ठौहः पश्य गाः सखे ॥

गुणापवादः—

अक्षादूहिन्यामुपसंख्यानम् ॥
अक्ष शब्दादूहिनीशब्दः परभागे समेति चेत् ।
अक्षौहिणी[१] तदा वृद्धया गुणसन्धि र्न जायते ॥

स्वादीरेरिणोः । वा ।

स्व शब्दात्परभागेऽत्र ईर ईरी समेति चेत् ।
वृद्धिरेव भवेत्तत्र न गुणः स्वैर-स्वैरिणोः ॥
स्वेच्छाचारी भवेत्स्वैरः स्वैरिणी कुलटा स्मृता ।

प्रादूहोढोढ्येषैष्येषु—वा ।

प्रशब्दतः परश्चोहः ऊढ ऊढि रेष इति ।
तत्र वृद्धि र्गुणो नैव प्रौहः प्रौढः प्रौढिरिति ॥

---

१. ऊहः समूहः सोऽस्ति अस्य ऊहिनी—+अक्ष+ऊहिनी **अक्षौहिणी** पूर्वपदाच्च संज्ञायामित्यनेनणत्वमत्र । सेनासन्निवेशविशेषसंज्ञा ।

अत्र फक्किका—

अर्थवद् ग्रहणे क्वापि नानर्थकग्रहो भवेत् ।
व्रश्चभ्रश्चेति सूत्रेऽस्मिन् राजिभ्राजिद्वयग्रहात् ॥
तस्मादूढपदेनात्र क्तान्तस्यैव ग्रहो भवेत् ।
क्तवत्वन्तपदस्यैकदेशो न गृह्यते ततः ॥
प्रोढवानेव रूपं स्यात् प्रौढवान् न प्रयुज्यते ।
प्र+एषश्च स्थितौ प्रैषः, प्र+एष्यः प्रैष्य इष्यते ॥
दिवादेरिष इषः क्रादेः एष एष्यश्च सिद्धचति ।
इषेः घञि ण्यति जाते सर्वमिष्टं सुसिद्धचति ॥
ईष उञ्छे गतौ ईष दीर्घोपधाद् घञि ण्यति ।
गुण एव विधीयेत प्रेषः प्रेष्यः इति पदम् ॥

ऋते च तृतीयासमासे । वा० ।

अकारान्तपदात्पश्चाद् ऋतशब्दे समागते ।
तत्र वृद्धिः सुखार्तादौ तृतीयान्त समासके ॥
सुखेन ऋत आनन्द-पूर्वकं गत उच्यते ।

गुणापवादः—

प्र वत्सतर–कम्बल–वसनार्ण–दशादितः ।
ऋण शब्दः परः क्वापि तत्र वृद्धिर्गुणो नहि ॥ वा ।

उदाहरणम्—

प्रार्णं वत्सतरार्णञ्च कम्बलार्णमृणार्णमिति ।
वसनार्णं दशार्णञ्च शब्दाः सिद्धचन्ति वृद्धितः ॥

गुणापवादः—

उपसर्गादृति धातौ ॥ ६ । १ । ९१

उपसर्गादृति धातौ परे वृद्धिः सदा भवेत् ।
प्र+ऋच्छति स प्रार्च्छति उप+ऋच्छत्युपार्च्छति ॥
खरि पदेऽवसाने च रेफो नात्र विसर्जति ।
पदान्तेषु सदा तस्योदाहरणं प्रदास्यते ॥

अत्र विशेषः—

अन्तादिवच्च । ६ । १ । ८५

अन्तादिवच्च सूत्रेण एकदेशस्थिताविह ॥
पूर्वस्य अन्तवद्भावः परस्य आदिवद् भवेत् ।
प्रार्च्छत्युपार्च्छतीत्यादौ नान्तवद् भाव इष्यते ।
तस्माद्रेफस्य नैवात्र विसर्गो जायते पदे ॥
प्रमाणमुभयथक्षुं र्चषि देवतयोरिति ।
भाष्योदाहरणादत्र रेफो नैव विसर्जति ॥

वासुप्यापिशलेः । ६ । १ । ९२

वा सुप्यापिशलेः सूत्रात् प्रार्षभीयति स जनः ।
प्रर्षभीयति वा पक्षे गुणोऽपि क्रियतामिह ॥
आपिशलिमतेनात्र वृद्धि र्वा जायते पदे ।

एङि पररूपम् । ६ । १ । ९४

आदुपसर्गादेङि धातौ सति पररूपमिष्यते ।
प्र + एजते प्रेजते सः उप + ओषत्युपोषति ॥
कम्पने एज् धातुर्हि उपवासे उपोषति ॥

अचोऽन्त्यादिटि । १ । १ । ६४

अचोऽन्त्यादि टि सूत्रस्य तात्पर्यं ज्ञायतामिह ।
अचां मध्येऽत्र यश्चान्त्यस्तदादिः स्याट्टिसंज्ञकः ॥
शकन्ध्वादिगणीयानां पररूपं भवेदिह ।
तस्मात्तेषु न दीर्घादि केवलं पररूपता ॥
शकन्धुश्चाथ कर्कन्धुः मार्तण्डः कुलटादिषु ।
मनीषा लाङ्गलीषादौ पररूपं ततो भवेत् ॥
सीमन्तः केशवेशेषु सीमान्तोऽन्यत्र कथ्यते ।
आकृतिगण आख्यातः शकन्ध्वादिगणोऽत्र वै ॥

एवे चानियोगे । वा ।
अवर्णादेव शब्दे-परे च पररूपता ।

क्व + एव क्वेव भोक्ष्येत-निश्चये वृद्धिरेव स्यात् ॥
ओत्वोष्ठयोः समासे वा पररूपं विधीयते । वा ।
स स्थूलोतुः पुनश्चात्र स्थूलौतुरपि कथ्यते ॥
बिम्बोष्ठः पुनरत्र स्याद् बिम्बौष्ठ इति बुध्यताम् ।

वृद्धेरपवादः-

ओमाङोश्च । ६ । ९४ ।

ओमाङोश्च सूत्रेण ओमि आङि परे सदा ।
पररूपं भवेत्तस्मादधोरूपश्च सिद्ध्यति ॥
शिवाय ओं नमश्चात्र शिवायोंनम उच्यते ।
शिव + एहि शिवेहि स्यात् रामेहि पाहि मामिह ॥

अव्यक्तानुकरणस्यात इतौ । ६ । १ । ९८

अव्यक्तानुकरणस्य अत् शब्दस्य इति परे ।
पररूपं भवेत् सन्धिः पटत् + इति पटिति च ॥
एकाचः पररूपं न श्रदिति स्यान्नतु श्रिति । वा ।

नाम्रेडितस्यान्त्यस्य तु वा । ६ । १ । ९९

आम्रेडितस्य अन्त्यस्य तमात्रस्य विकल्पतः ।
पररूपं विजानीयात् पटत्पटेति च भवेत् ॥
बहुलं डाचि वै द्वे स्तः—इत्यत्र बहुल ग्रहात्
द्वित्वं भवति सर्वत्र—तस्मादुदाहृतमिदम्
पटत्पटत् इतिस्थिते पटत्पटिति च भवेत्

तस्य परमाम्रेडितम् । ८ । १ । २

द्विरुक्तस्य परं रूपमाम्रेडितपदंहि तत्
ज्ञायते सा च संज्ञास्ति द्विरुक्ते च परे पदे
तस्मात् पटत्पटेति स्यात् पररूपविधानतः

झलां जशोऽन्ते ॥ ८ । २ । ३९

सूत्रं झलां जशोऽन्तेऽस्ति–पदान्तेषु झलां जशः ।
जायन्ते तेन पक्षेऽत्र रूपं पटत्पटदिति ॥
सुधी + उपास्य इति स्थितौ ।

[1]इको यणचि ।। ५ । १ ७७

इको यणचि सूत्रेण यण् सन्धिः क्रियते पदे ।
इ उ ऋ ऌ चतुर्वर्णाः य व र लाः स्युरच् परे ।
सुध्युपास्यः स्वागतं ते धात्रंशो लाकृतिरिति ।।
पदं छित्वा प्रयोगाणां साधनं क्रियतामिह ।।

**स्पष्टीकरणम्—**

इ उ ऋ ऌ ह्रस्व दीर्घात् तद्भिन्नश्चेत् स्वरः परः ।
य व रलाश्च तत्स्थाने क्रमशो यण् विधीयते ।।

**उदाहरणम्—**

लक्ष्मी + अत्र च लक्ष्म्यत्र मधु + अरिश्च मध्वरिः ।
पितृ + अर्थश्च पित्रर्थः ऌ + आकृतिश्च लाकृतिः ।।

**अत्र फक्किका—**

अनचि च । ८ ।४ । ४७

अचः परस्य द्वित्वं वा परो वर्णस्य नत्वचि ।

स्थानिवदादेशोऽनल्विधौ । १ । १ । ५६

आदेशः स्थानिवन्नित्यं स्थान्यलाश्रयके विधौ ।
अनेनात्र यकारस्य स्थानिवत्वादच्त्वमिति ।।
समादायानचि चेति द्वित्वं नैव निषिध्यति ।।
अनल्विधावितिभागात् तन्निषेधोऽपि जायते

पूर्वस्य च विधावत्र अचः परस्मिन् सूत्रतः ।१।१।५७

स्थानिवत्वमपि प्रायः न पदान्तेति वार्यते ।।

न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णाऽनुस्वारदीर्घ-जश्चर्विधिषु । १ । १ । ५८

---

१. ईकारस्य सावित्रीवाचकत्वेन जगन्मातृत्वं सिद्धमस्ति । तस्मादेवकारणाच्छ्री-भट्टोजीदीक्षितेन सन्धिप्रकरणे तस्य प्रथमं ग्रहणं कृतमिति मन्यते । किन्तु सौविध्यं सारल्यमपेक्ष्य मया दीर्घसन्धिः पूर्वं धृतः ।

पदान्तस्य विधावेव द्विर्वचनस्थलेऽपि च।
वरे यलोपकार्ये च स्वर सवर्णादिकस्थले॥
अनुस्वारे तथा दीर्घे जश्चरोश्च विधावपि
परनिमित्तकमादाय अजादेशो न स्थानिवत्॥

तस्माद् द्वित्वं भवेद् धस्य तस्य जश्त्वं प्रवर्तते
झलां जश्झशि सूत्रात् जश्त्वं धस्यात्र द भवेत्। ८।४ ५३
संयोगान्तस्य लोपः। ८। २। २३।
संयोगान्तपदस्यान्तः लुप्तो भवति सूत्रतः। ८। २। २३

यलोपोऽनेन संप्राप्ते प्रतिषेधोऽस्य वार्तिकात्
यणो लोप प्रतिषेधो वक्तव्य इति वार्तिकम्। वा.
सुध्युपास्यपदे सर्वः शास्त्रार्थो घटते इह॥
यणो मयस्तथा पक्षे मयोयणश्च द्वित्वमिह।
तस्माद् धस्यात्र यस्यापि द्वित्वाद्रूपचतुष्टयम्
एकधमेकयं चैव द्विधं द्वियमपीह च
एकधं द्वियमित्येव मेकयं द्विधमुच्यते
सुध्युपास्यपदस्यैवं रूपं ज्ञेयं चतुष्टयम्॥

सन्धिविच्छेदं कुरुत—

श्रुत्यादिः भ्वादयः प्रध्यौ मात्रा धात्रे च लाकृतिः
वाण्युपास्या प्रकृत्यंशः पित्रंशो मम दीयताम्॥

नादिन्याक्रोशे पुत्रस्य। ८। ४। ४८

पुत्रशब्दे तकारस्य न द्वित्वमादिनी परे
पुत्रादिनी त्वमसि पापे निन्दास्वेव प्रयुज्यताम्
तत्वस्य कथने द्वित्वं भवत्येव सदा यथा
डाकिनी सर्पिणी सर्वा पुत्त्रादिनीह जायते॥
तत्परे चापि द्वित्वं न पुत्रपुत्रादिनी गृहे—वा०
पापे त्वमसि यल्लोका भाषन्ते तन्न शोभनम्॥
पुत्रशब्दतकारस्य द्वित्वं वा हतजग्धयोः।—वा०
पुत्त्रहती पुत्रहती पुत्त्रजग्धीह चापि वा॥

त्रिप्रभृतिषु शाकटायनस्य । ८ । ४ । ४०

**त्रि प्रभृतिषु वर्णेषु परेषु द्वित्वमस्तु वा ।**
**इन्न्द्रः इन्द्रः राष्ष्ट्रं राष्ट्रं द्वयं वक्तुं सुशक्नुयात्**

सर्वत्र शाकल्यस्य । ८ । ४ । ५१

**शाकल्यस्य मतेनार्कः ब्रह्मादौ द्वित्वमस्ति न ।**

दीर्घादाचार्याणाम् । ८ । ४ । ५२

**दीर्घात्परं न द्वित्वं स्यात् पात्रं दात्रं प्रयोगके ।**

अचोरहाभ्यां द्वे । ८ । ४ । ४६

**अचो रहाभ्यां द्वित्वं स्यात् यरो वर्णस्य सर्वथा ।**
**हर्य्यनुभवः नहय्यस्ति वाक्यमेवं प्रयुज्यताम् ।।**

हलो यमां यमि लोपः विकल्पेनात्र जायते ।८ । ४। ६४

**द्वित्वाभावे यदालोपः एकयं रूपमुच्यते**
**लोपारम्भ फलं ज्ञेयमादित्यं हविरादिषु ।**
**आदित्यो देवता यस्य विग्रहे ण्यश्च प्रत्ययः ।**
**एकस्य यस्य लोपोऽत्र अनेन क्रियते पदे ।।**
**यमां यमि यथासंख्य विज्ञानान्नेह जायते**
**माहात्म्यमादिशब्दे हि मस्य लोपो न य परे ।।**

क्षय्यजय्यौ शक्यार्थे । ६ । १ ८१

**शक्यार्थे क्षय्यजय्ये द्वे यान्ते इमे निपातिते**
**योग्यार्थे क्षेय जेयौ द्वौ प्रयोगौ यति प्रत्यये ।।**

क्रय्यस्तदर्थे । ६ । १ । ८२

**क्रेतारः क्रेतुमायान्तु इति बुद्धया प्रसारितम् ।**
**आपणे वस्तु क्रय्यं स्यादन्यार्थे क्रेयमुच्यते ।।**

**वान्तादेशप्रकरणम्—**

वान्तो यि प्रत्यये । ६ । १ । ७९

वान्तो यि प्रत्यये सूत्रात् अवावैयादि प्रत्यये ।

गोर्विकारो गव्यं स्यात् नावा तार्यं नाव्यमिति ।
अध्वपरिमाणे च । वा ।
अध्वानां परिमाणे च गोरोकारस्य अव् भवेत्
यूतिशब्दे परे तस्मात् गव्यूतिरिति जायते ।
क्रोशयुगस्य गव्यूतिः संज्ञा कोषे स्मृता बुधैः ॥

धातोस्तन्निमित्तस्यैव । ६ । १ । ८०

यादि प्रत्ययमाश्रित्य धातो रेच् जायते यदा ।
वान्तादेशस्तु तत्रैचः लव्यं लाव्यं पदे यथा ।
लू धातोर्यत्प्रत्ययेऽत्र गुणे कृते च लो भवेत् ।
लू धातोर्ण्यति वृद्धिः स्यात् तेन लौ यम् पदस्थितिः ।
वान्तादेशपदेनात्र अवावाविति बुध्यते ।

**अयादिसन्धिप्रकरणम्—**

एचोऽयवायावः । ६ । १ । ७८

सूत्रमेचोऽयवायावः—एचां स्थाने अयादयः ।
क्रमशः करणीयास्ते अज्वर्णेषु परेषु च ॥

**स्पष्टीकरणम्—**

एकारस्य अयादेशः स्वर वर्णे परे सति ।
ने + अनं नयनं रूपं हरे + ए हरये नमः ॥
ऐकारस्य भवेदाय् वै पश्चात् स्वरे समागते ।
नै + अकः नायकः सोऽस्ति गै + अकः गायको भवेत्
ओ वर्णस्य अवादेशः औ वर्णस्य आवचि ।
भो + अनं भवनं रूपं पौ + अकः पावकस्तथा ॥

तस्य लोपः । १ । ३ । ९ ।

इत्संज्ञा यस्य वर्णस्य तस्य लोपः सदा भवेत् ।

**अत्र विशेषवस्तु**

हरये विष्णवे शब्दे तस्य लोपः प्रवृत्तितः
यवयोरत्र लोपो न उच्चारण क्रियाबलात्
इत्संज्ञाऽपि तस्मान्न व्यर्थत्वाज्जायतेऽनयोः ॥

**लोपः शाकल्यस्य ॥ ८ । ३ । १९**

अवर्णपूर्वयोर्लोपो यवयोश्च पदान्तयोः ।
अशि परे विकल्पेन तस्मात् स्यात् हर एहि त्वम् ।
हरयेहीति पक्षेऽत्र विष्ण इह विष्णविह ॥
पूर्वत्रासिद्धमित्यस्मात् लोपाऽसिद्धौ न सन्धयः ॥
अत्र फक्किका—( कानि सन्ति कौ स्तः )
पदसंस्कारपक्षोऽस्ति वाक्यसंस्कार इत्यपि ।
पृथक् पृथक् पदं यत्र संस्कृत्य वाक्यमुच्यते ॥
तदा स पदसंस्कारपक्षो विज्ञेन कथ्यते ।
वाक्यसंस्कारपक्षोऽत्र यदा शास्त्रे प्रयुज्यते ॥
एतस्मिन् पदसंस्कारः सहैव क्रियते बुधैः ।
सुबन्तश्च तिङन्तश्च पदं सहैव साध्यते ॥
कानि सन्ति तथा कौ स्तः श्नसोरल्लोपतो भवेत् ।
अचः परस्मिन् सूत्रेण लुप्ताकारः स्थितो भवेत् ॥
ततो यणादि कार्यस्य प्राप्तिरत्र कथं नहि ?
इति शङ्कां समाधातुं यत्नवान् दीक्षितोऽवदत् ॥
न पदान्तेति सूत्रेण स्थानिवत्वं निषिध्यति ।
निमित्ताभावतस्तस्मादत्र न स्याद् यणादिकम् ॥

**एङः पदान्तादति । ६। १। १०९**

ए ओ वर्णः पदान्ते स्यात् तत्परो यदि अ भवेत् ।
पूर्वरूपं भवेत्तत्र हरेऽव कोऽत्र तेऽमराः ॥
अत्रावग्रहचिह्नश्च पूर्वरूपस्य स्मारकम् ।

**सर्वत्र विभाषा गोः । ६। १। १२२**

लोके वेदे च एङन्त-गो शब्दस्य अति परे ।
पदान्ते प्रकृतिभावः विकल्पेनैव जायते ॥
गो + अग्रं गोऽग्रं रूपं द्वयमत्र प्रदर्शितम् ।
पक्षे प्रकृतिभावोऽस्ति पूर्वरूपश्च पक्षतः ॥

**अवङसन्धिः—**

**अवङ् स्फोटायनस्य ॥ ६। १। १२३**

अवङ् स्फोटायनस्येति गोरवङ् क्रियतेऽच्परे । ६।१।१२३
गो + अक्षः गवाक्षः स्यात् पूर्वरूपं न जायते ।
वातायनं गवाक्षः स्यात्-कोषेषु कथितं स्मरेत् ॥

इन्द्रे च । ६। १। १२४

गो शब्दात् पर इन्द्रश्चेद् अवङ् नित्यं तदा भवेत्
गो + इन्द्रश्च गवेन्द्रोऽयं नावादेशोऽत्र पूर्वतः ॥
गवेन्द्रो गोपतिरुक्तः संज्ञा सण्डस्य सा स्मृता ॥

॥ इत्यच्सन्धिः समाप्तः ॥



# अच्सन्धौ प्रकृतिभावः

## प्लुत प्रगृह्या अचि नित्यम् ॥ १ । १ । १२४

अचि नित्यं प्रकृत्या स्युः प्लुतप्रगृह्यसंज्ञकाः ।
कृष्ण एहि अत्र गौस्ते चरतीत्यादि सिद्धचति ॥

## ईदूदेद्द्विवचनम् ॥ १ । १ । ११

ईदू देद् द्विचनं—प्रगृह्यमचि जायते ।
प्रगृह्यसंज्ञकस्यात्र प्रकृतिभाव इष्यते ॥
कबी + अत्र प्रभू एतौ-बाले इमे बिधू इमौ ।
सर्वत्रैव प्रगृह्यत्वं ततः प्रकृतिभावता ॥

स्पष्टीकरणम्—

द्विवचनान्तशब्दस्य ई ऊ ए परतो यदि ।
तत्परश्चेत् स्वरोवर्णस्तदा सन्धिर्न जायते ॥
हरी एतौ गुरू अत्र माले इमे कले उभे ।
एतादृशि स्थले क्वापि स्वरे परे न सन्धयः ॥

## दूराद्धूते च । ८ । ४ । ८४

दूराद्धूते क्वचिद् वाक्ये सम्बोधनपदस्य च ।
प्लुतसंज्ञोऽन्त्यवर्णःस्यात् प्लुतं कृत्वा प्रयुज्यते ॥
सक्तून् पिव भवानन्द ३ वाक्यमेवं प्रयुज्यताम्' ॥

## इकोऽसवर्णे शाकल्यस्य । ६ । १। १२७

पदान्ता ये इकः सन्ति असवर्णेस्वरे परे ।
तेषां प्रकृतिभावः स्यात् ह्रस्वं कृत्वा विकल्पकः ॥
चक्रि अत्रास्ति चक्र्यत्र द्वयं रूपं प्रयुज्यते ॥

न समासे । वा

समासे न प्रकृत्या स्यात् तस्माद् वाप्यश्व इष्यते ।
सिति चापि प्रकृत्या न पार्श्वं तेन प्रयुज्यते वा ॥

ऋत्यकः ॥ ६ । १ । १२८

ऋषि परे अकः प्राग्वत् ब्रह्मा+ऋषि रिति स्थितौ ।
ब्रह्मऋषिश्च ब्रह्मर्षिः प्रयोगद्वयमुच्यते ॥
समासेऽप्ययमिष्येत प्रकृतिभाव ऋपदे ।
सप्तर्षीणां तथा सप्त-ऋषीणामिति जायते ॥

वाक्यस्य टेः प्लुत उदात्तः । ८ । २ । ८२

वाक्यस्य टेः प्लुतः स्याद्वै उदात्तोऽपि सहैव स्यात् ।
इत्यधिकृत्य कर्तव्यः सूत्रार्थोऽग्रेतनस्य च ।

प्रत्यभिवादेऽशूद्रे । ८ । २ । ८३

अशूद्रविषये प्रत्यभिवादे तत्र टेः प्लुतः ।
स चोदात्तोऽपि जायते उदाहरण मीक्षताम् ।
प्रणौमि देवदत्तोऽहम् आयुष्मानेधि भोः सदा ।
देवदत्त३पदं चात्र प्लुतं कृत्वा पुनर्वदेत् ॥

स्त्रियां न ॥ वा.

स्त्रीणां नाम्नि प्लुतो नैव जायते दृश्यतामधः ।
आयुष्मती भव गार्गि गार्ग्यहमभिवादये ॥
यस्मिन् प्रत्यभिवादे तु नाम वा गोत्रमुच्यते ।
प्लुतस्तत्रैव कर्तव्यः आयुष्मानेधि अत्र न ॥

भो राजन्य दिशां वेति वाच्यम् । वा.

भो राजन्य विशां वा स्यात् प्लुतो वाक्यान्तके क्वचित्
आयुष्मानेधि भो ३ वाक्यमुच्येत पण्डितैः सदा ।
आयुष्मानेधि हे राम ३ जीवतादिन्द्र पालित ३

है हे प्रयोगे हैहयोः । ८ । २ । ८२

दूराद्धूतेन यद्वाक्यं है युक्तं हे युतं क्वचित् ।
है हयोस्तु प्लुतस्तत्र हे ३ राम राम है ३ वदेत् ॥

गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् । ८ । २ । ८६

दूराद्धूते च यद्वाक्यं ऋद्भिन्नं तस्य च प्लुतः ।
अनन्तगुरुभिन्नस्य सर्वस्य जायते पदे ॥

दे ३वदत्त देवद३त्त देवदत्त ३ त्रिधा वदेत् ।
गुरुभिन्नत्वतो वस्य केवलं न प्लुतो भवेत् ॥

अप्लुतवदुपस्थिते । ६ । १ । १२९

अनार्षे इति शब्दे च प्लुतोऽप्लुतवद् भवेत् ।
सुश्लोक ३ इति स्थित्यां सुश्लोकेति प्रयुज्यताम् ॥

ईचाक्रवर्मणस्य । ६ । १ । १३०

चाक्रवर्मणसंमत्या ईप्लुतोऽप्लुतवद् भवेत् ।
चिनुहि ३ इति चिनुहीति चिनुहीदं विभाषया ॥

ईदूदेद् द्विवचनं प्रगृह्यम् ॥

अदसो मात् । १ । १ १२

अदसो मात् परावीदूतौ प्रगृह्यौ च संस्मृतौ ।
अमी ईशाः सुशोभन्ते अमू आसात उत्सुकौ ॥

अमुकेऽत्र प्रगृह्यं न मात्परत्वं न वर्तते ।
मात् पदं न तदैकारोऽप्यनुवर्तेत निश्चयात् ॥

शे । १ । ११३

भ्यसः शे यत्र जायेत प्रकृत्या तत्पदं भवेत् ।
अस्मे इन्द्रा बृहस्पती उदाहरणमुच्यताम् ॥

निपात एकाजनाङ् । १ । १ । १४

एकाजनाङ् निपातोऽपि प्रगृह्यः क्रियते सदा ।
इ + इन्द्र उ + उमेशश्च प्रयोगः क्रियते ततः ॥

अनाङित्युक्तितश्चात्र अङिदाकार एव हि ।
प्रगृह्यः क्रियते तस्माद् आ एवं किन्तु मन्यसे ॥
आ एवं किल तज् ज्ञेयमित्यादौ च प्रगृह्यता ।
ङित्तु नैव प्रगृह्यः स्याद् ईषदुष्णमोष्णमिति ।

ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः।
एतमातं ङितं विद्यात् वाक्यस्मरणयोरङित् ॥

ओत् । सू० १ । १ । १४

ओदन्तश्च निपातो यः स प्रगृह्यो भवेदिह ।
अहो ईशाः विराजन्ते वाक्यमेवंविधं ततः ॥

संबुद्धौ शाकल्यस्येतावनार्षे । १ । १ । १६

संबुद्धे रत्र ओकारः प्रगृह्योऽवैदिके इतौ ।
विष्णो इति स्थितावत्र विष्ण इति विष्णविति ॥

उञः । १ । १ । १७

इतौ परे विकल्पेन प्रगृह्यः स्यादुञः सदा ।
उ+इति विति च पक्षे प्रयोगो दर्शितः क्रमात् ॥

ऊँ । १ । १ । १८

दीर्घोऽनुनासिकश्चाथ इतौ परे उञश्च ऊँ ।
ऊँ इति पक्षतः शब्दः दर्शितः स विचार्यताम् ॥

मयः उञो वोवा । ८ । ३ । ३३

मयः परस्य जायेत उञो वो वाऽचि तेन हि ।
किमु उक्तं त्वया मित्र-किम्बुक्तं वा प्रयुज्यते ॥

ईदूतौ च सप्तम्यर्थे । १ । १ । १९

ईदूदन्तं प्रगृह्यं स्यात् सप्तम्यर्थेस्थितं पदम् ।
उदाहरणमत्रास्ति सोमो गौरी अधि श्रितः ॥
ऊदन्तोदाहृतं विज्ञैः मामकीयं तनू इति ।

अत्र फक्किका --

समासादौ क्वचिद् वृत्तावर्थान्तरोपसंग्रहात् ।
न स्यात् प्रगृह्य संज्ञापि वाप्यश्वस्तेन कथ्यते ॥

विस्तरेण—

अर्थग्रहणं किम् ? वाप्यश्वः ।

ईदूतौ चादि सूत्रेऽस्मिन् अर्थे पदं न कथ्यताम्
तदन्तविधिनैवेह ईदूदन्तं च सप्तमी ।
तस्य प्रगृह्यसंज्ञास्यात् सोमो गौरी अधिश्रितः
प्रत्यय लोप माश्रित्य प्रगृह्यं कार्यमिष्यते
व्यर्थे सञ्ज्ञापयत्यर्थे पदस्य भाव ईदृशः ।
सप्तम्यर्थमात्रबोधे संज्ञेयं नाधिके भवेत्
वाप्यश्वोऽत्र प्रयोगे हिं सप्तम्यर्थाधिकोऽस्ति वै.
तस्मात्प्रगृह्यकार्यं न जायते किन्तु यण् भवेत्
वापीनिष्ठाधिकरणता तन्निरूपिताऽधेयता
तद्वानश्वः प्रतीतौ च विशेषार्थः समागतः ॥

अणो प्रगृह्यस्यानुनासिकः । ८ । ४ । ४७

अन्त्यस्याणोऽप्रगृह्यस्यानुनासिकस्तु वा भवेत् ।
दधिँ दधि मधुँ मधु-श्यामँ श्याम प्रयुज्यते ॥
सुरेश झा कृतश्लोक सिद्धान्तकौमुदीकृतौ ।
स्वरसन्धि समाप्तौ श्री विश्वनाथः प्रसीदतु ॥

॥ इत्यच्सन्धिः प्रकृतिभावश्च समाप्तः ॥



# अथ हल्सन्धि-प्रकरणम्

संगतिः—अज्वर्णसन्धिज्ञानानन्तरमेव हल्वर्ण सन्धि-कार्यमुचितमितिविचार्य हलां सन्धिः—प्रदर्श्यंते।

अत्रसर्वप्रथमश्चुत्वसन्धिः—

स्तोः श्चुनाश्चुः। ८। ४। ४०

"स्तोः श्चुना श्चु" रिदंसूत्रम् स्तोः श्चुत्वस्य विधायकम्।
शकारेण चवर्गेण संयोगे स्तोश्च श्चुर्भवेत्।
रामश्शेते पुनश्चैषः सञ्चित् शार्ङ्गिञ्जय प्रभो॥

स्पष्टीकरणम्—

तवर्गस्य चवर्गेण योगे चवर्गता भवेत्।
तत् + चारुश्च तच्चारुः सत् + जनः सज्जनोऽस्त्ययम्॥
शकारेण चवर्गेण योगे सस्य च श भवेत्।
बालश्शेते प्रियश्श्यामः बालश्चिनोतिवृश्चति॥

श्चुत्वापवादः—

शात्। ८। ४। ४४

शात्परस्य तवर्गस्य श्चुत्वं न जायते पदे।
विश्नः प्रश्नः प्रयोगः स्यात् न विश्ञः प्रश्ञस्तथा॥

ष्टुत्वसन्धिः—

ष्टुना ष्टुः। ८। ४। ४१

ष्टुना ष्टुः पाणिनेः सूत्रं स्तोः ष्टुः क्रमेण जायते।
षकारस्य टवर्गस्य योगे सत्येव नान्यथा।
रामष्षष्ठश्च तट्टीका विद्वण्ढौकय मन्दिरम्॥

स्पष्टीकरणम्—

तवर्गस्य टवर्गेण योगे टवर्गता भवेत्।
तट्टीकते च तड्ढका तावट्टङ्कनमादि च॥

सकारस्य तवर्गस्य षटवर्गादि योगतः ।
सकारस्य षकारः स्यात् तादीनां टादयः क्रमात् ।।

उदाहरणम्—

श्यामष्षष्ठश्चतुष्षष्टिः विज्ञष्टीकितुमर्हति ।
इट्टे षष्ठः प्रियस्तुष्टः पयष्टीवी जनो बली ।।

ष्टुत्वनिषेध—

न पदान्ताट्टोरनाम् । ८ । ४ । ४२

पदान्तेभ्यः टवर्गेभ्यः स्तोः ष्टुत्वं न प्रवर्तते ।

अत्र वार्तिकम्ः—

नाम्नो नवति नगर्यो, नवर्णः ष्टुत्वमाप्नुयान्नियमतः ।
योगे ष्टुनाच षण्णाम् षण्णवतिः षण्णगर्य इति भवन्ति ।।

तोःषि ।८।४।४३

ष परेऽत्र तवर्गस्य ष्टुत्वं न क्रियते क्वचित् ।
सन् + षष्ठः पठन् षष्ठः प्रयोगः क्रियतां सदा ।।

झलां जश् झशि८।४।४४

झलां जशः पदान्ते स्युर्झसि वर्णे परे सति ।
वागीशः स्यात् तथाऽजन्तः षडाननः सदागतः ।।

स्पष्टीकरणम्—

दिक् + ईशः दिगीशः स्यादच् + आदि रजादिरिति ।
षट् + एव षडेवात्र उत् + बोध उद्बोधकः ।।

यरोऽनुनासिकेऽनुनासिको वा ८ । ४ । ४।

यरोनुनासिको वा स्यात् परवर्णेऽनुनासिके ।
तन्मुरारेः शुभं कार्यं तद् मुरारे नवं गृहम् ।।

अत्रफक्किका—

स्थानात्प्रयत्नतश्चापि सादृश्येष्वनुनासिकः ।
एतन्मुरारिरित्यादौ चरितार्थो विधिरयम् ।।

चतुर्मुखः प्रयोगेऽत्र तस्मान्नायं प्रवर्तते ।
स्थानमात्रेण सादृश्यमत्रास्ति नैव यत्नतः ॥
रेफोष्मणां सवर्णा न भवन्तीति वचः स्मरेत् ।
स्थानादपि न सादृश्यं वर्तते तद्विचार्यताम् ॥

प्रत्यये भाषायां नित्यम् । वा

यरोऽनुनासिकं नित्यं प्रत्ययस्थानुनासिके ।
तन्मात्रं चिन्मयं वाच्यम् एतन्मयमिति तथा ॥

अत्र विशेषः—

ककुद्मानादिशब्देषु नानुनासिक इष्यते ।
यवादिगणपाठेन दकारोऽत्र निपातनात् ॥

उदः स्थास्तम्भोः पूर्वस्य । ८ । ४ ६१

उदः परयोः स्थास्तम्भोः पूर्वसवर्ण इष्यते ।
आदेः परस्य सूत्रेण सस्य तः स्यात् सवर्णवान् ॥
तस्य लोपे दस्य चर्त्वे उत्थानमिति जायते ।
उत्तम्भनं भवेदत्र-उद्स्तम्भनमिति स्थितौ ॥

झयो होऽन्यतरस्यां वा पूर्ववर्णसमानवान् ८ । ४ । ६२

वाग्घरिः वाग्हरि वक्तुं शक्नोति विदुषां पुरः ॥

अथवा—

झयः परस्य हस्य स्यात् घवर्णः पूर्वसदृशः ।
वाग्घरिः वाग्हरिः पक्षे उभयं वक्तुमर्हति ॥

शश्छोऽटि ८ । ४ ।६३

पदान्तात्तु झयः पश्चात् शस्य छो वा विधीयते ।

खरि च ८ । ४ । ५५

खरिचेति झलां चर्त्वे खरि परे जायते पदे ॥
तस्मात् तत् + शिवश्चात्र जश्त्वे चर्त्वे कृते पुनः ।
शस्य छत्वं विकल्पेन तच्छिवः तच्शिव इति ॥
छत्वममीतिवचनादमि छः शस्य वा भवेत् ।
तच्छ्लोकेनात्र स स्तौति तच्श्लोकेन स्तुवन्ति ते ॥

## मोऽनुस्वारः ८ । ३ । २३

मोऽनुस्वारः पदे मान्ते हरिं वन्दे रिपुं जयेत् ।
अनुस्वारो मकारस्य पदान्ते हलि च परे ॥

## नश्चापदान्तस्य झलि ८ । ३ । ३४

पदमध्ये मकारस्य नकारस्य च प्रायशः ।
अनुस्वारो भवत्येव आक्रंस्येते यशांसि ते ॥

## अनुस्वारस्य ययि परसवर्णः ८ । ४ । ५८

ययि वर्णे परे वाक्ये पदे वा क्वापि च स्थले ।
अनुस्वारस्य पूर्वस्य परसवर्ण इष्यते ॥
अङ्कितः अञ्चितः पश्चात् कुण्ठितः शान्त उच्यताम् ।
गुम्फितः क्रमशश्चास्योदाहरणप्रदर्शनम् ॥
कुर्वन्तीत्यत्र णत्वेऽपि-तस्यासिद्धत्वतः पुनः ।
अनुस्वारादि कार्येण न स्याद्रूपे विशेषता ॥

लत्वसन्धिः—

## तोर्लि । ८।४।६०

तोर्लि सूत्रेण जायेत लः तवर्गस्य लपरे । ८ । ४ । ६०
तल्लाघवं भवेल्लोके तल्लयांश्च भवांल्लिखेत् ॥

स्पष्टीकरणम्—

पदान्तस्य तवर्गस्य लकारो लपरे सति ।
तत्+लूनञ्च तल्लूनं तत्+लयस्तल्लयो भवेत् ॥

## वा पदान्तस्य । ८ । ४ । ५८

पदान्तस्य अनुस्वार-वर्णस्य ययि वा भवेत् ।
पर सवर्ण इत्यत्र- त्वङ् करोषि प्रयुज्यते ॥
त्वं करोषीति पक्षेऽत्र-वाक्यं वदति पण्डितः ।
सँव्वत्सर स्तथा संवत्सरश्च पदमुच्यते ॥

**मोराजि समः क्वौ । ८ । २ । ३५**

समो मस्य म एव स्यात् क्विबन्ते राजतौ परे।
सम्राट् प्रयोग इत्यत्र नानुस्वारो हि जायते ॥

**हे मपरे वा । ८ । ३ । २६**

म परो यस्य हस्यास्ति तत्परे मस्य मोऽस्तु वा।
किम् ह्मलयति मार्गेषु किं ह्मलयति वा वदेत् ॥

**यथासंख्यमनुदेशःसमानाम् । १ । ३ । १०**

समानानां यथासंख्यमनुदेशो विधीयते।
इको यणचि सूत्रादौ प्रवर्तते इहापि च ॥

**यवल–परे यवला वेति वक्तव्यम् । वा०**

विकल्पेनैव जायन्ते–प्रयोगो दृश्यतामधः।
किय्ह्यः किंह्यः द्वयं रूपं किंव्ह्लयति स तथा ॥
किंव् ह्वलयति किंल्ह्लादयति पण्डितः स माम्।

**नपरे नः ८ । ३ । २७**

नपरकहकारेऽत्र मस्य नः स्याद् विभाषया।
किन्ह्नुते किंह्नुते बालः मातुः सम्मुखमागतः ॥

**ङ्णोःकुक् टुक् शरि । ८ । ३ । २८**

शरवर्णे परे क्वापि कुक्टुकौ वा ङणोः क्रमात्।
चयो द्वितीया शरि वा खठौ स्तः कटयोः सदा ॥
पौष्करसादिराचार्यः प्रावदत्कुक्टुगागमे ॥ वा०

उदाहरणम्—

प्राङ्ख् षष्ठश्च प्राङ्क्षष्टः प्राङ्षष्ठस्त्रिविधं वदेत्।
सुगण्ठ्षष्ठः सुगण्ट्षष्ठः सुगण्षष्ठोऽपि कथ्यते ॥

**डः सि धुट् । ८ । ३ । २९**

डात्परस्य सकारस्य धुड् वा भवति तेन च।

षड्सन्तः स्थितावस्यां षट्त्सन्तः प्रयुज्यते ॥
षट्सन्तः पक्षतश्चात्र प्रयोगःक्रियते बुधैः ।

नश्च । ८ । ३ । ३०

नात्परो यदि स वर्णः तस्य धुड् वा पदे भवेत् ।
सन्+सः सन्त्सः प्रयोगौ द्वौ धस्य चत्व कृते इह ॥

शि तुक् । ८ । ३ । ३१

पदान्त नस्य तुग् वा स्यात् शे परे श्चुत्व छत्वतः ।
सञ्छंभुः किल सञ्चछंभुः सञ्च् सञ् शंभुरिष्यते ॥

अत्र विशेषः—

ञछौ ञचछा ञचशा ञशाविति चतुष्टयम् ।
रूपाणामिह तुक्छत्व चलोपानां विकल्पनात् ॥

ङमो ह्रस्वादचि ङमुण् नित्यम् । ८ । ३ । ३२

ह्रस्वात्परे च ङनणाः द्वित्वं यान्ति स्वरे परे ।
प्रत्यङ्ङात्मा सुगण्णीशः गच्छन्नयं वदन्नहम् ॥

समः सुटि । ८ । ३ । ५

समो मस्य भवेद्रुत्वं सकारे च परे सदा ।

अत्रानुनासिकः पूर्वस्य तु वा । ८ । ३ । २

अत्रानुनासिकः स्याद्वै रोः पूर्वस्य विकल्पतः ॥

अनुनासिकात्परोनुस्वारः । ८ ३ । ४

यदाऽऽनुनासिको न स्याद् अनुस्वारस्तदा भवेत् ।

विसर्जनीयस्य सः । ८ । ३ । ३४ । (इति प्राप्ते ।)

संपुंकानां सो वक्तव्यः । वा ।
संपुंकानां विसर्गस्य स्थाने सत्वं विधीयते । वा० ।
सँस्स्कर्ता स च संस्स्कर्ता द्वयं रूपं प्रयुज्यते ॥
रो रेफस्य विसर्गः स्यात् विसर्गस्य च स भवेत् ।

समो वा लोपमेकेऽत्र इति भाष्यवचो बलात् ।
समो मस्य च लोपेन अनुस्वारानुनासिकौ ॥
एकसकारकं रूपं सँस्कर्ता संस्कर्ता पुनः ।
अनचिचेति सस्य स्यात् द्वित्वं रूपद्वये पुनः ॥
त्रिसकारकरूपाणि चत्वारि संभवन्ति वै ।
सानुनासिकत्रिरूपे कस्य द्वित्वेन षड्भिदः ॥
सानुस्वारेषु रूपेषु द्विर्द्वित्वं तेन द्वादश ।
एषामष्टादशानाञ्च तस्य द्वित्वं हि द्विर्भवेत् ॥
चतुःपञ्चाशच्च रूपाणि एक द्वि त्रितकारतः ।
तत्राणोऽनुनासिकं कृत्वा रूपमष्टोत्तरं शतम् ॥

पुमः खय्यम्परे । ८ । ३ । ६

पुमः खय्यम्परे सूत्रम् अम्परे खयि रुः पुनः ।
अनुनासिकानुस्वारौ विसर्गः सत्वमत्र च ॥
पुँस्कोकिलः पुंस्कोकिलः पुँस्पुत्रः पुंस्पुत्र इति ।
ख्याञा देशे न रुत्वं स्यात् पुंख्यानं तेन कथ्यते ।
चक्षिङो ल्युडनादेशे चक्षिङश्च खशादिरिति ॥
शकारस्य यकारोऽत्र-तदसिद्धे न रु भवेत् ।

नश्छव्यप्रशान् । ८ । ३ । ७

नश्छव्यप्रशान् सूत्र मम्परे छवि नस्य रुः ॥
अनुनासिकानुस्वार विसर्गसत्वश्चुत्वतः ।
शार्ङ्गिँश्छिन्धि शार्ङ्गिंश्छिन्धि, चक्रिंस्त्रायस्व मां सदा ॥

नॄन् पे । ८ । ३ । १०

नॄन् नकारस्य रुत्वं वा पकारादि पदे परे

कुप्वोः )(क )( पौ च । ८ । ३ । ३७

कुप्वोश्च परयोरत्र विसर्गस्य )(क)(पाविति ।
विसर्गस्य च तत्पश्चादनुनासिक इत्यपि ।
अनुस्वारोऽपि पक्षेऽत्र तस्माद्रूपचतुष्टयम् ॥
नॄन् पाहि इति स्थित्यां नॄँ)(पाहि नॄँ पाहि च
नॄँः पाहि किल नॄं पाहि रूपमेवं विधं वदेत् ॥

कानाम्रेडिते । ८ । ३ । १२

कान् नकारस्य रुत्वं स्यात् आम्रेडितपदे परे
अनुनासिकादि कार्येण काँस्कान् काँस्कानिति भवेत्

कस्कादिषु च । ८ । ३ । ४८

कष्कादिगणशब्देषु इणः परस्य सस्य षः ।
अन्यत्र सः विसर्गस्य धनुष्कपालं कस्क इति

छे च । ६ । १ । ७३

छे च सूत्रेण ह्रस्वस्य तुगागमः सदैव छे ।
शिव + छाया शिवच्छाया ग छ ति सच गच्छति
तुकस्तस्यात्र जश्त्वेन चर्त्वेन च इति स्थितिः ।

ओमाङोश्च । ६ । १ । ७४

ओमाङोश्चेति सूत्रेण ओमाङोश्छेपरेऽत्र तुक् ।
तस्य श्चुत्वेन रूपं स्याद् आच्छादयति माच्छिदत् ॥

दीर्घात् । ६ । १ । ७५

दीर्घात् स्वरात् छपरश्चेत् तत्र दीर्घस्य तुग् भवेत्
चेच्छिद्यते तरुं पापी वाक्यमेवं प्रयुज्यते ॥

पदान्ताद्वा । ६ । १ । ७६

पदान्तदीर्घवर्णस्य छे परे तुग् विभाषया ।
लक्ष्मीच्छाया तवाऽवासे लक्ष्मीछायास्ति वा वदेत् ॥
सिद्धान्तकौमुदीकाव्ये हल्सन्धिः पूर्णतामगात्
अतः परं विसर्गस्य सन्धिकार्यं प्रदर्श्यते ॥

इति हल्सन्धिप्रकरणम् ॥



# अथ विसर्गसन्धिप्रकरणम् ।

खरवसानयोर्विसर्जनीयः । ८ । ३ । १५

**पदान्तस्य च रेफस्य विसर्गो जायते खरि ।**
**अवसानेऽपि रेफस्य विसर्गः क्रियते सदा ॥**

विसर्जनीयस्य सः । ८ । ३ । ३४

**खरिविसर्जनीयस्य सत्वं भवति सर्वदा ।**
**विष्णुः त्राता इति स्थित्यां विष्णुस्त्राता प्रयुज्यते ॥**

शर्परे विसर्जनीयः । ८ । ३ । ३५

**शर्परे खरि कुत्रापि विसर्गस्य विसर्गकः ।**
**घनाघनः क्षौभणोऽस्ति कःत्सरुश्च प्रयुज्यते ॥**

वा शरि । ८ । ३ । ३६

**शरि परे विसर्गस्य विसर्गः स्याद्विभाषया ।**
**हरिश्शेते हरिःशेते प्रयोगं स्वेच्छया कुरु ॥**
**खर्परेशरि वा विसर्गलोपो वक्तव्यः । वा**
**खर्परे शरिवालोपः विसर्गस्य विधीयते ।**
**रामस्थाता तथारामःस्थातापि कथ्यतामिह**
**हरिस्फुरति वक्तव्यं हरिः स्फुरति कथ्यताम्**

सोऽपदादौ । ८ । ३ । ३८

**अपदादि परयोः कुप्वोः विसर्गस्य च स भवेत्**
**पयस्पाशं यशस्कल्पं यशस्काम्यति स जनः ॥**

अनव्ययस्येति वाच्यम् । वा ।

**अनव्ययविसर्गस्य सत्वमनेन जायते ।**
**प्रातःकल्पमिह सत्वं तस्मादेव न जायते ॥**
**काम्ये रो रे वेति वाच्यम् । वा ।**

रुत्वे कृते विसर्गो यः सत्वं तस्यैव काम्यचि।
गीः काम्यतीह सत्वं न पूःकाम्यति इहापि न।

इणः षः। ८। ३। ३९

इणः परविसर्गस्य षकारः पूर्वसंस्थितौ
सर्पिष्पाशश्च सर्पिष्कं—सर्पिष्काम्यति स जनः॥

नमः पुरसोर्गत्योः। ८। ३। ४०

गतिसंज्ञावतश्चात्र नमसः पुरसस्तथा।
विसर्गस्य भवेत्सत्वं कुप्वोश्च परयोः सदा॥
नमस्करोति स देवान् पुरस्करोति सज्जनान्
गतिसंज्ञा न यत्रास्ति—नमः करोति तत्र च॥

इदुपधस्य चाप्रत्ययस्य। ८। ३ ४१

अप्रत्ययविसर्गस्येकारोकारोपधस्य च।
षः स्यात् कुप्वोश्च परयोः निष्प्रत्यूहश्च दुष्कृतम्॥
भ्रातुष्पुत्रस्य षत्वार्थं कस्कादौ पाठकारणाम्
एकादेशे कृते पश्चात् यो विसर्गः प्रवर्तते॥
तस्य षत्वं न कर्तव्यमिदुपधेति सूत्रतः।
तस्मान्मातुःकृपेत्यत्र विसर्ग एव पठ्यते॥
मुहुसः प्रतिषेधोऽस्ति मुहुः कामाऽत्र नैव षः।

तिरसोऽन्यतरस्याम्। ८। ३। ४२

तिरश्शब्दविसर्गस्य सः स्यात् कुप्वोर्विभाषया।
तिरस्कर्ता तिरःकर्ता दुर्जनः केवलं सताम्॥

द्विस्त्रिश्चतुरिति कृत्वोऽर्थे। ८। ३। ४३

कुप्वोर्हि परयोरेव कृत्वोऽर्थे द्विस्त्रिसोश्च षः।
द्विष्करोति द्विःकरोति त्रिष्करोत्यादि वा भवेत्

अत्रफक्किका—

द्विस्त्रिसिति सुजन्ताभ्यां साहचर्याच्चतुरपि
सुजन्त एव ग्राह्यः स्यात् किमर्थं कृत्वोऽर्थं इति

तद् व्यर्थं नियमं कुर्यात् साहचर्यमनित्यमिति
तस्माच्चतुष्कपालेऽत्र नित्यं षत्वं प्रवर्तते ।

इसुसोः सामर्थ्ये । ८ । ३ । ४४

इसुसोस्तु विसर्गस्य सामर्थ्ये सति वाऽत्र षः ।
कुप्वोस्तु परयो रेव सर्पिः सर्पिष्करोति सः ॥
धनुष्करोति रूपं स्यात् पक्षे धनुः करोति सः ॥
सामर्थ्यं च व्यपेक्षात्र नैकार्थीभाव इष्यते ।
सर्पिष्कुण्डमिदं तस्य धनुष्कपाल इत्यपि ॥

नित्यं समासेऽनुत्तरपदस्थस्येति सूत्रतः । ८ । ३ । ४५

अनुत्तरपदस्थस्य विसर्गस्येसुसोरिह
नित्यं षत्वं भवेत् कुप्वोः–सर्पिष्कुण्डं च कुण्डिका ।
यत्रोत्तरपदं तत्र– परमसर्पिः कुण्डिका ॥

अतः कृकमिकंसकुम्भपात्रकुशाकर्णिष्वनव्ययस्य ।८।३।४६

अनव्ययविसर्गस्य अकारादुत्तरस्य च ।
समासे सति नित्यं सः परेषु कृकमादिषु ॥

उदाहरणम्—

अयस्कारः अयस्कामः अयस्कंसः अयस्कुशा ।
अयस्कुम्भः अयस्पात्रम्-अयस्कर्णी प्रयुज्यताम् ॥

अधःशिरसी पदे । ८ । ३ । ४७

अधसः शिरसश्चात्र विसर्गस्य च सः सदा ।
पदशब्दे परे तस्मात् अधस्पदं शिरस्पदम् ॥

इति विसर्गसन्धिप्रकरणम्



# अथ स्वादिसन्धिः

ससजुषो रुः । ८ । २ । ६६

पदान्तसस्य सजुषः षस्यापि रुर्विधीयते ।
रोरुकारस्य इत्संज्ञा लोपो भवति रुविधौ ॥

खरवसानयोःसूत्रात् विसर्गः क्रियते पदे । ८ । ३ । १५
खर्परस्य पदान्तस्य विसर्गो रस्य जायते ॥
रामः कृष्णः शिवः श्यामः स्वः सजूः वाः पुनः प्रियः ॥

अतो रोरप्लुतादप्लुते । ६ । १ । ११३

अकारादप्लुतात्पश्चात् रोरस्य उश्च जायते
अप्लुतोऽकारवर्णश्चेत् परस्तिष्ठति साधने ॥
शिवस् अर्च्य इति स्थित्यां सस्य रुत्वं विधीयते ।
रुत्वे कृते शिवर् अर्च्यः अतोरोरप्लुतादिति ॥
उत्वे जाते गुणः पश्चात् पूर्वरूपे शिवोऽर्च्य इति ॥

सारांशः—

आत्परस्य विसर्गस्य अपरे ओ भवेत् सदा
यशोऽमलञ्च रामस्य कुतोऽयं नभसोऽपतत् ।

हशि च । ६ । १ । ११४

अतोऽप्लुताच्च रोरुः स्यात् हश् वर्णे च परे सति ।
शिवस् + वन्द्यः शिवो वन्द्यः रुत्वमुत्वं गुणः क्रमात् ॥

सारांशः—

तृतीये पञ्चमे तुर्य्ये अन्तःस्थे हपरे पुनः ।
आत्परस्य विसर्गस्य उत्वं कृत्वा गुणेन ओ ॥

उदाहरणम्—

रामो गच्छति, बालो मे, देवो भवति वो नमः
यशो ढक्का जनो हीनः सर्वत्र हशि चेति उः ॥

भो भगो अघो अपूर्वस्य योऽशि । ८ । ३ । १७

भो भगोऽघो अपूर्वस्य रोर्यः स्यादशि च परे
देवास् इह देवार् इह-देवाय् इह ततः परम्
यस्य लोपो विकल्पेन देवा इह देवायिह
भोस् भगोसघोसेते सकारान्ता निपानिताः।
तेषां रुत्वे च यत्वे च कार्यमग्रे विचार्यते

पदान्त यस्यवस्यापि लघूच्चारणकौ यवौ । ८ । ३ । १८

स्याताम‌शि विकल्पेन-सूत्रमेतत्प्रवर्तते।

ओतो गार्ग्यस्य सूत्रेण लोपो यस्यालघोर्भवेत् । ८ । ३ । २०

लघुप्रयत्नपक्षेऽत्र यस्य लोपो न जायते ॥
तस्माद् भो अच्युत रूपं पक्षे भोयच्युत वदेत् ॥

हलि सर्वेषाम् । ८ । ३ । २२

भोस् भगोस् अघोस् शब्दे सस्य रुत्वं च रोश्च यः।
यस्य लोपो भवेदस्मात् हलिवर्णे परे सति ॥

उदाहरणम्—

भो देवाः पात भक्तान् नः भो लक्ष्मि तिष्ठ मद् गृहे
भो विद्वज्जनं वन्दे त्वां भगो नमः सदास्तु ते।
अघो याहि गृहान्मेऽतः देवा यान्तु न मद्गृहात्
उपर्युक्तप्रयोगेषु रुत्वं यत्वं यलोप इह ॥

उञि च पदे । ८ । ३ । २०

उवर्णपूर्व य व यो र्लोपः स्यादुञि च परे।
सस् उ एकाग्नि रत्र-स उ एकाग्निरिष्यते

रोऽसुपि । ८ । २ । ६९

रेफादेशो भवेदह्नः नकारस्याऽसुपि परे।

अहन् ÷ अहः अहरहः अहन्गणः अहर्गणः
रूप रात्रि रथन्तरेषु अह्नो नस्य च रु र्भवेत्
तस्य उत्वे गुणे जाते अहोरूपमिदं पदम् ॥

अहोरात्रिर्भवेदेव महोरथन्तरमपि ॥
एकदेशविकृतस्य ग्रहणं तद्वदेव हि
अहोरात्रमिहापि स्याद्रुत्वमत्र न संशयः ॥
पत्यादिष्वहरादीनां वा रेफः क्रियते पदे ।
अहर्पतिर्दिने दृष्टः उदेत्यहः पतिर्दिने ॥
गीर्पतिर्गीष्पतिः स्वर्गे-धूर्पतिरिह वर्तते ॥

रो रि । ८ । ३ । १४ ।

ढोढे लोपः । ८ । ३ । १३

ढ्रलोपे पूर्वस्याणो दीर्घः । ६ । ३ । १११

त्रयाणामेव सूत्राणां सारः—

र परे रस्य लोपः स्यात् ढ परे ढस्य च तथा ।
पूर्वस्याणो भवेद्दीर्घः रढलोपस्थिताविह ॥

उदाहरणम्—

पुना रात्रिः गुरू रुष्टः हरी रम्यो लघू रणः ।
ली ढोकनश्च तौ लीढः साध्यन्ते र ढ लोपतः ॥
अत्र सन्धिविच्छेदः—
पुनर् रात्रिः, गुरुर् रुष्टः, हरिर् रम्यः लघुर् रणः ।
लिढ् ढौकनमित्यस्ति लिढ् ढः क्तः यदा लिहः ॥

विप्रतिषेधे परं कार्यम् । १ । ४ । २

तुल्यबलविरोधे स्यात् परकार्यं विशेषतः ।
इह विप्रतिषेधेन तुल्यशक्तिग्रहो भवेत् ॥

अत्र फक्किका—

मन स् रथ इति स्थित्यां सस्य रुः क्रियते यदा ।
हशि च रो रि सूत्रेण कार्यद्वयमुपस्थितम् ॥
विप्रतिषेधे च परं रोरि लोपः प्रवर्तताम्
इति यत्कथितं तत्र निर्णयः पुनरागतः ॥
पूर्वत्रासिद्धमित्यस्य बलादुत्वं भवेदिह ।
कार्ये पूर्वत्र कर्तव्ये परलोपो न जायते ॥

तस्माद्धशि च सूत्रं वै प्रवृत्तमुत्वकारकम् ।
उत्वे कृते गुणे जाते मनोरथश्च सिद्धयति ॥

एतत्तदोः सुलोपोऽकोरनञ्समासे हलि । ६।१।१३२

एतत्तदोः सु विभक्तेः लोपः स्यात् व्यञ्जने परे ।

स पठति स भाषेत एष बालः स पण्डितः ॥

सोऽचि लोपे चेत्पादपूरणम् । ६ । १ । १३४

तदेतदोः सुविभक्तेः लोपःस्यात्पादपूरणे
सैष दाशरथी रामः स एष भरतः सुतः ।
सैष कर्णो महा त्यागी सैष भीमो महाबलः ॥
सिद्धान्तकौमुदीकाव्ये-सुरेश झा कृते नवे ।
सन्धिकार्यप्रकरणं समाप्तं सरलीकृतम् ॥
सिद्धान्तकौमुदीस्था ये शब्दाः सन्ति ससन्धयः ।
तेषां सिद्धिं समालोक्य बुद्धिं वर्धयतां स्वयम् ॥

इति स्वादिसन्धिः ।



# अथाजन्तपुंलिङ्गप्रकरणम्

निरूप्य संज्ञापदमत्र पूर्वं
सन्धीन् समस्तान् सुनिरूप्य पश्चात् ।
विभिन्नलिङ्गस्थितशब्दरूप
बोधाय विज्ञो यततें सुरेशः ॥

इष्टस्मरणम्—

गणेशः प्रथमो देवः गणेशं नौमि साञ्जलिः
गणेशेन सुसिद्धिर्मे गणेशाय नमो नमः ॥
गणेशात् लभते ज्ञानं गणेशस्य स्तुतिः शुभा ।
गणेशे भक्तिमानस्मि हे गणेश शुभं कुरु ।

अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १ । २ । ४५

धातुप्रत्ययभिन्नं यत् शब्दस्वरूपमर्थवत् ।
तस्य स्यात् प्रातिपदिकसंज्ञा रूढपदस्य वै ॥
अर्थवद् ग्रहणं नैव क्रियते चेत्तदा त्विह ।
धनादिशब्दे प्रत्येकमक्षरादपि सुप् भवेत्
प्रत्ययपर्युदासोऽपि यदि न क्रियते तदा ।
केवलं प्रत्ययस्यापि संज्ञास्यात्तन्न शोभनम्
धातूनां प्रातिपदिकसंज्ञा न स्यात्तदर्थकम्
धातुभिन्नमिति प्रोक्तं सर्वमेतद्विचार्यताम्

कृत्तद्धितसमासाश्च । १ । २ । ४६

कृदन्तास्तद्धितान्ताश्च समाससंज्ञकाश्च ये
यौगिकास्तेऽपि जायन्ते प्रातिपदिकसंज्ञकाः ॥
प्रातिपदिकमेवास्मिन् शास्त्रे नाम निगद्यते ॥
अत्र चकारशब्देन निपातादेर्ग्रहो भवेत्
तेषामपि यथा संज्ञा तदर्थं क्रियतेऽत्र च ॥

ननु समासकार्येऽपि धातुप्रत्ययभिन्नता ।
वर्तते पूर्वसूत्रेण संज्ञास्यादेव तत्कथम् ? ॥
समासग्रहणं चात्र क्रियते तद्वदाधुना ।
नियमार्थमिदं तावत् समासग्रहणं भवेत् ॥
संघाते यत्र दृष्टं स्यात् पूर्वो भागः पदं तथा ।
उत्तरः प्रत्ययो नास्ति तस्य संज्ञा भवेद् यदि ॥
समासस्यैव नान्यस्य वाक्यस्य जायते क्वचित् ।
तस्माद् गोविन्द धेनुं तामभ्याजादौ न संज्ञया ॥
सुपां लुग् जायते तेन सर्वमिष्टं सुसिद्धयति ।
पूर्वसूत्रे हि संकोचे सङ्घातस्य न स्यात्ततः ॥
समासग्रहणं तस्मात् स्वांशे साफल्यमश्नुते ॥
जन्मवान् प्रत्ययान्तोऽस्ति नियमेनैव वार्यते ।
बहुपटवोऽत्र पूर्वपदं न तन्निवार्यते ॥

प्रत्ययः । ३ । १ १

आपञ्चमसमाप्तेरधिकारः प्रत्यय इष्यते ।

परश्च । ३ । १ । २

परश्चाप्यधिकारोऽस्ति प्रत्ययः पर एव हि ॥

ङ्याप्प्रातिपदिकात् । ४ । १ । १

ङ्यन्तादाबन्तशब्दाच्च प्रातिपदिकसंज्ञकात् ।
परभागे समायान्ति प्रत्ययाः सुब्विभक्तयः ॥

फक्किका—

गृहीते प्रातिपदिके लिङ्गयुक्तोऽपि गृह्यते ।
ङ्याबन्तादपि स्वादिः स्यात् किमर्थं क्रियते इदम् ॥
तद् व्यर्थं नियमाय स्यात् ङ्याबन्तादेव तद्धितः ।
प्रत्ययो भवतीत्येवं नियमं कुरुते इह ॥
ङ्याब्भ्यां पूर्वं भवेन्नैव तद्धित इति निश्चयात् ।
लोहिनिका पदं सिद्धयेत् लोहितिकाऽन्यथा पुनः ॥
एवं स्यादार्यका रूपं नियमस्य प्रभावतः ।
अन्यथा आर्यिकैव स्याद् जानीयाद् गुरुतोऽधिकम् ॥

स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् । ४ । १ । २

स्वौजसमौट्शसः टाभ्यां भिस् ङेभ्याम् भ्यसः पुनः ।
ङसि भ्यां भ्यस् ङसोसाम् च ङ्योस्सुपश्च विभक्तयः ॥

स्पष्टीकरणम्

सु औ जस् प्रथमा नाम द्वितीयाऽमौट् शसस्तथा ।
टाभ्यां भिस् तृतीयाऽस्ति चतुर्थी ङे च भ्यां भ्यसौ ॥
पञ्चमी ङसि भ्यां भ्यसः ङसोसां षष्ठ्युदाहृता ।
ङ्योस्सुपः सप्तमी प्रोक्ता ङ्याभ्यां प्रातिपदिकादिमाः ॥
उ ज श ट ङ पा वर्णाः विभक्तिमध्यवर्तिनः ।
अनुबन्धाश्च वर्त्तन्ते इत्संज्ञकाः इमे समे ॥
सु विभक्ति समारभ्य ङ्योस्सुपां पेन सह भवेत्
प्रत्याहारः सुबत्रास्ति स्वादीनां बोधकारकः ॥

विभक्तिश्च । १ । ४ । १०४

विभक्तिसंज्ञकावत्र सुप् तिङौ विदितौ सदा ।

सुपः । १ । ४ । १०३

सुपस्त्रीणि त्रीणि यानि सन्ति तेषु क्रमेण वै ।
एकवचनं द्विवचनं बहुवचनमुच्यते ॥

द्व्येकयोर्द्विवचनैकवचने । १ । ४ । २२

द्व्येकयोर्द्विवचनैकवचने इति सूत्रतः ।
एकत्वे एकवचनं द्वित्वार्थे द्विवचनं भवेत् ॥

बहुषु बहुवचनम् । १ । ४ । २१

बहुत्वे बहुवचनं प्रातिपदिकतो भवेत् ॥

सरूपाणामेकशेष एकविभक्तौ । १ । २ । ६४

सरूपाणां प्रकृतीनामेकशेषोऽत्र जायते ।
यद्येकैव विभक्तिः स्यात् परभागे तदा हि सा ॥

रूपसाधनम्—

रामः रुत्वविसर्गेण रामौ वृद्धिविधानतः।
रामाः इति प्रथमयोः पूर्वसवर्णदीर्घतः॥

चुटू । १ । ३ । ७

चुटू सूत्रात् प्रत्ययानामादी चुटू विलुप्यतः।

न विभक्तौ तुस्माः । १ । ३ । ४

विभक्ति मध्ये ये तुस्मास्तेषामित्वं न जायते।
तस्मात् जसः सकारस्य नेत्संज्ञा जायते पदे।

अतो गुणे । ६ । १ । ९७

अतो गुणे इति सूत्रं पररूपविधायकम्।
अपदान्तादकाराद्—गुणे परे विशेषतः॥
पुरस्तादपवादा ये बाधन्ते ते अनन्तरान्। परि०।
विधीन् किन्तूत्तरान् नैव तस्मात् प्रथमयोरिति,
दीर्घकार्यं भवत्येव रामाः पदं ततो भवेत्॥

एकवचनं संबुद्धिः । २ । ३ । ४९

संबुद्धिरेकवचनं प्रथमायास्तु जायते।

एङ्ह्रस्वात् संबुद्धेः । ६ । १ । ६९

संबुद्धेर्लोप एङन्ताद् ह्रस्वात्परस्या जायते।
हे राम! हे हरे! विष्णो! रूपं संबोधने ततः॥
संबुद्धिलोपे अङ्गस्य एङ् ह्रस्वाभ्यां विशेषणात्।
हे कतरत् कुलेत्यादौ लोपो नैव प्रवर्तते॥
ह्रस्वान्तत्वं नचाङ्गस्य वर्ततेऽत्र टिलोपतः॥
हे विष्णो! हे हरे अत्र परत्वान्नित्यतो गुणे।
कृते ह्रस्वो न स्यात् तस्मात् सूत्रेऽस्मिन्नेङ् प्रदर्शितम्॥

अमि पूर्वः । ६ । १ । १०७

अमि पूर्वः सूत्रमस्ति अकोऽम्यचि परे सदा।
पूर्वरूपं विधातव्यं रामं हरिं मतिं रमाम्॥

लशक्वतद्धिते । १ । ३ । ८

ल श कवर्ग वर्णा ये तद्धिताद्भिन्नप्रत्यये ।
इत्संज्ञकाश्च ते सन्ति शसि श इत्संज्ञकः ।

तस्माच्छसो नः पुंसि । ६ । १ । १०३

शसः सस्य नकारः स्यात् पुंसि दीर्घात्परस्य च ।
रामान् हरीन् विधून् पितॄन् आदि रूपं ततो भवेत् ।

अट्कुप्वाङ्नुम्व्यवायेऽपि । ८ । ४ । २

अट्कुप्वाङ् नुम् व्यवाये र ष परस्य नस्य णः ।
पदं यदि भवेदेकं तदैवेदं प्रवर्तते ॥
रघुनाथे तथा रामनामादौ स्यात्ततो न णः,
रामायणादिशब्देषु संज्ञात्वाण्णत्वमिष्यते ।
शूर्पणखा प्रयोगोऽपि तत एव प्रसिद्ध्यति ॥

पदान्तस्य । ८ । ४ । ३७

पदान्तनस्य णत्वं न तस्माद् रामान् हरीनिति ।
रामनामादिशब्देषु द्विपदत्वान्न णो भवेत् ॥

यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम् । १ । ३ । १३

यस्मात्प्रत्ययविधानं तत्प्रत्यये परे सदा ।
तदादिपूर्वमङ्गं स्यात् भवामि तेन सिद्ध्यति ॥

अङ्गस्य । ६ । ४ । १

अङ्गस्येत्यधिकारोऽयं तस्मादग्रे प्रयाति च ।

टा ङसि-ङसामिनात्स्याः । ७ । १ । १२

टा ङसि ङसामिनात्स्याः आदेशा अङ्गसंज्ञकात्
अदन्तादेव जायन्ते रामेण रामात् क्रमात् ॥

सुपि च । ७ । ३ । १०२

यजादौ सुप्यतोऽङ्गस्य दीर्घेण रामाभ्यामिति ।

अतो भिस ऐस् । ७ । १ । ९

अतोऽङ्गादैस् भिसः कार्यं रामैरिति च वृद्धितः ।

ङेर्यः । ७ । १ । १३

अदन्तादङ्गतो ङेर्यः रामाय सुपि दीर्घतः ।
सन्निपातलक्षणं नात्र परिभाषा प्रवर्तते ।
कष्टाय क्रमणे सूत्रनिर्देशान् नित्या न सा ।
तस्माद्दीर्घनिषेधो न रामायादिपदे इह ॥
रामशब्दादिह भ्यां स्याद् रामाभ्यां सुपि दीर्घतः ।

बहुवचने झल्येत् । ७ । ३ । १०३

झलादौ बहुवचने सुप्यदन्तस्य ए भवेत् ।
अङ्गान्तस्यैव तस्माद्धै रामेभ्यः स्यादिहैत्वतः ॥

वाऽवसाने । ८ । ४ । ५६

वाऽवसाने झलां चर्त्वं रामात् रूपं भवेन्ङसौ ।
आत् क्रियते ङसेरत्र पश्चात्सवर्णदीर्घतः ॥
पञ्चम्यां भ्यामि रामाभ्यां पूर्ववदेव दीर्घतः ।
पञ्चमी बहुवचने रामेभ्यः झलि एत्वतः ॥
रामस्य इति षष्ठ्यां स्यात् अदन्तात् स्य ङसोऽभवत् ।

ओसि च । ७ । ३ । १०४

अदन्ताङ्गस्य एत्वं स्यादोसि च प्रत्यये परे ।
अलोऽन्त्यस्येति स्यादन्ते तस्याप्यय् रामयोरिति ।

ह्रस्वनद्यापो नुट् । ७ । १ । ५४

नुड् भवेद् ह्रस्वनद्यापः परस्यामः सदैव हि ।

नामि । ६ । ४ । ३

नुटि कृते नामिसूत्रादजन्ताङ्गस्य दीर्घता ।
ततो णत्वं तदा रूपं रामाणामिति सिद्ध्यति ॥
सप्तम्यामेकवचने रामे रूपं गुणे कृते ।
रामयोरेत्वमोसि स्यादयादेशश्च पूर्ववत् ॥

अपदान्तस्य मूर्धन्यः । ८ । ३ । ५५

इण्कोः । ८ । ३ । ५७

आदेशप्रत्यययोः । ८ । ३ । ५९

रामेषु बहुवचने झल्येत्वं स्यात् षत्वमपि ।
इण् कवर्गपरस्यैवापदान्तादेशरूपिणः ।
सकारस्य भवेत् षत्वं प्रत्ययावयवस्य च ॥
श्रीपाणिनेः सूत्रमुदीर्य तस्य
सारार्थमाभाष्य यथोचितञ्च ।
रूपाणि सर्वाणि प्रदर्शयामि
वाक्यप्रयोगैः पठतां हिताय ॥

रामशब्दरूपसंग्रन्थनम्—

राम: श्रीभगवानेकः रमन्ते यत्र योगिनः ।
रामौ दाशरथिश्चैकः कृष्णाग्रजश्च कथ्यते ॥
रामाः परशुरामेण सह भवन्ति ते त्रयः ।
रामं रामौ तथा रामान् प्रणमन्ति सदा जनाः ॥
रामेण सह रामाभ्यां रामैः सङ्गं चिकीर्षतु ॥
नमो रामाय रामाभ्यां रामेभ्यः पुष्पमर्पयेत् ।
रामात् सदैव रामाभ्यां रामेभ्यः पापिनां भयम् ।
रामस्य रामयोः भक्तिः रामाणां शुभदा सदा ।
रामे श्रद्धां रामयोश्च रामेषु कुरुते न कः ।
हे राम पाहि हे रामौ हे रामाः रक्षत जगत् ॥

बालशब्दरूपदर्शनम्—

बालः पठति शालायां बालौ तौ पठतः सदा ।
बालाः पठन्ति ते सर्वे बालं पाठयते गुरुः ।
बालौ बालान् समाहूय बालेन सह गच्छति
बालाभ्यां कोऽपि बालैः सह गच्छति शिक्षकः ।
बालाय मधुरं दत्ते बालाभ्यां द्वे च पुस्तके ।
बालेभ्यः तानि सर्वाणि दत्तामाम्रफलानि वै ॥
बालात् प्रसन्नो बालाभ्यां बालेभ्यः किं बिभेति सः ।
बालस्य बालयोः त्वञ्च बालेषु सरलो भव ॥
हे बाल बालौ हे बालाः यूयं क्रीडत नन्दत ।

**निर्देशनम्—**

देवः कृष्णः शिवः शैवः कालस्तालो नरः सुरः ।
बुधः वृद्धः शशः सर्पः निशाकरः प्रभाकरः ॥
मानवो दानवो दीनः घटः पटो मठः शठः ।
एतादृशाऽदन्तशब्दाः पुंलिङ्गे रामबालवत् ॥

**अथ सर्वनामशब्दप्रकरणम्—**

सर्वेषां नाम बुध्येत येन वै सर्वनाम तत् ॥
सर्वविश्वादयः पञ्चत्रिंशत्सर्वनामसंज्ञकाः ।
संज्ञाभूतस्य गौणस्य क्वापि न सर्वनामता ॥
तदन्तस्यापि संज्ञेयं द्वन्द्वे चेति निषेधतः ।
तस्मात्परमसर्वत्र शब्दे त्रल् प्रत्ययोऽभवत् ॥
परमभवकानित्यादावकच् तस्मात्प्रवर्तते ।

जशः शी ७ । १ । १७

जसः शी जायतेऽदन्तात् सर्वनाम्नः परस्य वै ।
सर्वे विश्वे प्रयोगाः स्युः जसःशीति प्रवृत्तितः ॥

सर्वनाम्नः स्मै । ७ । १ । १४

अदन्तात्सर्वनाम्नस्तु स्मै आदेशः परस्य ङेः ।
सर्वस्मै ङे चतुर्थ्यां स्यात् संज्ञायां सर्वाय इति ॥
अतिसर्वाय गौणे स्यात् प्रयुञ्जीत विचार्यवै ॥
अत्वे कृते त्यदादीनामस्मै तस्मै तथैव च ॥

ङसि ङ्योः स्मात् स्मिनौ । ७ । १ । १५

अदन्तात्सर्वनाम्नस्तु ङसिङ्योः स्मात्स्मिनौ क्रमात् ।
सर्वस्मात् किल सर्वस्मिन् तस्मात् तस्मिन्नादि च ॥

आमि सर्वनाम्नः सुट् । ७ । १ । ५२

अदन्तात्सर्वनाम्नश्च विहितस्यामः सुडागमः ।
एत्वे षत्वे च सर्वेषां केषां तेषामादि च ।
ङसिङ्योः स्मात्स्मिनौ सूत्राद् अदन्तात्सर्वनामतः ।

आदेशौ भवतस्तस्मात् सर्वस्मात् सर्वस्मिन्निति ।
अन्यरूपाणि सर्वाणि रामशब्दवदेव स्युः ॥

पूर्वपरावरदक्षिणोत्तरापराधराणिव्यवस्थायाम-संज्ञायाम् । १ । १ । ३४

पूर्वः परोऽवरश्चैवं दक्षिण उत्तरस्तथा ।
अपरोऽधर इत्येते व्यवस्थायां यदा क्वचित् ॥
प्रयुज्यन्ते तदैवैषां संज्ञा स्यात्सर्वनाम इति ।
संज्ञार्थे किन्तु नैव स्यात् एतेषां सर्वनामता ॥

स्वमज्ञातिधनाख्यायाम् । १ । १ । ३५

स्वमज्ञातिधनाख्यायां सर्वनामपदं भवेत् ।

अन्तरं वहिर्योगोपसंव्यानयोः । १ । १ ।३६

बहिर्योगोपसंव्याने अन्तरं सर्वनाम स्यात् ॥

पूर्वादिभ्यो नवभ्यो वा । ७ । १ । १६

पूर्वादिभ्यो नवभ्यो वा ङसिङ्योः सर्वनामता ।
पूर्वस्मात् च परस्माच्च पक्षे पूर्वात् पराद् भवेत् ॥

अत्र विशेषवचनम् ।

सर्वादिः सर्वनामाख्यो न चेद् गौणोऽथवाऽभिधा ।
पूर्वादिश्च व्यवस्थायां समोऽतुल्येऽन्तरोऽपुरि ॥
परिधाने बहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि
अस्मादयं परः पूर्वः कथने योऽवधिर्भवेत् ।
तस्य निश्चय एवास्ति व्यवस्थेति विभाव्यताम् ॥

न बहुव्रीहौ । १ । १ । २९

बहुव्रीहौ समासे न वर्तते सर्वनामता ।
तस्माद्रूपं त्वत्कपितृको मत्पितृक इष्यते ॥
भाष्यकारमतेनात्र त्वकत्पितृक एव हि ।
प्रत्याचख्यौ सूत्रमेतन्नास्य किञ्चित्प्रयोजनम् ॥

तृतीया समासे । १ । १ । ३० ,

तृतीया तत्पुरुषेऽपि नैव स्यात्सर्वनामता ।
मासपूर्वाय रूपं स्यात् मासावराय च भवेत् ॥

द्वन्द्वे च । १ । १ । ३१

द्वन्द्वे चेति सूत्रेण द्वन्द्वे संज्ञा न स्यादियम् ।
वर्णाश्रमेतराणामित्यादौ सुडादिकं नहि ॥

विभाषा जसि । १ । १ । ३२

किन्तु जसि विकल्पेन संज्ञा वर्णाश्रमेतरे ।
वर्णाश्रमेतरा द्वन्द्वे द्वयं वक्तुं सुशक्ष्यति ॥

प्रथमचरमतयाल्पार्धकतिपयनेमाश्च १ । १ । ३३

प्रथमादि सप्तशब्दाः जसि वा सर्वनामकाः ।
प्रथमे प्रथमाः रूपं द्वितये द्वितयास्तथा ॥
चरमे चरमाः नेमे नेमाश्चापि जसि द्विधा ।
उच्यन्तामन्यरूपाणि सर्वशब्दवदेव हि ॥

तीयस्य ङित्सु वा ॥ वा ।

विभाषायाः प्रकरणे तीयान्तस्य ङित्सु वा ॥
द्वितीयस्मै द्वितीयाय तृतीयस्मै च याय च ।
अर्थवद् ग्रहणान्नेह पटुजातीयशब्दके ॥

सर्वनामशब्दाः

सर्वो विश्वः समोऽन्यश्च सिम नेमौ उभोभयौ ।
डतरान्तो डतमान्तस्त्वत्वदन्यतरेतराः ।
पूर्वः परोऽपरः स्वश्चान्तरो दक्षिण उत्तरः ।
अधरोऽवर एतच्च त्यत्तदौ यदिदं पुनः ।
एको द्विः किमदो युष्मद् भवत्वस्मदिति क्रमात् ॥

अत्र विशेषदर्शनम्—

प्रथमायां बहुत्वार्थे जशः शी पुंसि जायते ।
एकारान्तास्ततः सर्वे ते ये विश्वे परेऽवरे ॥

सर्वनाम्नां चतुर्थ्यां स्मै जायते दृश्यतां पदे ।
सर्वस्मै विश्वस्मै तस्मै यस्मै कस्मै आदिषु ।।
पञ्चम्यामथ सप्तम्यां स्मात् स्मिन् भवति सर्वदा ।
सर्वस्मात् सर्वस्मिन् च तस्मात् तस्मिन् आदि च ।।
एषां चिह्नञ्च षष्ठचन्ते पुंलिङ्गे दृश्यते सदा ।
युष्मदस्मद्भवच्छब्दे नियमोऽयं न दृश्यते ।
संज्ञायाः सर्व विभक्त्यादयश्चात्र प्रयोजनम् ।।
सर्वनाम्नां प्रयोगस्तु सर्वलिङ्गेषु क्रियते ।
विशेष्यस्यानुसारेण लिङ्गस्य परिवर्त्तनम् ।।
सर्वलिङ्गे समानानि रूपाणि युष्मदस्मदोः ।।

अत्र सारांशबोधनम् —

विश्वस्य सकलार्थे स्यात् संज्ञा न जगदादिषु ।
संज्ञा समस्यतुल्यार्थे समग्रार्थे सिमस्य च ।।
खण्डार्थे च नेमस्य संज्ञेयं जायते सदा ।
पूर्वादीनां व्यवस्थायां सर्वादित्वमुदीरितम् ।
प्रावीण्ये दक्षिणो न स्यात्सर्वादिर्नायके तथा ।
उत्तरश्च दिग्बोधे सर्वादिर्नान्यबोधने ।
अधरस्य च हीनार्थे सर्वादित्वं न ओष्ठके ।।

सर्वशब्दरूपसंग्रन्थनम्—

सर्वः संस्कृतभाषी स्यात्, सर्वे सन्तु निरामयाः ।
सर्वं गोपायतामीशः, सर्वान् देवान् नमाम्यहम् ।।
सर्वेण सह मे मैत्री सर्वैः पठ्येत संस्कृतम् ।
सर्वस्मै सन्मतिं दद्यात् सर्वेभ्यश्च दयां कुरु ।।
सर्वस्मान्नीचपातालः सर्वेभ्यः श्रेष्ठ ईश्वरः ।
सर्वस्य मतदानाय सर्वेषां च स्वतन्त्रता ।।
सर्वस्मिन् स्यात् सदाचारः, सर्वेषु बालकेषु नः ।
द्विः सर्वौ त्रिश्च सर्वाभ्यां सर्वयोः स्थलयोर्द्वयोः
उक्त्वा द्विवचने रूपं वाक्यं रचयतु स्वयम
एवं विश्वादिशब्दानां रूपं ज्ञात्वा प्रयुज्यताम् ।।
उभशब्दो द्विवचने केवलं सर्वनामसु ।

प्रत्ययोऽकच् विधीयेत यथा तच्च प्रयोजनम् ॥
उभौ तौ मम बन्धू स्तः उभौ शंसामि सर्वदा ।
उभाभ्यां सह वस्तव्यमुभाभ्यां देहि भोजनम् ॥

उभाभ्यां नहि दूरे स्यात् उभयोः कार्यमुत्तमम् ।
उभयोर्गुणवानेषः प्रयोगाः सप्तसन्त्यमी ॥
सर्वनामगणे पाठः स्यादकच् प्रत्ययो यथा ॥

स्त्रीलिङ्गनपुंसकयोः प्रयोगाः -

उभे सख्यौ गच्छतस्ते उभे ते महती कुले ।
उभे सख्यौ कुले विज्ञाः शंसन्ति प्रथयन्ति च ॥
अग्रे पुंलिङ्गतुल्यानि रूपाणि पठत सदा ॥

उभयशब्दः—

उभयश्चैकवचने बहुवचने प्रयुज्यते ।
द्विवचने भवेन्नास्य रूपमित्यवधार्यताम् ।
उभयः संग्रहः सम्यग् उभये देवमानुषाः ।

उभयं द्रष्टुमिच्छामि उभयान् ज्ञातुमिच्छत ।
उभयेन सह स्नेहः उभयैः सह वर्तताम् ।
उभयस्मै वदाम्येतत् उभयेभ्यः स रोचते ॥

उभयस्मात् पृथग्भूत्वा उभयेभ्यः पलायते ।
उभयस्य बलं तुल्यमुभयेषां न हानयः ॥
उभयस्मिन् गृहे लोकः उभयेषु सुखानि च ॥

नेम इत्यर्धवाचीह वर्तते सर्वनामसु ।
नेमः सुखी पुरस्यास्य नेमं दीनं विलोकये ।
नेमेन क्रियते कार्यं नेमस्मै देहि जीविकाम् ।
नेमस्मात्प्राप्यतां शुल्कं नेमस्य त्यज्यतां पुनः ।

नेमस्मिन् नगरे शान्तिः हे नेम पूर्णतां व्रज ।
अवशिष्टानि रूपाणि सर्वशब्दवदेव हि ।
त्रिषु लिङ्गेषु रूपाणि विशेष्यस्यानुसारतः ।
नेमे नेमाश्च प्रथमा बहुवचने विशेषतः ।
जसः शी जायते पक्षे पक्षे दीर्घः प्रवर्तते ॥

समशब्दस्तु सर्वार्थबोधने गृह्यते इह।
तुल्यार्थकसमस्यात्र रामवद्रूपमिष्यते ।।
समः समौ समे रूपं समं समौ समान् वदेत् ।
समेन सह समाभ्यां, समैः श्रूयेत सत्कथा ।।
स्मै स्मात् स्मिन्नत्वकार्याणि जायन्ते सर्वनामसु।
सर्वनाम इति संज्ञा न तुल्यार्थे कदाचन ।
यथासंख्यमनुदेशः समानां तेन सङ्गतम् ।।

सिमः समग्रार्थकः—

सिमः सिमौ सिमे पक्षे सिमाः जसि द्विधा वदेत्
सिमं सिमौ सिमानादि, रूपं स्यात् सर्वशव्दवत् ।
पूर्वादिभ्यो नवभ्यो वा ङसेः स्मात् ङेश्च स्मिन्निति
विकल्पेन विधातव्यं प्रयोगं स्वेच्छया कुरु ।।

रूपदर्शनम् —

अयं पूर्वः इमौ पूर्वौ पूर्वे पूर्वाश्च ते स्मृताः ।
द्वितीयायां तृतीयायां चतुर्थ्यां सर्वशब्दवत् ।।
पूर्वस्मादागतः पूर्वात् पूर्वाभ्यां पूर्वेभ्य इति ।
पूर्वस्य पूर्वयोश्चैवं पूर्वेषां शोभना स्थितिः ।।
पूर्वस्मिन् वस् पूर्वे वा पूर्वयोः पूर्वेषु वा ।
पूर्वादि नव शब्देषु स्थानत्रये विशेषता ।
जसि रूपं द्वयं ज्ञेयं ङसौ ङौ च द्वयं द्वयम् ।
व्यवस्था गम्यमानत्वे पूर्वादेः सर्वनामता ।
व्यवस्थाभिन्नतात्पर्ये पूर्वादी रामशब्दवत् ।

व्यवस्था च—

अयं पूर्वोऽस्ति तत्स्थानाद् अवधेर्यत्र निश्चयः ।
सा व्यवस्थाऽत्र विज्ञेया स्थानाऽवधेः सुनिश्चयः ।।
स्वमज्ञातिधनाख्यायां लभते सर्वनामताम् ।
स्मै स्मात् स्मिन्नेत्व कार्याणि जायन्ते सर्वशब्दवत ।
स्वे स्वाः आत्मीय वित्तार्थे श्यादेशस्य विकल्पनात् ।।
ज्ञातौ धने च स्वाः रूपमेकमेव प्रयुज्यताम् ।

उपसंव्यानमत्रास्ति परिधानीय बोधकम् ।
तस्मिन्नर्थे वहिर्योगेऽप्यन्तरं सर्वनाम वा ।
मध्ये छिद्रे विशेषार्थे सर्वनामान्तरं नहि ।
जसि रूपं द्वयं ज्ञेयं तथैव ङसिङ्योर्द्वयम्
अन्तरे अन्तरास्तेषां शाटकाः सन्ति वा गृहाः
अन्तरस्मादन्तराद्वाऽन्तरस्मिन्नन्तरेऽथवा ॥

प्रथमः प्रथमौ रूपं प्रथमे प्रथमाः जसि ।
रामवदन्यरूपाणि न कुत्रापि विशेषता ॥
चरमः चरमौ पश्चात् चरमे चरमाः जसि ।
चरमं चरमौ कर्मकारके चरमानिति
चरमेण चरमाभ्यामादिरूपाणि रामवत् ॥

द्वितयः द्वितयौ रूपं द्वितये द्वितया जसि ।
द्वितीयादिषु रूपं स्याद् रामशब्दवदेव हि ।
अल्पः अल्पौ तथा अल्पे अल्पाः जसि द्वयं भवेत् ।
अर्द्धशब्दस्य रूपाणि यूयं पठत रामवत् ।
अर्द्धे अर्द्धाः द्विधा ब्रूयाज्जसि रूपं विकल्पतः ।
कतिपये कतिपयाः जसि च केवलं द्वयम् ॥
अन्यरूपं समानं स्याद् रामशब्दस्य रूपतः ॥

**निर्जरशब्दः—( देववाची )**

जरायाः जरसन्यतरस्याम् । ७ । २ । १०२

जरायाः जरसन्यतरस्यां सूत्रमस्ति वै ।
जरायाः जरसादेशो विकल्पेनैव सुप्यचि ।
जराया निर्गतो योऽस्ति स निर्जरः सुरः स्मृतः ।
निर्जरसौ निर्जरौ च जरः स्यादचि वा सदा ॥

निर्जरसः सदा तृप्ताः निर्जरा वा वदेत्पदम् ।
निर्जरसं निर्जरं च द्वे द्वे रूपे पठेदचि ।
टा ङे ङसि ङसां योगे ङियोगे परतो जरस् ॥
तस्मादेषु इनादिर्न जायते भाष्यसंमते ।
हलादौ रामवद्रूपं पठ्यतां पाठ्यतां सदा ॥

**पादशब्दः—**

पादः पादौ तथा पादाः प्रथमारूपमुच्यते।
पादं पादौ पदः पादान् द्वे द्वे रूपे शसादिषु॥

पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छ-स्प्रभृतिषु। ६। १। ६३

पद्दन्नोमाससूत्रेण पदाद्यादेश इष्यते।
पाददन्तादिशब्दानां क्रमेणात्र पदादयः॥
विकल्पेन शसादिषु प्रत्ययेषु परेषु च।
पदा पादेन पद्भ्याञ्च पादाभ्यां स च गच्छति।
पद्भिः पादैः क्रमाद्रूपं पठनीयं विचार्य च॥

**दन्तशब्दरूपाणि —**

दन्तः दन्तौ च दन्तास्ते दन्तं दन्तौ ततः परम्।

सुडनपुंसकस्य। १। १। ४३

सर्वनामस्थानसंज्ञा पञ्चानामेव स्यात् सुटाम्।
नपुंसके भवेन्नेयं संज्ञेति तत्स्मरेत्सदा॥

स्वादिष्वसर्वनामस्थाने। १। ४। १७

स्वादिष्वसर्वनामस्थाने पूर्वं पदं भवेत्।

यचि भम्। १। ४। १८

यचि भं सूत्रमित्यस्माद् भसंज्ञा स्याद्यजादिषु।

आ कडारादेका संज्ञा। १। ४। १

एका संज्ञा आ कडारादिति नियम आदृतः।

भस्य। ६। १। २८। इत्यधिकृत्य

शसादावचि भसंज्ञा जायते जश्त्वमत्र न।
पदत्वं भ्यां भिसादौ स्यात् तस्माज्जश्त्वं विधीयते॥
दतः दन्तान् दता एवं दन्तेन क्रमशः पठेत्।
पद्दन्नोमास् सूत्रेण शसादौ दत् विकल्पतः।

भ्यामादावपि दन्तस्य ददादेशो विकल्पतः ।
दद्भ्यां खादति दन्ताभ्यां दद्भिर्दन्तैश्च चर्व्यते ।
दते दन्ताय दद्भ्यां च दन्ताभ्यामादि पठ्यताम् ।

मासशब्दः—

मासः मासौ तथा मासाः, मासं मासौ ततः परम् ।
मासः मासान् तथा मासा, मासेनादि द्विधा पठेत् ।
माभ्यां तथैव मासाभ्यां माभिः मासैः क्रमेण वै ।
द्वे द्वे रूपे शसादौ स्तः प्रयोगं स्वेच्छया कुरु ।।

अत्र विशेषवस्तु—सारस्वतव्याकरणमते सर्वत्रैव मासस्यान्तिमासकारस्य विकल्पेन लोपो भवति ।

यूषो मण्डः—

यूषः यूषौ तथा यूषाः यूषं यूषौ ततः परम् ।

अल्लोपोऽनः । ४ । १ । ३४

यजाद्यसर्वनामस्थानस्वादिपरकस्य च ।
अल्लोपोऽनः सदैवस्यादङ्गस्यावयवस्य च ।

रषाभ्यां नो णः समानपदे । ८ । ४ । १

रषाभ्यां यः परो नोऽस्ति तस्य णत्वं विधीयते ।
एकस्मिन् पदे एव यूष्णः यूषानिति पदम् ।
यूष्णा यूषेण रूपं स्याच्छसाद्यपि विकल्पतः ।

न लोपः प्रातिपदिकान्तस्य । ८ । २ । ७

लोपः प्रातिपदिकान्त नकारस्य सदा भवेत् ।।
यूषभ्यां यूषभिरादौ राजभ्यां राजभिस्ततः ।
यूष्णि यूषणि यूषे च रूपत्रयं हि ङौ पठेत् ।

विभाषा ङिश्योः । ६ । १ । १३६

ङिश्योस्तु परयोरङ्गावयवस्यानो विकल्पतः ।
अकारस्य भवेल्लोपस्तस्मादयूषणि यूष्णि वा ।।

संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ । ६ । ३ । ११०

संख्याविसाय पूर्वस्य अह्नस्याहन् विकल्पतः ।
ङौ परे तदकारस्य लोपो वा ङिश्यो : पुनः ।
द्वयोरह्नो भवोद्वयह्नः द्वयह्नौ द्वयह्नाः द्वयह्नमिति ।
सप्तम्यां ङौ विशेषेण द्वयह्ने द्वयह्नि द्वयहनि च ।
तद्धितार्थे समासोऽत्र द्वयह्नशब्दे च वर्तते ।

**विगतमहर्व्यह्नः—**

व्यह्नः व्यह्नौ च व्यह्नाश्च व्यह्नमादि च रामवत् ।
व्यह्नि व्यहनि व्यह्ने च सप्तम्यां ङौ त्रयं पठेत् ।।

**अह्नः सायश्च सायाह्नः –**

( संख्या विसायेति ज्ञापकादेकदेशि समासः )
सायाह्नः सायाह्नौ च सायाह्नः कर्तृकारके ।
सायाह्नमादि रूपं तु रामशब्दसमं पठेत् ।
सायाह्ने सायाहनि वा, सायाह्नि शंकरं भजेत् ।
सप्तम्यामेकवचने रूपत्रयं विकल्पतः ।।

।। इत्यकारान्तशब्दरूपदर्शनम् ।।

**अथाऽऽकारन्तपुंलिङ्गः शब्दाः—**

विश्वं पातीति विश्वपाः–ईश्वरः पारक्षणेऽस्माद्विच् प्रत्ययः।

दीर्घाज्जसि च । ६ । १ । १०५

दीर्घा दिचि जसि परे विश्वपादीनपादिषु ।
पूर्वसवर्णदीर्घस्य प्रवृत्ति र्नैव जायते ।
अकः सवर्णदीर्घस्य प्रवृत्तिर्जसि जायते ।
विश्वपाः विश्वयौ रूपं विश्वयाः जसि च परे ।
पुनर्दीर्घ विधानेन दीर्घश्चात्र जसि भवेत् ।।
विश्वपां विश्वपौ पश्चात् शसादौ आनतिष्ठति ।

आतोधातोः । ६ । ४ । १४०

आकारान्तश्च यो धातुस्ततन्तस्य सदैव च ।
भ संज्ञकस्य लोपः स्याद् विश्वपः विश्वपा ततः ।।

विश्वपाभ्यामिदं कार्यं विश्वपाभिः कृतं जगत् ।
विश्वपे विश्वपाभ्यां हि विश्वपाभ्यः सदा नमः ॥
शसादावचि सर्वत्र धातोरा लुप्यति सदा ।
आतो धातोरिति सूत्रम् आलोपस्य विधायकम् ॥
हे विश्वपाः भवेद्रूपं संबोधनार्थबोधने ।

गोपाशब्दः—(ग्वाला) इति भाषायाम्

गोपाः सरलचित्तोऽयं गोपौ स्तः सरलाविमौ ।
गोपाः दुहन्ति गाः सर्वाः गोपां पृच्छति बालकः ॥
गोपौ दृष्ट्वा जनस्तुष्टः गोपः किमपि भाषते ।
गोपा गौर्दुह्यते प्रातः गोपाभ्यामपि दुह्यते ॥
गोपाभिर्दीयते दुग्धं गोपे पणानि यच्छति ।
गोपाभ्यामपि गोपाभ्यः पयोमूल्यानि यच्छतु ।
गोपस्तथा च गोपाभ्यां गोपाभ्यः स पृथग् जनः ॥
गोपः गोपोः तथा गोपां कार्यं गोपालनं शुभम् ।
गोपि गोपोश्च गोपासु दृश्यतेऽत्र दृढाकृतिः ॥
शसादावचि सर्वत्र भसंज्ञा जायते सदा ।
तस्मादाकारलोपः स्यादातो धातोश्च सूत्रतः ॥
एवमेव सोमपा-शङ्खध्मा-धनदा-वर्चोदादिशब्दानां रूपाणि ज्ञेयानि ।

हाहा गन्धर्वविशेषः—

हाहा हाहौ तथा हाहाः हाहां हाहौ हाहानिति ।
हाहा रूपञ्च हाहाभ्यां हाहाभिर्गीयते पदम् ॥
हाहे तथा च हाहाभ्यां हाहाभ्यो दीयते धनम् ।
हाहास्तथा च हाहाभ्यां हाहाभ्यः स्पृहयाम्यहम् ॥
हाहाः हाहौश्च हाहां वै प्रियं गानं सभासु च ।
हाहे हाहौश्च हाहासु प्रसन्नाः सन्ति देवताः ॥

अत्र विशेषः—

आतो योगविधानेन क्त्वः श्नः स्याद्वा मतान्तरे ॥

स्पष्टीकरणम्—

आतो धातोरिति सूत्रे आत इति योगविभागमाश्रित्य क्वचिदन्यत्रापि आकारलोपस्तेन क्त्वः श्नः आदि सिद्ध्यति ॥

अतो हाहाशब्देऽपि शसादौ लोपो भवितुमर्हति । तत्पक्षे विश्वपावद्रूपम् ।

विनोवा करियप्पा च निजलिङ्गप्पा सुखाडिया ।
नन्दा डागा च हाडादिः हाहावत् साध्यतां बुधैः ।।
आतो योगविभागेन यदाऽऽकारोऽत्र लुप्यति ।
विश्वपावत् तदारूपं मतान्तरे भविष्यति ।।

।। इत्याकारान्तशब्दाः ।।

इकारान्तपुंलिङ्गशब्दाः—

हरिशब्दप्रकरणम्—

जसि च ७ । ३ । १०८

जसि परे सदा कार्यो ह्रस्वान्ताङ्गस्य वै गुणः ।
अयादेशे च हरयः मुनयः साधवस्तथा ।।

ह्रस्वस्य गुणः । ७ । ३ । १०९

गुणो ह्रस्वस्य संबुद्धौ हे हरे हे मुने पितः ।

शेषो घ्यसखि । १ । ४ । ७

शेषो घ्यसखि सूत्रेण ह्रस्वौ यौ इदुतौ क्वचित् ।।
तदन्तस्य घिसंज्ञा स्यात् नदीसंज्ञां सखिं विना ।।

आङो नास्त्रियाम् । १ । ३ । १२०

आङो ना जायते पुंसि घेः परस्यैव निश्चयात् ।
हरिणा कविना रूपं विधुना भानुनादि च ।।

घेर्ङिति । ७ । २ । १११

घेर्ङिति सुपि गुणः स्याद् हरये भानवे नमः ।।

ङसिङसोश्च । ६ । १ । ११०

पूर्वरूपं भवेदेङो ङसिङसोरिति परे ।।
घिसंज्ञायां गुणं कृत्वा पूर्वरूपाद् हरेः विधोः ।।
ओसि हर्योर्यणि कृते हरीणां नुटि दीर्घतः ।

अच्च घेः । ७ । ३ । ११८

औरादेशस्तु जायेत इदुद्भ्यामुत्तरस्य ङेः ।
तत्पश्चाद् घेरदादेशः वृद्धौ सत्यां हरौ विधौ ॥
एवं श्रीपतिरग्निश्च रविः कविश्च भारविः ॥

हरिशब्दसंग्रन्थनम् —

हरिः श्रीपतिरेषोऽस्ति हरिं भजति मानवः ।
हरिणा ह्रियते पापं हरये सर्वदा नमः ॥
हरेः हीनाः सर्वदेवाः हरेः सर्वोत्तमं पदम् ।
हरौ भक्तस्य भारोऽस्ति हे हरे विपदं हर ॥

रविशब्दस्य सर्वरूपाणि—

रविः रवी च रवयः प्रथमारूपमुच्यते ।
रविं रवी रवीन् नत्वा लोके आरोग्यवान् भवेत् ॥
रविणा च रविभ्यां च रविभिः क्रियते सुखम् ।
रवये च रविभ्याञ्च रविभ्यः क्रियतां नमः ॥
रवेः प्रकाश आयाति रविभ्यां रविभ्यः पुनः ।
रवेः रव्योः रवीणाञ्च तेजोऽधिकं ग्रहेषु च ॥
रवौ रव्योः रविषु ते श्रद्धा भक्तिश्च वर्द्धताम् ।
हे रवे हे रवी भक्तान् रक्षत रवयश्च हे ॥

इकारान्तशब्दकोशः—

अलिः कपिर्बलिर्व्याधिः कलिरग्निश्च सारथिः ।
ऋषिर्भूपतिसौमित्री विधिः सन्धिः किरिर्गिरिः ॥
यतिः सौरिरसिः सूरिर्मणिस्तरणिरासुरिः ।
भारविर्भवभूतिश्च मुनिवत् पाठ्यतां पठ ॥

सखिशब्दः—( समानं ख्यायते ) यः स सखा समाने ख्यः स चोदात्तः—ख्या इण् समानस्य सादेशो धातु यकारस्य च लोपः क्रियते । हरिशब्दरूपतोऽत्र भिन्नतास्ति ।

अनङ् सौ । ७ । १ । ९३

सौ परे सख्युरङ्गस्य अनङ् भवति पुंसि च ।
सखिः तदा सखन् जातः ङिच्चेत्यस्य प्रवर्तनात् ॥

अलोऽन्त्यात् पूर्व उपधा । १ । १ । ६५

अलोऽन्त्यात् पूर्व उपधासंज्ञको जायते सदा ।
सखन्नत्र अनोऽकार उपधासंज्ञको भवेत् ॥

सर्वनामस्थाने चासंबुद्धौ । ६ । ४ । ८

असंबुद्धौ सर्वनामस्थाने दीर्घोऽत्र जायते ।

अपृक्त एकाल् प्रत्ययः । १ । २ । ४१

एकाल्प्रत्ययोऽपृक्तसंज्ञकः सर्वदा भवेत् ॥

हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् । ६ । १ । ६८

हल्ङ्याब्भ्यो दीर्घात् पश्चात् सुतिस्यपृक्तसंज्ञकम् ।
हल्लुप्यते विभक्तेः सोः सस्य लोपस्ततो भवेत् ॥
ततः प्रातिपदिकान्तनस्य लोपेन स्यात् सखा ॥

सख्युरसम्बुद्धौ ७ । १ । ९२

सख्युरङ्गात् परं सर्वनामस्थानं णिद्वद् भवेत् ।
सम्बुद्धेर्नहि णिद्भावः औजसमौट्सु केवलम् ॥

ख्यत्यात्परस्य । ६ । १ । ११२

ख्यत्यात्परस्य सूत्रेण ङसि ङसोरत उद्भवेत् ।
सख्युः रूपञ्च पञ्चम्यां षष्ठ्यां ङसि च जायते ॥

औत् ७ । ३ । ११८

सप्तम्यामेकवचने रूपं सख्यौ यणि कृते ।
औदिति जायते नित्यं इदुद्भ्याञ्च परस्य ङेः ॥

रूपदर्शनम्

एकवचने बहुवचने

सखा मम कुलीनोऽस्ति सखायः ते प्रियंवदाः ।
सखायं तं नमस्कृत्य सखीन् सर्वान् नमन्ति ते ॥
सख्या सह समायातः सखिभिः सह गच्छति ।
सख्ये फलं जलं देयं सखिभ्यः प्रेम दर्शयेत् ।
सख्युः किञ्चिच्छलं नास्ति सखिभ्यश्छलिनः शठाः ॥

सख्युः सर्वं स्वकीयं मे सखीनां शृणुयाद् वचः ।
सख्यौ सर्वस्य विश्वासः सखिषु कृष्णवद् भवेत् ॥
हे सखे हे सखायौ मे हे सखायः सुस्निह्यत ।

द्विवचने—

सखायौ द्विः सखिभ्यां त्रिः सख्योः षष्ठ्यां ततः परम ।
प्रथमादिक्रमादुक्त्वा वाक्यं रचयतु स्वयम् ॥
पतिशब्दस्यापि रूपे विशेषताऽस्ति ।

पतिः समास एव । १ । ४ । ८

घिसंज्ञा पतिशब्दस्य समासे एव केवलम् ।
नाभावादिकमतो न क्रियते पतिरूपके ॥
पतिः प्राणसमः स्त्रीणां पतयः सुखनाशकाः ।
पतिं सा सेवते धन्या पतीन् करोति पुंश्चली ॥
पत्या सह सती याति पतिभिश्च वराङ्गना ।
पत्ये सा रोचते धन्या पतिभ्यः द्रौपदी प्रिया ॥
पत्युः पृथग् न शोभास्ति पतिभ्यः सा पलायते ।
पत्युः प्रियतमा राधा पतीनां च नृणां सुखम् ॥
पत्यौ भक्तिं करिष्यामि पतिषु वचसां गुणाः ।

द्विवचने—

पती पती पतिभ्यां त्रिः पत्योः पत्योः स्थलद्वये ।
प्रथमादिक्रमाद् रूपं द्विवचनेषु जायते ॥

अत्र विशेषवस्तु—

पतिना वानरेन्द्रेण सीतायाः पतये नमः ।
इत्यादिरूपसिद्ध्यर्थं घिसंज्ञा केवलेऽपि स्यात् ॥
आर्षत्वं वा विजानीयात् सूत्रानित्यत्वमत्र वा ।
संज्ञापूर्वककार्यं वा अनित्यमिति उत्तरम् ॥

अत्र विशेषः—

बहुच्प्रत्ययपूर्वस्य पतिशब्दस्य यण् भवेत् ।
बहुपत्या बहुपत्ये बहुपत्युरादि स्यात् ॥

पतिशब्दान्तशब्दस्य हरिवद्रूपमुच्यते ।
पतिः समास एवात्र घिसंज्ञकश्च जायते ।।
तस्माद् भूपतिना रूपं भूपतेरादि जायते ।
भूपतिः शोभते सौम्यः शोभेते भूपती इमौ ।।
भूपतयः सुशोभन्ते रक्ष हे भूपते प्रजाम् ।
भूपतिं भूपती नत्वा भूपतीन् स्तौमि सादरम् ।।
भूपतिनादिरूपाणि मुनिशब्दसमानि स्युः ।

शोभनःसखा-सुसखा—( प्रादिसमासः, न पूजनादिति टच् निषेधोऽत्र।)

सुसखिशब्दस्य तृतीयातो मुनिवद्रूपं जायते—
सुसखाऽयं सुसखायौ सुसखायः समागताः ।
सुसखायं सुसखायौ सुसखीन् नौमि सर्वदा ।।
सुसखिना सुसखिभ्यां सुसखिभिः कृतं शुभम् ।
सुसखये सुसखिभ्यां सुसखिभ्यः प्रियं वदेत् ।।
सुसखेः सुसखिभ्यां च सुसखिभ्यः भयं नहि ।
सुसखेः खलु सुसख्योः सुसखीनाञ्च स्वागतम् ।।
सुसखौ किल सुसख्योः सुसखिषु विश्वसिमि ।
सखायमतिक्रान्तो यः सः अतिसखाऽत्र द्वितीयातत्पुरुषः ।।

अतिसखिशब्दः—

अतिसखा सुसखिवत् तादृशः परमः सखा ।
अनङ्णिद्वद्भावोऽत्र शसादौ हरिवद् भवेत् ।।
सखीम् अतिक्रान्त इति विग्रहेतु अतिसखिः गोस्त्रियोरिति ह्रस्वः क्रियते ।

अतिसखेस्तु हरिवद् रूपं पठत सर्वदा ।
अनङणित्वे न भवतः यतो लाक्षणिकः सखिः ।।
लक्षणे प्रतिपदोक्ते प्रतिपदोक्त इष्यते ।
लाक्षणिकं न गृह्येत उभयोपस्थितौ क्वचित् ।।

कतिशब्दः—

बहुगणवतुडति संख्या । १ । १ । २३

## अथाजन्तपुंलिङ्गप्रकरणम्

बहोर्गणस्य शब्दस्य वत्वन्तडत्यन्तस्य च ।
संख्यासंज्ञा विशेषेण जायते इति बुध्यताम् ॥

डति च १ । १ । २५

डत्यन्ता अत्र या संख्या सा भवेत् षट्संज्ञका ।

प्रत्ययस्य लुक्श्लुलुपः । १ । १ । ६१

लुक्-श्लु-लुप्-शब्दतो यत्र प्रत्ययादर्शनं भवेत् ।
लुक्श्लुलुबिति संज्ञा तत्तत्स्थलेषु जायते ॥

षड्भ्यो लुक् । ७ । १ । २२

षड्भ्यो लुगिति सूत्रेण जश्सोर्लुग् विधीयते ।
डत्यन्तस्य कति कति रूपं भवति जश्शसोः ॥

प्रत्ययलोपे प्रत्ययलक्षणम् । १ । १ । ६२

प्रत्ययस्य च लोपेऽपि प्रत्ययलक्षणं भवेत् ।
तस्मादत्र गुणप्राप्तिर्जसि चेति प्रवर्तते ॥

न लुमताङ्गस्य । १ । १ । ६३

किन्तु "न लुमताङ्गस्य" सूत्राद् गुणो निषिध्यते ।
लुमताशब्दतो लुप्ते तन्निमित्तिकमत्र न ॥
कार्यं किञ्चिद् विधीयेत कत्यादौ न गुणस्ततः ॥

का संख्या येषां ते कति । किम्-शब्दाड्डतिप्रत्ययष्टिलोपेन सिद्धिरस्य ।

रूपदर्शनम्—

कति ते सन्ति विद्वांसः कति तान् विदुषो नुमः ।
कतिभिः क्रियते धर्मः कतिभ्यः क्रियते नमः ॥
कतिभ्यः स्वं समाहृत्य कतीनां जीवनं सुखम् ।
कतिषु न दयाभावः दृश्यते तेऽधमा जनाः ॥
कतिशब्दप्रयोगस्तु बहुवचनेषु केवलम् ॥
तरतेर्ड्रिन् भवेत् तेन त्रिशब्दश्च सिद्ध्यति ॥
त्रयः त्रीन् त्रिभिरित्यादि बहुत्वे रूपमुच्यते ॥

त्रेस्त्रयः ।७।१।५३

"त्रेस्त्रयः" स्यादामि परे ततो नुट् दीर्घतः परम् ।
णत्वे कृते त्रयाणां हि सिद्धिर्भवति बुध्यताम् ।।
त्रयादेशः प्रियत्रीणामत्र गौणतया नहि ।
गौणे मुख्ये च संप्राप्ते मुख्ये कार्यं सदा भवेत् ।।वा०।।

परमाश्च ते त्रय इति परमत्रिशब्दः—

त्रिशब्दरूपतुल्यानि सप्तैव सम्भवन्ति वै ।
अत्रापि च त्रिशब्दस्य प्रधानत्वात् त्रयो भवेत् ।।

त्यदादीनामः । ७ । २ । १०२

द्विपर्यन्तत्यदादीनामत्वमन्ते विभक्तिषु ।
द्वौ द्वाभ्याञ्च कौ काभ्यां यौ याभ्यामादि साध्यताम् ।
द्विशब्दस्य प्रयोगो द्विवचने एव जायते ।
द्वौ द्वौ द्वाभ्यां तथा द्वाभ्यां तत्परं स्याद् द्वयोः द्वयोः ।।
केवलं स्याद् द्विवचने रूपं सप्तविभक्तिषु ।
द्विर्नाम यदि कस्यास्ति तस्य द्विः द्वी द्वयः क्रमात् ।
द्विम् द्वी द्वीन् च द्विना द्विभ्यां हरिवद् रूपसाधनम ।।
परमद्वेरपि रूपं द्विशब्दसदृशं भवेत् ।
त्यदाद्यत्वं भवेदेव तस्मान्नात्र विशेषता ।।
अतिद्वेर्हरिवद्रूपं त्यदाद्यत्वं न स्यादिह ।
उडूनीव लोमानि यस्य स उडुलोमिः (पक्षिविशेषः)
तस्यापत्यमौडिलोमिः ।

रूपदर्शनम्—

औडुलोमिः औडुलौमी उडुलोमाः खगाश्च ते ।
एकद्विवचने रूपं हरिशब्दसमं भवेत् ।।
बहुवचनेषु रूपाणां रामशब्दसमानता ।
उडुलोमा उडुलोमैरिति क्रमः ।।
लोम्नोऽपत्येषु बहुषु अकारो जायते इह । वा०
बाह्वादीञोऽपवादोऽयं कथितोऽस्तीति बुध्यताम ।।

इतीदन्ताः शब्दाः

ईकारान्तपुंलिङ्गशब्दाः—

वातं प्रमिमीते इति माङ्धातोरीप्रत्यये सति वातप्रमी-शब्दो मृगविशेषार्थे सिद्धयति। अत्र ईप्रत्ययस्य कित्वेन धातो-राकारस्य लोपः।

रूपदर्शनम्—

वातप्रमी मृगः कोऽपि वातप्रम्यौ च धावतः।
वातप्रम्यः प्रधावन्ति वातप्रमीं विलोकय॥
वातप्रम्यौ च तौ पश्य वातप्रमीन् जहि नहि।
वातप्रम्या तथा वातप्रमीभ्यामादि पठ्यताम्॥

अज्विभक्तौ यणादेशः केवलं ङौ न यण् भवेत्।
वातप्रमी भवेत्तत्र दीर्घत्वादामि नुट् नहि॥

क्विबन्त वातप्रमीशब्दस्य अमि शसि ङौ च विशेषः—
एरनेकाच इति यणादेशो भवति। माङ्धातोः क्विप् तस्यसर्वापहारलोपे ईत्वे कृते च वातप्रमीः सिद्धयति। ईत्वमवकारादाविति निषेधपक्षे मीधातोः क्विपि कृते सिद्धयत्ययम्।

अत्र रूपदर्शनम्

वातप्रमीरयं वातप्रम्यौ तौ च प्रधावतः।
वातप्रम्यः प्रधावन्ति वातप्रम्यं विलोकये॥
वातप्रम्यौ तथा वातप्रम्यः पश्यन्ति हर्षतः।
वातप्रम्यि मम स्नेहः पातप्रमी मृगो वरः॥

याति मार्गमिति ययीः—अश्वः। यापोः किद् द्वे चेति ई-प्रत्ययः।

रूपसंग्रन्थनम्—

ययीः यय्यौ तथा यय्यः ययीं यय्यौ ययीनिति।
यय्या गच्छति ययीभ्यां ययीभिर्गमनं प्रियम्॥
यय्ये यय्यः पुनः यय्यः विभक्तावचि यण् भवेत्।
केवलं ङौ ययी रूपं जायते दीर्घकार्यतः॥
पाति लोकमिति पपीः सूर्यः—यापोः किद् द्वे च ईप्रत्ययः।

**रूपदर्शनम्—**

पपीः पप्यौ तथा पप्यः प्रथमारूपमुच्यते।
पपीं पप्यौ पपीन् नत्वा पप्या संतप्यते जगत् ॥
विभक्तावचि सर्वत्र यणं कृत्वा वदेत् पदम्।
आमि पप्यां पपी ङौ स्यात् संबोधने च हे पपीः ॥

**बहुश्रेयसीशब्दः—**

बह्व्यः श्रेयस्यो यस्य स इति विग्रहः।
ईयसोर्बहुव्रीहेरिति ह्रस्वनिषेधः ॥

यू स्त्र्याख्यौ नदी। १।४।३

यू स्त्र्याख्यौ नदीसंज्ञा सूत्रमत्र प्रवर्तते।
स्त्र्याख्यौ यू नदीसंज्ञौ जायेते इति बुध्यताम्।

अम्बार्थनद्योर्ह्रस्वः। ७। ३। १०७

अम्बार्थानां नद्यन्तानां ह्रस्वः संबोधनेऽत्र सौ ॥
हे बहुश्रेयसि रूपं स्यात् हे स्त्रि हे वधु हे नदि।

आण्नद्याः। ७। ३। ११२

नद्यन्ताच्च परेषां स्यात् ङितामाडागमस्ततः।

आटश्च। ६। १। ९०

आटः परेऽचि वृद्धिः स्यात्—ङयि बहुश्रेयस्यै स्त्रियै।
ङसिङसोः भवेद् बहुश्रेयस्याः इति बुध्यताम् ॥
नद्यन्तान्नुट् ततो बहुश्रेयसीनामितीष्यते।

ङेराम् नद्याम्नीभ्यः। ७। ३। ११६

नद्याम्नीभ्यस्तु ङेरां स्यात् तत आडामश्च यण्।
भवेद्रूपं बहुश्रेयस्यामिति तद्विचार्यताम् ॥

**बहुश्रेयसीशब्दरूपदर्शनम्—**

बहुश्रेयसी बहुश्रेयस्यौ बहुश्रेयस्यः बहुश्रेयसीं बहुश्रेयस्यौ।

बहुश्रेयसीन् बहुश्रेयस्या बहुश्रेयसीभ्यां-
बहुश्रेयसीभिः, बहुश्रेयस्यै-इत्यादि ।
रूपे विशिष्टं हि कार्यमत्र प्रदर्शितम् ।
हलादौ न विशिष्टत्वं सरलं रूपमूह्यताम् ॥
लक्ष्मीमतिक्रान्तो यः सः अतिलक्ष्मीः—धनाढ्यो जनः ।
अङ्यन्तत्वादत्र सुलोपो नेति विशेषता ।

रूपसंग्रन्थनम्—

अतिलक्ष्मीः अतिलक्ष्म्यौ अतिलक्ष्म्यश्च निष्ठुराः ।
अतिलक्ष्मीमतिलक्ष्म्यौ अतिलक्ष्मीन् नमन्ति ते ॥
अतिलक्ष्म्याऽतिलक्ष्मीभ्यामतिलक्ष्मीभिरुच्यते ।
अतिलक्ष्म्यै प्रियं ब्रूयाद् अतिलक्ष्म्यास्तदा न भीः ॥
अतिलक्ष्म्या अतिलक्ष्म्योरतिलक्ष्मीणां गृहे सुखम् ।
अतिलक्ष्म्यामतिलक्ष्म्योरतिलक्ष्मीषु सप्तमी ।
हे अतिलक्ष्मि मां पश्य कुरु लक्ष्म्या सहायताम् ॥

अचिश्नुधातुभ्रुवां य्वोरियङुवङौ । ६ । ४ । ७७

एरियं स्यादुवङोश्च धातोर्य्वोरचि प्रत्यये ।
सादृश्यादेरियं कार्यम् उवर्णस्य उवङिङति ।
भ्रू इत्यस्य अङ्गस्य श्नुप्रत्ययान्तकस्य च ।
उवङ भवत्यनेनैव अजादौ प्रत्यये परे ॥

एरनेकाचोऽसंयोगपूर्वस्य । ६ । ४ । ८२

एरनेकाचोऽसंयोगपूर्वस्याङ्गस्य यण् भवेत् ।
अजादौ प्रत्यये तेन कुमार्यौ आदि साध्यते ॥
धात्ववयवः संयोगो यस्य पूर्वो न विद्यते ।
तदिवर्णान्तधात्वन्तरूपाङ्गस्य च यणचि ॥

सुश्रीशब्दः—

सुश्रीः स सुश्रियौ तौ च सुश्रियः सन्ति जैपुरे ।
सुश्रियं तं सुश्रियौ तौ सुश्रियस्तान् निवेदये ॥
सुश्रिया सह सुश्रीभ्यां सुश्रीभिः शोभते पुरम् ।
अजादौ सुपि सर्वत्र इयङ भवति बुध्यताम् ॥

कुमारीमिव आचरति कुमारीयति वा, ततः क्विप् आचारात्। आचारक्विबन्ताद्वा कर्तरि क्विप् प्रत्ययः विभक्तियलोपादिना रूपसिद्धिः।

कुमारीशब्दः—

कुमारी नैव जानाति कुमार्यौ पठतो नहि।
कुमार्यः साम्प्रतं नैव पूर्वकाल इव स्थिताः॥
कुमार्यं तं कुमार्यौ तौ कुमार्यस्तान् विलोकय।
कुमार्या च कुमारीभ्यां कुमारीभिर्न संविशेत्॥
कुमार्यै वा कुमारीभ्यां कुमारीभ्यः कृपां कुरु।
यण्कार्यं च नदीसंज्ञा विद्यतेऽत्र विशेषता॥
हे कुमारि ! कुमारीणां कुमार्यां सङ्गमस्तव।

प्रध्यायतेः क्विप्। प्रपूर्वकध्याधातोः क्विप्, तस्य सर्वापहारलोपे धातुयकारस्य संप्रसारणे दीर्घे च कृते प्रधीशब्दः सिद्ध्यति।

अङ्यन्तत्वान्न सुलोपः।

रूपदर्शनम्—

प्रधीः प्रध्यौ तथा प्रध्यः प्रथमारूपमुच्यते।
प्रध्यं प्रध्यौ शसि प्रध्यः प्रीणयन्ति जना न के॥
प्रध्या सह प्रधीभ्याञ्च प्रधीभिः शोभते गृहम्।
प्रध्ये देयं प्रधीभ्याञ्च प्रधीभ्यः पायसं मधु॥
प्रध्यः[५] प्रध्यः[६] तथा प्रध्योः प्रध्यां कुर्वेऽभिनन्दनम्।
प्रध्यि प्रध्योः प्रधीषु त्वं वर्तस्व विनयेन च॥

यदा तु प्रकृष्टा धीर्यस्येति विग्रहस्तदा नदीसंज्ञाप्रयुक्तं कार्यं स्यात्। तत्पक्षे रूपञ्च प्रधी प्रध्यौ प्रध्यः, प्रधीम्, प्रध्यौ, प्रधीन्, प्रध्या[३], प्रध्यै[४], प्रध्याः[५] प्रध्याः[६], प्रध्याम्[६] प्रध्याम्[७], दीर्घत्वादामि नुट् न, किन्तु यणेव क्रियते।

उन्नयतीति उन्नीः— सत्सू द्विष इति क्विप् धातुना संयोगस्य विशेषणादिह स्यादेव यण्।

अयमुन्नीः इमावुन्न्यौ ते उन्न्यः सन्ति सर्वदा।
उन्न्यमुन्न्यौ तथोन्न्यस्तान् सर्वत्र पूजयाम्यहम्॥

उन्न्या तथा च उन्नीभ्याम् उन्नीभिरिह स सुखी।
आमि उन्न्यां ङौ च उन्न्याम् हे उन्नीरिति च भवेत् ॥
ग्रामणीशब्दरूपाणि एवमेव च पाठयेत् ।

नयतीति नीः—क्विप् प्रत्ययः । अनेकाच्त्वाभावादत्र न यण्-किन्तु इयङ्डेव ।अत्र ङेराम् नद्याम्नीभ्य इति विशेषकार्यं ङेराम् ।

रूपदर्शनम्—

नीः नियौ नियः प्रथमा नियं नियौ नियस्ततः ।
निया नीभ्याञ्च नीभिः निये नीभ्यां नीभ्य इति ॥
अजादिषु इयं कृत्वा विभक्त्या मेलनं भवेत् ।
हल्विभक्तौ विशेषो न हे नीः संबोधने पदम् ॥
संयोगपूर्वकस्यात्र सुश्रियौ स्तः यवक्रियौ ।
एरनेकाच इत्यतो यण् कार्यं न प्रवर्तते ॥
गतिकारकान्यपूर्वस्य शब्दस्यापि न यण् भवेत् । वा० ।
शुद्धधियाविति तस्माद्रूपं स्यात् परमधियौ ॥
दुर्धियो वृश्चिकभियः शब्दे गतिर्न कारकम् ।
वर्तते यण् न तस्मान्न कथितं दीक्षितादिना ॥

सुधीः—पण्डितः । अत्र न सुधियोरिति यण् निषेधो विशेषकार्यम् ।

न भूसुधियोः । ६ । ४ । ८५

भूसुधियोरचि सुपि यण् नैव जायते पदे ।
भुवौ भुवश्च सुधियौ सुधियस्तान् नमाम्यहम् ॥

रूपदर्शनम्—

सुधीः ब्रूते विचार्यैव सुधियः पठने रताः ।
सुधियं वन्दते लोकः सुधियस्तान् नमाम्यहम् ॥
सुधिया ज्ञायते तत्त्वं सुधीभिः सङ्गतिं कुरु ।
सुधियेऽस्तु नमस्कारः सुधीभ्यः प्रेम दर्शयेत् ॥
सुधियः सज्जनोऽधीते सुधीभ्यः पठितं मया ।
सुधियः कठिनः प्रश्नः सुधियां वचनं शुभम् ॥
सुधियि कस्य न स्नेहः सुधीषु मैथिलो महान् ।
सुधियौ द्विः सुधीभ्यां त्रिः सुधियोरन्तयोर्द्वयोः ॥

क्रमाद् द्विवचने रूपं पठित्वा वाक्यमुच्यताम् ।

सखीशब्दः—सखायमिच्छतीति विग्रहं कृत्वा क्यजन्तसखीशब्दे-ऽत्रानङ्णित्ववद्भावौ भवत एव ।

रूपदर्शनम्—

सखा मेऽस्ति सखायौ स्तः सखायः कति सन्ति नः ।
सखायं तं सखायौ तौ सख्यस्तानभिनन्दय ॥
सख्या[3] सह सखीभ्याञ्च सखीभिः क्रियते सुखम् ।
सख्ये ङयि ङसौ सख्युः सखीभ्यां पूर्ववद् भवेत् ॥
[6]सख्युः सख्योस्तथा सख्यां सखी सख्योः सखीषु च ॥
हे सखीः मामनुगृह्य वर्तस्व मोदयस्व माम् ।
सखा रूपं सखायौ च सखायतीति विग्रहे ॥
अल्लोपस्थानिवत्त्वान्न, यणत्र क्विपि प्रत्यये ।
सह खेन वर्तते इति सखः, तमिच्छतीति विग्रहे सुप आत्मने क्यच् इति क्यच् क्यचि परे इत्वं भवति, अतोऽजादिविभक्तौ यण् क्रियते । दृश्यतां निम्नसंग्रन्थने—

अयं सखीः इमौ सख्यौ सख्यः सन्ति कति मम ।
सख्यं सख्यौ च सख्यस्तान् प्रातरेव दिदृक्षताम् ॥
सख्या रूपं तृतीयायां सखीभ्यामिति च पुनः ।
सख्ये वद सखीभ्यां च सखीभ्यः प्रियमुच्यताम् ॥
सख्युः सखीभ्यां सखीभ्यः पृथग् भूत्वा न तिष्ठतु ।
सख्युः सख्योस्तथा सख्यां सखी सख्योः सखीषु च ॥

सुखमिच्छतीति सुखीशब्दः—

सुखीः सुख्यौ च सुख्यश्च सुख्यं सुख्यौ सुख्य इति ।
सुख्या सुख्येऽथ सुख्युश्च सुख्युः सुख्यां सुखी इति ॥

पक्वमिच्छतीति पक्वीः—

पक्वीः स पक्वियौ तौ पक्वियः शालय इमे ।
पक्वियं पक्वियौ पश्य पक्वियः पश्य तानिह ॥
पक्विया सह पक्वीभ्यां पक्वीभिः तैः फलैः खगाः ।
पक्विये आदिरूपाणि सरलानि पठन्तु वै ॥

इयं कार्यमजादौ स्याद् हलादौ नहि किञ्चन ।
सप्तम्यामेकवचने पक्वी रूपं च दीर्घतः ॥

यवान् क्रीणाति यः स यवक्रीः—

यवक्रीः वर्तते कोऽपि यवक्रियौ च तौ जनौ ।
यवक्रियः पुमांसस्ते सर्वमग्रे सुधीसमम् ॥
संयोगपूर्वकत्वान्न यणादेशोऽत्र जायते ।
इयं भवत्यजादिप्रत्ययेऽचिश्नुभ्रुवामिति ॥

सुतमिच्छतीति सुतीः—( पुत्राभिलाषी )

सुतीः सुत्यौ तथा सुत्यः सुत्यं सुत्यौ सुत्य इति ।
सुत्या सुतीभ्यां सुतीभिः सुत्ये सुत्युश्च पूर्ववत् ॥

लूनमिच्छति लूनयति, लूनयतीति लूनीः = छेदकः ।

लूनीः लून्यौ तथा लून्यः लून्यं लून्यौ लून्य इति ।
लून्या तथा च लूनीभ्यां लूनीभिरादिपठचताम् ॥
पञ्चम्यामेकवचने षष्ठचां लून्युरिति भवेत् ।

क्षाममिच्छति क्षामीयति, तस्मात् क्विप् क्षामीः—

नष्टो भवितुमिच्छन् यः स क्षामीरिति कथ्यते ।
अजादौ यण् विधीयेत-हलादौ नैव किञ्चन ॥
हे क्षामीः भवेद्रूपं सविसर्गं विशेषता ।

प्रस्तीमीशब्दः—

संघठितो भवितुमिच्छति स प्रस्तीमीः ।
प्रस्तीमीश्च प्रस्तीम्यौ प्रस्तीम्यस्ते घृतादयः ॥
प्रस्तीम्यञ्च प्रस्तीम्यौ प्रस्तीम्यः पश्यत इमान् ।
प्रस्तीम्या प्रस्तीमीभ्यां प्रस्तीम्ये प्रस्तीम्य इति ॥
अजादिप्रत्यये यण् स्याद् हे प्रस्तीमीरिति भवेत् ।

शुष्कीयतेः क्विप् । अचिश्नुधातुरित्युवङ् । शुष्को भवितुमिच्छति यः स शुष्कीः ।

स शुष्कीः शुष्कियौ तौ च शुष्कियस्तरव इमे ॥

शुष्कियं शुष्कियौ सर्वान् शुष्कियः पश्यतान् तरून् ।
शुष्किया खलु शुष्किभ्यां शुष्किभिस्तरुभिश्च किम् ॥
शुष्किये देहि पानीयं शुष्कीभ्यां शुष्कीभ्य इति ।
इयं कार्यमजादौ स्याद् हलादौ नहि किञ्चन ॥
दीर्घान्तत्वात् सुलोपोन हे शुष्कीः संबोधनम् ।
॥ इतीकारान्तशब्दाः ॥

अथ ह्रस्वोकारान्तशब्दः—( घिसंज्ञकोऽयम् )
पूर्वकथितानामेव सूत्राणां प्रवृत्तिरत्र—
भानुशब्दः—

भानुः प्रकाशते पूर्वे भानुं नमति मानवः ।
भानुना भाति संसारः भानवेऽस्तु सदा नमः ॥
भानोः तेजः समायाति भानोः पुत्रः शनिग्रहः ।
भानौ भक्तिमहं कुर्वे हे भानो नीरुजं कुरु ॥

एकवचनान्तमात्रस्य प्रयोगः अथैषां साधनप्रकारः । भानु सु-स् रु र् विसर्गः—भानुः । भानु अम् पूर्वरूपेण भानुम् । भानु टा आ ना भानुना । भानु ङे ए गुणोऽवादेशश्च भानवे । भानु ङसि अस् गुणः पूर्वरूपं सस्य रुत्वं विसर्गश्च भानोः । एवमेव ङस् अस् गुणः पूर्वरूपं सस्य रुत्वं विसर्गः भानोः । भानु ङि घिसंज्ञा अच्चघेः वृद्धिः भानौ इति ।

गुरुशब्दसंग्रन्थनम्—

एकवचने बहुवचने

गुरुः प्रणामतो हृष्टः गुरवः सन्तु धार्मिकाः ।
गुरुं नमति राजापि गुरून् नत्वा सुखी भवेत् ॥
गुरुणा सह शय्यायां गुरुभिर्न विशेत् क्वचित् ।
गुरवेऽस्तु नमो नित्यं गुरुभ्यः क्रियतां नमः ॥
गुरोः पाठं पठित्वाऽहं गुरुभ्यः शान्तिमाप्नुयाम् ।
गुरोः सेवाधर्मकार्यं गुरूणां वन्दनं शुभम् ॥
गुरौ भक्तिं सदा कुर्याद् गुरुषु निश्छलो भवेत् ।
गुरू गुरू गुरुभ्यां त्रिः गुर्वोरन्तिसयोर्द्वयोः ॥
गुरुशब्दाद् द्विवचने सप्त रूपाणि बोधत ।

शम्भुशब्दः—

शम्भुः शम्भू शम्भवस्ते प्रथमारूपमुच्यते ।
शम्भुं शम्भू च शम्भून् तान् नमन्ति सर्वदा जनाः ॥
शम्भुना शम्भवे शम्भोः शम्भोः शम्भौ च सप्तमी ।
हे शम्भो सरलं रूपं वक्तव्यं पठनार्थिना ॥

वेवेष्टि जगत् स विष्णुः—

अयं विष्णुः इमौ विष्णू विष्णवः सन्ति ब्राह्मणाः ।
विष्णुं विष्णू तथा विष्णून् नत्वा सुखीजनो भवेत् ॥
विष्णुना रक्ष्यते लोकः विष्णुभ्यां विष्णुभिस्तथा ।
विष्णवे खलु विष्णुभ्यां विष्णुभ्यो नम उच्यताम् ॥
विष्णोस्तथा च विष्णुभ्यां विष्णुभ्यः शान्तिरस्ति मे ।
विष्णोः विष्ण्वोश्च विष्णूनां पूजा सर्वसुखप्रदा ॥
विष्णौ विष्ण्वोश्च विष्णुषु रक्षाभारोऽस्ति प्राणिनाम् ।
हे विष्णो रक्ष हे विष्णू हे विष्णवः प्रसीदत ॥

निर्देशनम्—

सिन्धुरिन्दुः शिशुर्वायुः साधुर्बाहुस्तरुः प्रभुः ।
भिक्षुरिक्षुः पशुः फेरुरुदन्तो गुरुवच्चलेत् ॥

क्रोष्टुशब्दप्रसङ्गः—क्रुश्धातोस्तुन् प्रत्ययः । तृचिकृते क्रोष्टृ भवति । शृगालवाची अयम् ।

तृज्वत्क्रोष्टुः । ७ । १ । ९५ ।

तृज्वत्क्रोष्टुरसंबुद्धौ स्वादिपञ्चविभक्तिषु ।

ऋतो ङि सर्वनामस्थानयोः । ७ । ३ । ११०

ङौ सर्वनामस्थाने च ऋदन्तस्य गुणः सदा ।

ऋदुशनस्पुरुदंशोऽनेहसाञ्च । ७ । १ । ९४

ऋदन्तानामसंबुद्धौ सौ परे स्यादनङ् सदा ।
उशनःपुरुदंशोऽनेहसामपि स्यादनङ् ॥

अप्तृन्-तृच्-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तॄणाम् । ६ । ४ । ११

अप्-तृन्-तृच्-स्वसृ-नप्तॄणां नेष्टुस्त्वष्टुः क्षत्तुरपि ।
होतृ-पोतृ-प्रशास्तॄणामुपधादीर्घमाप्नुयात् ॥
असंबुद्धौ परे सर्वनामस्थाने विशेषतः ।

अत्र फक्किका—

व्युत्पत्तिपक्षमासाद्य नप्त्रादेर्ग्रहणं कुरु ।
तृजन्तत्वादेव दीर्घो हि नप्त्र्यादिके प्रवर्तते ॥
किमर्थं ग्रहणं सूत्रे तद्व्यर्थं नियमाय वा ।
नियमः क्रियते तस्मात्उपधादौ यदि दीर्घता ॥
नप्त्रादीनामेव जायेत पित्रादीनां न दीर्घता ।
उद्गातारावत्र दीर्घः भाष्यप्रयोगतो भवेत् ।
अप्-तृन्-तृजादिना दीर्घे क्रोष्टा स्यात् क्रोष्टाराविति ।

विभाषा तृतीयादिष्वचि । ७ । १ । ९७

विकल्पेन तृतीयादौ तृज्वत् स्यादचि प्रत्यये ।
तस्मात् क्रोष्ट्रा च क्रोष्टुना क्रोष्ट्रे च क्रोष्टवे द्वयम् ॥
भवेदुकार आदेशः ऋदन्तान् ङसिङसोर्इति ।

रात्सस्य । ८ । २ । २४

रात्परस्य सकारस्य लोपेन क्रोष्टुरिष्यते ।
नुमचिरतृज्वद्भावेभ्यो नुट्पूर्वविप्रतिषेधेन । वा० ।
नुम्चिरादिकार्येभ्यः पूर्वं नुट् क्रियते सदा ।
क्रोष्टूनाञ्च वारीणां तिसृणामादि साध्यताम् ॥

अस्य रूपसंग्रन्थनम्—

क्रोष्टा वनेऽस्ति क्रोष्टारौ क्रोष्टारः कति सन्ति वै ।
क्रोष्टारं किल क्रोष्टारौ क्रोष्टून् दशन्ति कुक्कुराः ॥
क्रोष्ट्रा कृतः क्रोष्टुना च क्रोष्टुभ्यां क्रोष्टुभिः रवः ।
क्रोष्ट्रे तथा क्रोष्टवे रूपं क्रोष्टुभ्यां क्रोष्टुभ्य इति ॥
क्रोष्टुः क्रोष्टोश्च क्रोष्ट्रोः क्रोष्ट्वोः क्रोष्टॄणां विलम् ।
क्रोष्टूनामिति पक्षे स्यात् क्रोष्टौ च क्रोष्टरि भवेत् ॥
क्रोष्ट्रोः क्रोष्ट्वोश्च सप्तम्यां क्रोष्टुषु धूर्तता बहुः ।

अजादावत्र वा क्रोष्टृ हलादौ क्रोष्टुरेव वा ॥
हे क्रोष्टो किलँ हे क्रोष्टू हे क्रोष्टवः किं कुश्यत ।

॥ इत्युदन्ताः शब्दाः ॥

अथ दीर्घोकारान्तशब्दाः—

स्वभूः—( ब्रह्मा )—अत्र न भूसुधियोरिति यण्निषेधो भवति । ततश्च अचिश्नुधातु भ्रुवामिति सूत्रेण अजादिविभक्तौ सर्वत्र उवङ्ङादेशः क्रियते ।

रूपदर्शनम्—

स्वभूः करोति संसारं स्वभुवः कुत्र सन्ति वै ।
स्वभुवं बन्दते लोकः स्वभुवः प्रणमाम्यहम् ॥
स्वभुवा दीयते भाग्यं स्वभूभिः सह देवताः ।
स्वभुवेऽस्तु नमो नित्यं स्वभूभ्यः को न क्रुध्यति ॥
स्वभुवः सृष्टिरुत्पन्ना स्वभूभ्यः कुशलानि वः ।
स्वभुवो लेखमुच्छेत्तुं स्वभुवां नैव शक्यते ॥
स्वभुवि नास्तिका नैव स्वभूषु विश्वसन्ति वै ।
स्वभुवौ द्विः स्वभूभ्यां त्रिः स्वभुवोरन्तयोस्तथा ॥
प्रथमादौ समुच्चार्य वाक्यसंयोजनं कुरु ।

स्वयम्भूः—( ब्रह्मा )

स्वयम्भूशब्दरूपाणि स्वभूशब्दसमानि स्युः ।
अजादिप्रत्यये कार्यमुवङ सर्वत्र पाठकैः ॥

हूहूशब्दः—( गन्धर्वविशेषवाचकः ) ।

अत्र ढीर्घाज्जसिचेति दीर्घनिषेधः ।
अयं हूहूः इमौ हूह्वौ हूह्वः सर्वे दिवि स्थिताः ।
हूहूम् हूह्वौ हूहूनिति गानं कर्तुं समाह्वय ॥
टादावचि तु यण् कार्यं हूह्वा हूहूभ्यामिति ।
हूह्वे देयं हूहूभ्याञ्च हूहूभ्यश्च सुखमस्ति वै ॥
हूह्वः शृण्वन्ति ते गानं हूह्वः प्रियं वचो भवेत् ।
हूह्वोर्हूह्वां सभायां स्यात् स्वागतं जनमण्डले ॥

हूह्वि हूह्वोश्च हूहूषु गुणाः सन्ति जनप्रियाः ।
हे हूहूः त्वं च हे हूह्वौ हे हूह्वः किञ्चिदुच्यताम् ॥

चमूमतिक्रान्तः—अतिचमूः—( सेनानायकः )

अतिचमूरयमस्तीह—अतिचम्वौ च तौ स्मृतौ ।
अतिचम्वः चलन्त्यग्रे हे अतिचमु पाहि माम् ॥
अतिचमूमतिचम्वौ अतिचमूनभिनन्दय ।
अतिचम्वा अतिचम्वै अतिचम्वा इति क्रमः ॥
नदीसंज्ञाकार्यमत्र तस्माद्रूपे विशेषता ।
तिष्ठात्र हे अतिचमु रक्ष मां देशमेव वा ॥

ओः सुपि । ६ । ४ । ८३

संयोगो धात्ववयवः पूर्वो यस्य न वर्तते ।
धातूकारस्य तस्यात्र यण् भवेदचि सुपिपरे ॥

खलपूशब्दः—

खलं पुनातीति विग्रहे पूञः क्विप् प्रत्ययोऽत्र विज्ञेयः ।

रूपदर्शनम्—

खलपूः श्यामलालोऽयं खलप्वौ तौ मम प्रियौ ।
खलप्वः सरलाः सन्ति खलप्वं पालयाम्यहम् ॥
खलप्वा खण्डचते धान्यं खलप्वे रोचते श्रमः ।
खलप्वः क्रेतुमिच्छामि खलप्वः शालिसञ्चयम् ॥
खलप्वि सर्वभारोऽस्ति धान्यकण्डनकर्मणः ।
सर्वत्राचि विभक्तौ स्याद् ओः सुपि इति यण्विधिः ॥
खलपूभ्यां खलपूभिः सरलं हलि पठचताम् ।

लुनातीति लूः—(छेदको जनः )

लूः लुवौ लुवः प्रथमा लुवं लुवौ लुवस्तथा ।
लुवा लूभ्यां तथा लूभिः तृतीयारूपमुच्यते ॥
लुवे लुवः लुवश्चादि सरलं रूपमस्य वै ।
अनेकाचस्तु प्रकृतेर्यण् भवेत् सूत्रमस्ति तत् ॥
सुलूः सुल्वौ तथा सुल्वः इत्यादिषु उवङ् नहि ।

उल्लूशब्दः—

स उल्लूस्तौ च उल्ल्वौ स्तः उल्ल्वः ते कृषका जनाः।
उल्ल्वमुल्ल्वौ तथा उल्ल्वः क्षेत्रे छेत्तुं समाह्वयेत् ॥
अजादौ यण् हलादौ न तद्विचार्य प्रयुज्यताम्।
कटं प्रवते इति कटप्रूः—कट निर्माणकर्ता ॥
स कटप्रूः कटप्रुवौ कटप्रुवः भ्रमन्ति ते।
कटप्रुवं कटप्रुवौ कटप्रुवः समाह्वय।
कटप्रुवा कटप्रूभ्यां कटप्रूभिः कृताः कटाः ॥
संयोगपूर्वकत्वान्न यण् भवेदिह बुध्यताम्।

अग्रेऽपि—

वर्षायां भवतीति वर्षाभूः—( मण्डूकादयः )

वर्षाभ्वश्च। ६। ४। ८४

वर्षाभ्वश्चेति सूत्रस्य सरलार्थः प्रदर्शितः।
वर्षाभूकारवर्णस्य सुप्यचि यण् विधीयते ॥
वर्षाभूः किल वर्षाभ्वौ वर्षाभ्वः सन्ति दर्दुराः।
वर्षाभ्वमथ वर्षाभ्वौ वर्षाभ्व उरगोऽश्नुते ॥
वर्षाभ्वा स्यात् तृतीयायां वर्षाभूभ्यां क्रमेण वै।

दृग्भू-काराभू-शब्दौ स्वभूवद् अजादिविभक्तौ सर्वत्र उवङ् क्रियते।

दृग्भूः स दृग्भुवौ तौ च दृग्भुवस्ते मम प्रियाः ॥
दृग्भुवं दृग्भुवौ दृष्ट्वा दृग्भुवः प्रणमन्ति ते।

कारायां भवतीति काराभूः—

काराभूरयं काराभुवौ काराभुवश्च ते।
काराभुवं तथा काराभुवौ काराभुवः स्तुवे ॥
काराभुवा काराभूभ्यां कराभूभिरिति क्रमः।
अजादौ स्यादुवङ्कार्यं हलादौ नहि किञ्चन ॥

दृन्भी ग्रन्थे—दृम्भतीति दृम्भूः—ग्रन्थकर्ता।

दृम्भधातो रूप्रत्ययो नुमागमो निपात्यते ॥
दृम्भूः दृम्भ्वौ तथा दृम्भ्वः कथ्यन्ते ग्रन्थकारकाः।
दृम्भूं दृम्भ्वौ तथा दृम्भून् नमस्करोमि सादरम् ॥

विशेषवस्तु—

अत्र ऊकारो न धातोरिति उवङोऽप्रवृत्तिः यणेव भवति ।

यथा—

दृन्कर पुनः पूर्वस्य भुवो यण्स्यादचि प्रत्यये । वा० ।
दृन्भ्वौ तथा करम्वौ च पुनर्भ्वावादि सिद्ध्यति ।

रूपदर्शनम्—

दृन्भूः दृन्भ्वौ च दृन्भ्वश्च-प्रथमारूपमुच्यते ।
दृन्भ्वं दृन्भ्वौ तथा दृन्भ्वः द्वितीयायां पठन्तु वै ।।
करभूः स करभ्वौ तौ करभ्वः कति सन्ति मे ।
करभ्वं तथा करभ्वौ करभ्वः पश्यत प्रियान् ।।

पुनर्भूः—क्रियाशब्दः पुंलिङ्गोऽयम् ।

पुनर्भूः स पुनर्भ्वौ तौ पुनर्भ्वः प्रभवन्ति ते ।
पुनर्भ्वं किल पुनर्भ्वौ पुनर्भ्वः कथयामि किम् ।।
पुनर्भ्वा च पुनर्भूभ्यां पुनर्भूभिः सह व्रजेत् ।
पुनर्भ्वे च पुनर्भूभ्यां पुनर्भ्वश्चादि साध्यताम् ।।

।। इत्यूकारान्तपुंलिङ्गशब्दाः ।।

दधातीति धाता—( धातृशब्दऋकारान्तः )

धाञ्धातोस्तृच्प्रत्ययस्ततोऽनङ्दीर्घसुलोपनलोपादिकार्यम् ।
अनङ्दीर्घसुलोपश्च नलोपश्च यदा भवेत् ।
तदा धाता भवेद्रूपं धातारौ गुणदीर्घतः ।।

ऋवर्णान्नस्य णत्वं वाच्यम् । वा० ।

ऋवर्णान्नस्य णत्वेन धातॄणामिति सिद्ध्यति ।

रूपसंग्रन्थनम्—

धाता तथा च धातारौ धातारः प्रथमापदम् ।
धातारमथ धातारौ धातॄन् सर्वोऽपि मन्यते ।।
धात्रा कृतं जगत् सर्वं धातृभ्यामथ धातृभिः ।
नमो धात्रे च धातृभ्यां धातृभ्यः सर्वदा नमः ।।
धातुर्भयं च धातृभ्यां धातृभ्यः को न बिभ्यति ।
धातुः धात्रोश्च धातॄणां धातरि सप्तमीपदम् ।।

हे धातः पाहि धातारौ धातारः पात सर्वदा ॥

पितृशब्दः—पाति यः स इति विग्रहे तृच्प्रत्ययोऽत्र ।
तृचि परे पातेरित्वं भवति ।

रूपदर्शनम्—

एकवचने बहुवचने
पिता परमपूज्यो मे पितरः श्राद्धकर्मणि ।
पितरं वन्दते सर्वः पितॄन् श्राद्धेषु पूजयेत् ॥
पित्रा सह वसाम्यत्र पितृभिः क्रियते शुभम् ।
पित्रे फलानि यच्छन्ति पितृभ्यः पिण्डवापनम् ॥
पितुः शास्त्रं पठित्वा सः पितृभ्यः शुभमिच्छति ।
पितुः सेवां करिष्यामि पितॄणां वन्दनं शुभम् ॥
पितरि श्रद्धया सौख्यं पितृषु भक्तिरस्तु नः ।
हे पितः प्रातरुत्थाय वन्देऽहं चरणौ तव ॥

द्विवचनम्—

पितरौ द्विः पितृभ्यां त्रिः पित्रोरन्तिमयोर्द्वयोः ।
क्रमाद् द्विवचने रूपं पठित्वा वाक्यमुच्यताम् ॥

अत्र विशेषवस्तु—

ऋकारान्तकुटुम्बजनबोधक—पितृमातृभ्रातृदुहितृजामातृदेवृयातृ-शब्दानामेवं नृशब्दस्य च प्रथमाद्विवचनमारभ्य द्वितीया-द्विवचनपर्यन्तं दीर्घो न जायते, किन्त्वन्येषामृकारान्तशब्दानां सर्वनाम-स्थानविभक्तौ सर्वत्र दीर्घो जायते, यथा धातारौ कर्तारौ कर्तार इत्यादौ। स्वसृशब्दस्य सम्बन्धवाचकत्वेन स्वसारौ स्वसार इति दीर्घकार्ययुक्तमेव रूपम् ।

नृ च । ६ । ४ । ६

'नृ च' सूत्रेण दीर्घः स्याद् नृशब्दस्यामि वा इह ।
नृणां नॄणां द्वयं रूपं तस्मादत्र प्रयुज्यते ॥

अथ ऋकरान्तो नृशब्दः—

नयतेर्डिच्चेति ऋकारान्तो नृशब्दः । अत्रानङादि प्राग्वत् ।

रूपदर्शनम्—

ना नरौ नरइत्येवं रूपमुच्चार्यतां ततः।
भवेद् नरं नरौ नॄन् वै द्वितीयायां क्रमेण च ॥
न्रा नृभ्यां च नृभिः कार्यं सुन्दरं वस्तु किञ्चन।
न्रे नुः नुश्च नृणां नॄणां नरि न्रोः नृषु सप्तमी ॥

नप्तृशब्दः—( तृजन्तस्तृन्नन्तो वा )

न पतति कुलं येन स नप्ता—दौहित्रः पौत्रो वा।

नप्ता मे शोभते सौम्यः नप्तारौ पठतां तव।
नप्तारः सन्तु मे विज्ञाः नप्तारं मन्यतां बहु ॥
नप्तारौ तौ च नप्तॄन् समाहूयात्र लालयेत्।
ऋकारान्तस्य नप्तुः रूपं भवति धातृवत् ॥
अप्तृन्तृजादिसूत्रे—नप्त्रादिनियमार्थकम्।
ऋकारान्ततृजन्तेषु दीर्घो भवति चेत् क्वचित् ॥
नप्त्रादीनामेव स स्यात् पितृमात्रादिषु नहि।

नेष्टृशब्दः—अत्रापि तृन् तृच् वा भवति।

नेष्टाऽयं तौ च नेष्टारौ नेष्टारः किन्न कुर्वते।
नेष्टारमथ नेष्टारौ नेष्टॄन् गमय ग्रामतः ॥
धातृवत्सर्वरूपाणि पठनीयानि बालकैः।
हे नेष्टः किं वसस्यत्र गच्छ त्वं निर्जनं वनम् ॥

वक्तृशब्दः श्रोतृशब्दः

एकवचने प्रयोगः बहुवचने प्रयोगः

वक्ता जनो महानेकः श्रोतारः सन्ति भूरिशः।
वक्तारं वन्दते लोकः श्रोतॄन् वक्ता प्रशंसति ॥
वक्त्रा भाषणमारब्धं श्रोतृभिः श्रूयते स्थिरैः।
वक्त्रे पीठासनं देयं श्रोतृभ्यो निम्नमासनम् ॥
वक्तुः सर्वे प्रसीदन्ति श्रोतृभ्यः कुशलं भवेत्।
वक्तुः स्पष्टतमा वाणी श्रोतॄणां हर्षवर्धनी ॥
वक्तरि प्रतिभा यत्र तत्र श्रोतृषु नन्दनम्।
हे वक्तः त्वां प्रशंसामि हे श्रोतारः प्रयान्त्वथ ॥

दीर्घ-ॠकारान्तः कॄशब्दः—( कार्यकर्ता )

कॄ-तॄ-धातोरनुकृतौ इत्वं दीर्घश्च कीर्भवेत्
इत्वाभावे तु कॄः तॄः स्यात् क्रौ क्रः त्रौ त्रः क्विपि कृते।
कॄम् क्रौ कॄनिति सन्दर्श्यं क्रा क्रे क्र आदि क्रामिति ॥

रूपदर्शनम्—

कीः किरौ किरः प्रोच्यः किरं किरौ किरः पठेत्।
किरा कीर्भ्याञ्च कीर्भिश्च किरे कीर्भ्यां कीर्भ्य इति ॥
किरः कीर्भ्याञ्च कीर्भ्यश्च किरः किरोः किरामिति।
किरि किरोः भवेत् कीर्षु सुपि रूपं क्रमेण स्यात् ॥

तॄशब्दः—

तीः तिरौ तिरः पश्चात् तिरं तिरौ तिरः ततः।
त्रा तीर्भ्याञ्च तीर्भिश्च तिरे तिरः तिरः तिराम् ॥
सप्तम्यां तिरि तीर्षु वै रूपं पठतु बालकः।
पक्षे तॄः त्रौ च त्रः रूपं त्रम् त्रौ त्रः शसि च भवेत् ॥
ॠकारान्तस्य शब्दस्य रूपमीदृशमुच्यते ॥

॥ ॠकारान्तः शब्दः समाप्तः ॥

गम्लृशब्दः—( लृकारान्तः )

गमा स गमलौ तौ च गमलः प्रथमा बहौ।
गमलं गमलौ गमॄन् द्वितीयारूपमुच्यते ॥
गम्ला तथा च गम्लृभ्याम् गम्लृभिः सह याति सः।
गम्ले गमुल् गमुल् रूपं गम्लोः गमॄणां गमुलि ॥
गम्लोः गम्लृषु हे गमल् रूपाणां क्रम इष्यते।

सूचना—

लृकारस्य च दीर्घाभावाद् द्वितीया-षष्ठी-बहुवचने न दीर्घः लृ, किन्तु तत्र ॠ पठयते।

शक्लृशब्दः—( शक्नोति विग्रहः )

शका स शकलौ तौ च शकलः कीर्तिमाप्नुयुः।
शकलं शकलौ शकॄन् याचेऽहं रक्षणाय नः ॥
शक्ला[३] [४]शक्ले शकुल्[५] पश्चात् शकुल्[६] शक्लोश्च शकॄणाम्।
शकुलि शक्लोः शक्लृषु हे शकल् प्रतिपाद्यताम् ॥

॥ इति लृकारान्तः शब्दः ॥

अथ एकारान्तशब्दाः—

हिनोतीति हेः—हयमतिक्रान्तोऽसौ-इति अतिहेः—एतस्यापि रूपं सेशब्दवद् भवति ।

सेशब्दः—

इः लक्ष्मीः–इना सह वर्तते इति सेः धनवान् जनः । एकारान्तोऽयम् ।

रूपदर्शनम्—

सेः सुखं लभते प्रायः सयौ सयः सुखान्विताः ।
सयं सयौ सयः सर्वे याचन्ते भिक्षुकाः सदाः ॥

सया सेभ्यां तथा सेभिः सह भ्राम्यन्ति मानवाः ।
सये सेभ्यां तथा सेभ्यः सर्वे ददति आशिषम् ॥

सेः सेभ्यां च सेभ्यश्च पृथग् भवन्ति केऽपि न ।
सेः सयोश्च सयामेव वर्चस्वं राजतन्त्रके ॥

सयि सयोः सेषु नैव विश्वासो जनतन्त्रके ।
हे से सयौ सयो रूपं संबोधने प्रवर्तते ॥
संबुद्धिलोप इष्येत एङन्तत्वादिति बुध्यताम् ।
अतिहे परमे रूपमेवमेव प्रवर्तते ॥

पाण्डे नन्दे तथा आप्टे पावटे आदि दृश्यते ।
भावे-आदि एदन्तस्य रूपमेवं प्रदर्श्यताम् ॥

ऐकारान्तो रै-शब्दः—( धनवाचकः )

रायो हलि । ७ । २ । ८५

रायो हलीति सूत्रेण आत्वमस्य हलि भवेत् ।
आयादेशोऽजादिपरे क्रियते रूपदर्शने ॥
राः रायौ तथा रायः—प्रथमारूपमुच्यते ।
रायं रायौ पुना रायः लब्ध्वा हर्षन्ति मानवाः ॥
राया राभ्यां तथा राभिः सर्वं कार्यं च सिद्ध्यति ।
राये राभ्यां च राभ्यश्च यतन्ते भुवि मानवाः ॥
रायः राभ्यां तथा राभ्यः कीर्ति सुखं चिकीर्षतु ।
रायः रायोस्तथा रायां स्थितिर्न सर्वदा गृहे ॥

रायि रायोः रासु लुब्धः कलहाय प्रवर्तते ।
हे राः रायौ राय इति संबोधनपदं वदेत् ॥

॥ इत्यैकारान्तशब्दः ॥

**ओकारान्तो गोशब्दः—**

गच्छतीति विग्रहे गमेर्डोप्रत्ययष्टिलोपश्च जायते ।
( अयं धेनुवाचको वृषवाचकोऽपि )

गोतो णित् । ७। १ । ९०

गोशब्दाद्विहितं चात्र णिद्वत् स्वादिपञ्चकम् ।
वृद्धया सिद्धयति गौरत्र गावौ गावः क्रमेण च ।

ओतोऽम्शसोः । ७ । १ । ९३

अम्शसोः परयोरत्र आत्वं गोरत्र जायते ।
गाम् गावौ च गाः पश्य, सुद्यौर्योगविभागतः ॥

**रूपसंग्रन्थनम्—**

एकवचने बहुवचने

गौः पृथिव्यां सदा पूज्या गावः सर्वाश्च मातरः ।
गां विन्दते स गोविन्दः गाः पाति गोप उच्यते ॥
गवा सहावसत् कृष्णः गोभिः सह कृषीबलाः ।
गवे घासं बुसं देहि गोभ्यः शालां करोति सः ॥
गोः बिभेति यमो राजा गोभ्यः कल्याणमस्ति नः ।
गोः सेवा परमो धर्मः गवां सर्वत्र पूजनम् ॥
गवि श्रद्धां विधायैव गोषु हर्षन्ति हिन्दवः ।
हे गौः तवोपकारस्य प्रत्युपकार आदरः ॥
गावौ गावौ च गोभ्यां त्रिः गावोरन्तिमयोर्द्वयोः ।
रूपं द्विवचने ज्ञात्वा वाक्यानि रचयन्ति वै ॥

**अत्र विशेषवस्तु—**

यत्र गोशब्दः कस्याप्यन्ते भवेत् तदा तत्र समस्तपदे विशेष्य विशेषणभावेन गोरवस्थानं भवति । तत्र गोशब्दस्य गवी संजायते,

यथा—कृष्णगवी, सवत्सगवीत्यादौ। तत्र स्त्रीत्वेन नदीशब्दवद्रूपं कर्मधारयसमासस्थले; किन्तु बहुव्रीहिसमासे सति गोरित्यस्य ह्रस्वत्वं गुर्जायते, यथा चित्रगुः। तस्य भानुवद्रूपम्।

एवमेव मध्ये यत्र गोशब्दस्तत्र टच् प्रत्ययसत्वेन गव इति दृश्यते यथा पञ्चगवधन इत्यत्र सर्वं विचार्य प्रयोगो विधेयः।

ओकारान्तो लो-शब्दः—

लुनातीति विग्रहे लुधातोर्विच् प्रत्ययः—लोशब्दः सम्पद्यते। तस्याप्येवमेवरूपं विज्ञेयम्।

यथा—

लौः लवौ लव इत्येवं लवं लवौ लवस्तथा।
लवा लोभ्यां तथा लोभिः लवे लोभ्यां भवेत् पुनः॥
लोः लोः लवोः लवां लवि-लवोः लोषु च सप्तमी।

द्योशब्दः—( आकाशवाची )

द्यौः द्यावौ द्यावः प्रथमा, द्यावं द्यावौ द्याव इति।
द्यवा द्योभ्यां च द्योभिश्च द्यवे [५]द्यौः [६]द्योः [७]द्यवि भवेत्।
प्रयोजनं यथा यत्र सर्वमर्थानुसारतः।
वाक्यं स्वयं विधातव्यमजादावव् विधीयते।
णित्वं स्यात् सर्वनामस्थाने केवलमत्र च।
ओदिति योगविभागं कृत्वा रूपस्य साधनम्॥

॥ इत्योकारान्तशब्दाः॥

अथौकारान्ताः—

ग्लौ शब्दश्चन्द्रार्थकः—

ग्लौः ग्लावौ ग्लाव इत्येवं ग्लावं ग्लावौ ग्लाव इतिं।
औतोऽम्-शसोरिति सूत्रमत्र नैव प्रवर्तते॥
ऐऔच् सूत्रसामर्थ्याद् ओदौतोः सावर्ण्यं नहि।
ग्लावा ग्लावे तथा ग्लावः ग्लावः ग्लावि च पठ्यताम्॥
आवादेशो विधातव्यः पूर्वत्राजादिप्रत्यये।

भ्यांभिस्भ्यसादिरूपाणि रत्नानि भवन्ति वै ॥
वाक्यं स्वयं यथायोग्यमुच्यतां च क्रियापदैः ।

जनानवतीति जनौः ( लोकपालः )

अयं जनौः जनावौ तौ ते जनावः प्रशंसिताः ।
जनावं तं जनावौ तौ जनावस्तान् नमाभ्यहम् ॥
जनावा तथा जनौभ्यां जनौभिरादि पठ्यताम् ।
जनावे आदरं कुर्याद् जनावः सुखमाप्नुते ॥
जनावः क्रियते मानः जनावि विश्वसिम्यहम् ।
अजादौ सन्धिरावत्र हलादौ नहि किञ्चन ॥
इत्यजन्तेषु पुंलिङ्गशब्दानां साधनक्रमः ।
सुरेशझाकृतश्लोकसिद्धान्तकौमुदी नवा ।
भूयाद् व्याकरणज्ञानकारिणामुपकारिका ॥

॥ इत्यजन्तपुंलिङ्गप्रकरणम् ॥



# अथाजन्तस्त्रीलिङ्गप्रकरणम्

**रमा ( लक्ष्मी )**

रमते या रमा सा स्यात् पचाद्यचि कृतेऽत्र टाप् ।
हल्ङ्याब्भ्य इति सूत्रेण सोर्लोपः क्रियते सदा ॥

**अत्र विशेषकार्यम्—**

औङ आपः । ७ । १ । १८ ।

आबन्तशब्दतः पश्चादौङः शी जायते सदा ।
अनुबन्धस्य लोपेन गुणे कृते रमे इमे ॥

संबुद्धौ च । ७ । ३ । १०६ ।

संबुद्धौ च परे आपः एकारादेश इष्यते ।
एङ्ह्रस्वाच्च सोर्लोपः हे रमे हे प्रिये सुधे ॥

आङि चापः । ७ । ३ । १०५ ॥

आङि ओसि परे आपः एत्वमत्र विधीयते ।
अयादेशे च रमया रमयोरिति साध्यते ॥

याडापः । ७ । ३ । ११३ ।

ङिद्वचनस्य याडापः परस्य क्रियते स्त्रियाम् ।
तत्पश्चाद् वृद्धिरेचि स्याद् रमायै रूपमुच्यते ॥

आपः परस्य ङेरेवं ङसेर्ङसश्च याड्भवेत् ।
दीर्घे कृते रमायाः स्याद् रमायामिति च तथा ॥

**सूत्रसारः—**

या यै याः या यामिति तृतीयादौ क्रमेण च ।
आकारेकारवर्णान्ते स्त्रीलिङ्गे चात्र पठ्यते ॥

रूपदर्शनम्—

रमा कन्या समुद्रस्य रमां वन्दे हरिप्रियाम् ।
रयया रमते विष्णुः रमायै क्रियते नमः ॥
रमायाः काऽधिका नारी, रमायाः सेवको जनः ।
रमायामनुरक्तस्य हे रमे रमसे सदा ॥

मालाशब्दस्य सर्वरूपाणि—मां रमां शोभां वा लाति-इति माला ।

माला देवस्य कण्ठेऽस्ति माले स्तः शोभने इमे ।
मालाः शिरसि शोभन्ते हे माले धारयामि त्वाम् ॥
मालां ग्रथ्नाति सा कन्या माले द्वे परिधेहि त्वम् ।
मालाः ग्रथ्नन्ति मालिन्यः विक्रीणन्ति गृहे गृहे ॥
मालया सह मालाभ्यां मालाभिः शोभते जनः ।
मालायै त्वञ्च मालाभ्यां मालाभ्यः चिनु यूथिकाः ॥
मालायाः किल मालाभ्यां मालाभ्यः सुरभिं नय ।
मालायाः मालयोः प्रायः मालानां धारणं प्रियम् ॥
मालायां मालयोश्चैव मालासु प्रेम कस्य न ? ।

विशेषवस्तुकथनम्—

शाला बाला कला कन्या राधा बाधा जया दया ।
सीता गीता प्रिया शीला कमलाद्या रमासमा ॥
संबोधने रमादीनामेत्वं कृत्वा च हे रमे ।
अम्बाऽक्काऽल्लेति शब्दानां ह्रस्वः संबोधने भवेत् ॥
हे अम्ब अक्क हे अल्ल प्रयोगोऽत्र विशेषतः ।
अन्यरूपाणि सर्वाणि रमावदेव चालयेत् ॥
असंयुक्ताश्च ये डलकास्तद्वतां ह्रस्वता नहि ।
हे अम्बाडे हे अम्बाले हे अम्बिके सुरक्ष माम् ।

जराशब्दः—

जरायाश्च जरस् कार्यमजादौ प्रत्ययेऽत्र वा ।

रूपदर्शनम्—

जरा जरे जराः पूर्वं जरां जरे जरास्तथा ।
जरया च जराभ्याञ्च जराभिः को न सीदति ॥

अजादौ जरसादेशो विकल्पेनात्र जायते ।
जरसौ जरसः पक्षे [३]जरसा [४]जरसे पुनः ।।
५-६ जरसः जरसोरग्रे जरसामिति पठ्यताम् ।
जरसि जरसोः प्रायः जरासु दयते जनः ।।

नासिकाशब्दः—

नासिका नासिके रूपं नासिकाः प्रथमाबहौ ।
नासिकां नासिके पश्चात् शसि च नासिकाः नसः ।।
नसा नासिकया नोभ्यां नासिकाभ्यामिति वदेत् ।
द्वे द्वे रूपे शसादौ स्तः स्वरादिषु हलादिषु ।।

निशा—( रात्रिः )

निशा निशे निशाः रूपं निशां निशे निशाः निशः ।
निशा च निशया निड्भ्यां निशाभ्यां निड्भिरादि च ।।
व्रश्चभ्रस्जेति सूत्रेण शस्य षत्वं पदान्तके ।

व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः । ८ । २ । ३६

व्रश्चादीनां छशान्तानां षोऽन्तादेश इष्यते ।
झलि परे पदान्ते च निड्भ्यामादिततोऽभवत् ।।
केचिन्मतेऽत्र वक्तव्यं निज्भ्यां निज्भिरिति क्रमात् ।

षढोः कः सि । ८ । २ । ४३ ।

षस्य ढस्य चः कः कार्यः सकारे च परे सदा ।
जश्त्वं प्रत्यसिद्धत्वादिदं नात्र प्रवर्तते ।
सप्तम्यां बहुवचने निच्छु निच्शु पठन्ति ते ।

पृतना—( सेना )

मांस-पृतना-सानूनां मास्पृत्स्नवः क्रमेण वै ।
शसादौ वा भवन्तीति पृतः पृता पृद्भ्यामिति ।।
सुटि रूपं रमावत् स्यात् सावधानेन पठ्यताम् ।

रूपदर्शनम्—

पृतना पृतने रूपं पृतनाः क्रमशः पठेत् ।
पृतनां पृतने पश्य शसि पृतनाः पृतः द्वयम् ।।

पृद्युक्तं पृतनायुक्तं रूपं शसादिषु भवेत् ।
पृता पृतनया पृद्भ्यां पृतनाभ्यामिति क्रमात् ।।
विश्वपावद् भवेद् गोपा शसादिषु विभक्तिषु ।

**सर्वाशब्दः ।**

सर्वनाम्नः स्याड्ढ्रस्वश्च । ७ । ३ । ११४ ।

आबन्तसर्वनाम्नस्तु ङितः स्याडागमो भवेत् ।
आपो ह्रस्वोऽपि जायेत सर्वस्यै सर्वस्या इति ।।
आमि तु सर्वनाम्नः सुट् सर्वासां रूपमुच्यते ।
स्त्रियां ङौ सुपि सर्वस्यां ङेराम् स्याद् ह्रस्वादिना ।।
एवं विश्वादयोऽप्यत्र स्त्रियां टाप् प्रत्ययान्तकाः ।

**रूपदर्शनम्—**

सर्वा सर्वे तथा सर्वाः प्रथमायां रमासमाः ।
केवलं ङिति सर्वत्र स्यै स्याः स्याः स्यामिति भवेत् ।।
आसामिति भवेदामि सुट्कार्येऽत्र कृते सदा ।

विभाषा दिक् समासे बहुव्रीहौ । १ । १ । २८ ।

दिक् समासे बहुव्रीहौ विभाषा सर्वनामता ।
तस्मादुत्तरपूर्वस्यै पक्षे याडागमेन च ।।
भवेदुत्तरपूर्वायै प्रयोगः स्याद्यथारुचि ।
ङिति सर्वत्र स्याड्याटौ कृत्वा रूपं प्रयुज्यताम् ।।

विभाषा द्वितीयातृतीयाभ्याम् । ७ । ३ । ११५ ।

द्वितीयायास्तृतीयाया ङितः स्याड् वा परस्य च ।
आपो ह्रस्वे द्वितीयस्यै द्वितीयायै पठेत् सदा ।।
एवं ङिति तृतीयस्यै तृतीयायै द्वयं भवेत् ।
तीयस्य ङित्सु संज्ञा स्यादिदं त्यक्तुं सुशक्नुयात् ।।

**इकारान्तो मतिशब्दः ।**

मतिः प्रायेण हरिवत् । स्त्रीत्वान्नत्वाभावः । मतीः ।
नात्वं न मत्या ।

ङिति ह्रस्वश्च । १ । ४ । ६ ।

नदीसंज्ञां विकल्पेन इ ई उ ऊ स्वरान्तकः ।
लभते ङिद्विभक्तौ हि स्त्रियामिति विचार्यताम् ॥
मत्यै च मतये रूपं मत्याः मतेः ङसौ ङसि ।

इदुद्भ्याम् । ७ । ३ । ११७ ।

इदुद्भ्यां च नदीसंज्ञावद्भ्यां ङेराम् विधीयते ।
ङौ यदा स्यान्नदीसंज्ञा तदा ङेराम् भवेदिह ॥
मत्यां रूपं मतौ पक्षे अच्चघेरिति सूत्रतः ।

रूपदर्शनम्—

मतिः शुभा दरिद्रस्य मतयः कृतिनां शुभाः ।
मतिं धर्मे सदा कुर्याद् मतीः शंसामि सात्विकीः ॥
मत्या शोभा कुरूपस्य मतिभिः शास्त्रचिन्तनम् ।
मत्यैऽधीते स मतये मतिभ्यः पाठनं शिशोः ॥
मत्याः मतेः परं ब्रह्म मतिभ्यः पर ईश्वरः ।
मत्याः मतेः प्रशंशास्ति मतीनां विजयः सदा ।
मत्यां मतौ भ्रमो यस्य मतिषु स महान् नहि ।
हे मते त्वं दरिद्राणामुपरि स्याः दयावती ॥

द्विवचने—

मती मती मतिभ्यां त्रिः मत्योः मत्योः स्थलद्वये ।
द्विवचनान्तरूपाणि ज्ञात्वा वाक्यं विचारयेत् ॥

निर्देशनम्—

गतिर्भक्तिर्घृतिः शक्तिर्भूतिर्नुतिः स्तुतिर्नतिः ।
प्रीतिः शुद्धीरतिर्बुद्धिर्मतिवत्पाठ्यतां सदा ॥

द्विशब्दः—

द्वे द्वे द्वाभ्यां ततो द्वाभ्यां द्वाभ्यां द्वयोः द्वयोरिति ।
स्त्रियां क्लीबे समानं स्याद्रूपमस्येति बुध्यताम् ॥

द्वौ अतिक्रान्ता या सा अतिद्विः, यस्या द्वौ पुरुषौस्तः सा । अतिद्विः सा अतिद्वी ते अतिद्वयश्च ताः स्त्रियः ।

अतिद्विं तामतिद्वी च अतिद्वीर्मतिवत् पठेत् ॥
अतिद्व्या च अतिद्विभ्यामतिद्विभिः कृतमिदम् ।
अतिद्व्ये अतिद्व्यै च ङिति सुपि द्वयं द्वयम् ॥

त्रिशब्दस्य स्त्रीलिङ्गे । अत्र विशेषकार्यम् ।

त्रिचतुरोः स्त्रियां तिसृचतसृ । ७ । २ । ९९

त्रिचतुरोः स्त्रियां तिसृ चतसृ जायते क्रमात् ।

अचिर ऋतः । ७ । २ । १००

रादेशस्तिसृचतस्रोः ऋवर्णस्याचि जायते ।
नुमचिरेति नुट् कार्यं णत्वेनामि च तिसृणाम् ॥

न तिसृचतसृ । ६ । ४ । ४

एतयोरामि दीर्घो न तस्माद्ध्रस्व उदाहृतः ।

रूपदर्शनम्—

यान्ति तिस्रः पश्य तिस्रः तिसृभिस्ताभिरुच्यते ।
तिसृभ्यः किं प्रदद्यात् तिसृभ्यः किमपि नयेत् ॥
तिसृणामत्र शक्तीनां तिसृषु सृष्टिषु स्थितिः ।
प्रियास्त्रयोऽथवा त्रीणि यस्येत्यत्र च विग्रहे ।
तिस्रादेशो न जायेत यस्मात् स्त्रीत्वं न वर्तते ॥
प्रियाः त्रयोऽथवा त्रीणि यस्याः प्रियत्रिरस्ति सा ।
मतिवद्रूपमुच्येत तिस्रादेशो भवेन्नहि ॥
स्त्रियामिति त्रिचतुरोर्विशेषणं यतः स्थितम् ।
आमि केवलमादेशः त्रेस्त्रय इति जायते ॥
गौणेऽपि च त्रयादेशो यस्मादत्र विधीयते ॥
प्रियाः तिस्रः सन्ति यस्य तिस्रादेशोऽत्र विग्रहे ।
समासाद् या विभक्तिर्हि तस्यां तिसृ विधीयते ॥
स्त्रियाः पुंवदिति सूत्रात् पुंवत् प्रियाऽत्र जायते ।
ऋदुशनसिति सूत्रादनङ्कार्यं विशेषता ॥

रूपदर्शनम्—

प्रियतिसा प्रियतिस्रौ प्रियतिस्रः पठन्ति किम् ?
प्रियतिस्रं प्रियतिस्रौ प्रियतिसॄन् न सेवताम् ॥

प्रियतिस्रा प्रियतिसृभ्यां रूपमत्र दुहितृवत् ।
प्रियतिस्रे प्रियतिसुः प्रियतिसरि सप्तमी ॥

प्रियाः तिस्रो यस्य कुलस्येति विग्रहे विकल्पेन सुविभक्तौ तिस्रादेशः। टाद्यजादि विभक्तिषु च विकल्पेन पुंवद्भावः । अस्मिन्पक्षे नपुंसकलिङ्गमस्य ।

तत्प्रियत्रिप्रियतिसृ प्रियतिसृणी ते कुले ।
प्रियतिसृणि सर्वाणि नङ्क्ष्यन्त्येव कुलानि वै ॥
प्रथमेव द्वितीयायां तृतीयातो द्वयं द्वयम् ।
प्रियतिस्रा प्रियतिसृणा प्रियतिसृभ्यामिति ॥
प्रियतिस्रे ङयि पुंसि क्लीबे स्यात् प्रियतिसृणे ।
प्रियतिस्रस्तथा प्रियतिसृणः पञ्चमीङसौ ॥
षष्ठ्यामपि प्रियतिस्रः पक्षे च प्रियतिसृणः ।
प्रियतिस्रोस्तथा पक्षे रूपं स्यात् प्रियतिसृणोः ॥
प्रियतिसृणामिति ज्ञेयमामि षष्ठ्यां विशेषतः ।
प्रियतिस्रि प्रियतिसृणि प्रियतिस्रोः प्रियतिसृणोः ॥
प्रियतिसृषु सप्तम्यां रूपं पठन्तु पाठकाः ।

ईकारान्तो नदीशब्दः—

नदी विराजते गङ्गा नद्यः सर्वाः निधेः स्त्रियः ।
नदीं वध्नाति लोकोऽयं नदीस्तारय नाविक ॥
नद्या बहूपकारोऽस्ति नदीभिः कृषिसिञ्चनम् ।
नद्यै तस्यै नमोऽस्माकं नदीभ्यः पूजनं वलिः ।
नद्याः सिञ्चति क्षेत्राणि नदीभ्यः प्राप्यते जलम् ॥
नद्यास्तीरे गृहं कार्यं नदीनां वायुसेवनम् ।
नद्यां स्नानं न वर्षायां नदीषु ग्राहसंस्थितिः ।
हे नदि पर्वतानां त्वं पुत्री देशस्य रक्षिका ।

द्विवचनरूपम्—

नद्यौ नद्यौ नदीभ्यां त्रिः नद्योर्नद्योर्द्विरुच्यताम् ।
प्रथमादौ द्विवचने रूपं ज्ञात्वा प्रयुज्यताम् ॥

निर्देशनम्—

काशी दासी मही गौरी नरी नारी सखी सती ।
जननी जानकी देवी ब्राह्मणी विन्ध्यवासिनी ॥

पृथिवी पार्वती पृथ्वी गोपी गार्गी पयस्विनी ।
दयावती सुरी वाणी नदीवत् पाठचतां पठ ॥

अत्र विशेषः—

अवीः तन्त्रीः तरीर्लक्ष्मीः धीः ह्रीः श्रीरिति सौ परे ।
विसर्गसहितं रूपं सप्तशब्दस्थले भवेत् ।
ङ्यन्तत्वाभावतश्चात्र सुलोपो न विधीयते ।

स्त्रीशब्दः । अत्र विशेषकार्यम् ।

स्त्रियाः । ३ । ४ । ७९ ।

अजादौ प्रत्यये कार्यं स्त्रीशब्दस्य इयङ् सदा ।

वाम्शसोः । ६ । ४ । ८

अम्शसोऽस्तु विभाषेयङ् स्त्रीशब्दस्य विधीयते ।
अम्शसोस्तु भवेद्रूपं स्त्रियं स्त्रीं स्त्रीः स्त्रियः पुनः ॥
आमि स्त्रीणां नुटि कृते स्त्रियां ङौ रूपमुच्यते ।

रूपसंग्रन्थनम्—

स्त्री एकैव कल्याणी स्त्रियौ स्त्रियः सुखाय न ।
स्त्रियं स्त्रीं वन्दतां लक्ष्मीं पश्येत् स्त्रियौ स्त्रियश्च स्त्रीः ॥
स्त्रिया स्त्रीभ्याञ्च स्त्रीभिश्च विवादं न समाचरेत् ।
स्त्रियै तस्यै तथा स्त्रीभ्यां स्त्रीभ्यः कुप्यन्ति तापसाः ॥
स्त्रियाः लोके पृथग्भूत्वा स्त्रीभ्यां स्त्रीभ्यः कुतः सुखम् ।
स्त्रियाः तथा स्त्रियोः स्त्रीणां सर्वत्र प्रथमं पदम् ॥
स्त्रियां तथा स्त्रियोः स्त्रीषु प्रीतिमायादयागुणाः ।
हे स्त्रि तवैव चारित्र्यं रक्षणं कुलभूषणम् ॥
नदीसंज्ञाऽत्र नित्यं स्यात् तस्माद्रूपं द्वयं न ङिति ।

श्रीशब्दः । अत्र विशेष कार्यम्

नेयङुवङस्थानावस्त्री । १ । ४ । ४ ।

इयङुवङस्थानयोरत्र नदीसंज्ञा निषिध्यते ।
ईदूतोरेव निषेधः स्त्रीशब्दस्य भवेदिह ।
तस्मात् हे श्रीः संबोधने रूपं ह्रस्वं विना भवेत् ॥

ङिति सुपि "ङिति ह्रस्वश्चेति" संज्ञा विकल्पतः ।
तस्मात् श्रियै श्रिये रूपं श्रियाः श्रियश्च पठ्यते ॥

वामि । १ । ४ । ५

स्त्र्याख्यस्य च इयङुवङस्थानिकस्य स्त्रियामिह ।
यूपरस्य नदीसंज्ञा आमि वा स्यात् स्त्रियं विना ॥
श्रीणां श्रियां श्रियि श्रियां रूपं द्वयं द्वयं ततः ।

रूपसंग्रन्थनम्—

श्रीः पत्नी विद्यते विष्णोः श्रियौ स्तः सन्ति च श्रियः ।
श्रियं श्रियौ श्रियः सर्वे नमन्ति प्रार्थयन्ति च ॥
श्रिया लोकः सुखी भाति श्रीभ्यां श्रीभिः श्रितो हरिः ।
श्रियै श्रिये नमस्कार्यं श्रीभ्यां श्रीभ्यः सदा नमः ॥
श्रियाः श्रियः पृथग्दीनः श्रीभ्यां श्रीभ्यः सुखं लभे ।
श्रियाः श्रियः कृपापूर्णा श्रियोः श्रीणां श्रियां भवेत् ॥
श्रियि श्रियां श्रियोः श्रीषु स्थिरता नावलोक्यते ।
हे श्रीः कविषु विद्वत्सु कथं न दयसे वद ॥

सखीशब्दः ।

अत्र विशेषकार्यम्—

प्रातिपदिकग्रहणे लिङ्गाधिक्यस्य च ग्रहः ।
अनङणिद्वद्भावस्य प्राप्तिरत्रापि जायते ॥
किन्तु लिङ्गविशिष्टस्य विभक्तौ ग्रहणं नहि ।
इति निषेधवाक्येन न स्यादनङ् न णिद्विधिः ॥
तस्माद्रूपं भवेदस्य नदीशब्दसमं सदा ॥

रूपदर्शनम्—

इयं सखी इमे सख्यौ सख्यस्ताः सरला मम ।
सखीं सख्यौ सखीः सर्वाः अभिनन्दन्ति च स्त्रियः ॥
सख्या सखीभ्यां सखीभिर्गमनं शोभनं शुभम् ।
अत्रानङणिद्भावश्च कार्यं नैव विधीयते ॥

धीशब्दः—

ध्यायतेः क्विप् सम्प्रसारणं दीर्घश्च ।

धीः धियौ धियः प्रथमा धियं धियौ धियस्ततः ।
धिया धीभ्याञ्च धीभिश्च तृतीयादिषु पठ्यताम् ।
अचिश्नुधातुभ्रुवाञ्च सूत्रेणाचि भवेदियङ् ।

ह्रीः ( लज्जा )

ह्रीः ह्रियौ ह्रियः प्रथमा ह्रियं ह्रियौ ह्रियस्ततः ।
ह्रिया ह्रीभ्याञ्च ह्रीभिश्च आदि रूपं विचारयेत् ।।
ह्रियै ह्रिये तथा ह्रीभ्यां ङिति रूपं द्वयं द्वयम् ।

स्त्रियमतिक्रान्तो यः सः अतिस्त्रिः—( हरिवद्रूपम् ) ।

अतिस्त्रिः शोभते नैव अतिस्त्रियौ अतिस्त्रियः ।
अतिस्त्रिमतिस्त्रियं वा पश्यामि तावतिस्त्रियौ ।।
अतिस्त्रीनतिस्त्रियश्च नाभिनन्दन्ति सज्जनाः ।
अतिस्त्रिणा अतिस्त्रिभ्यामतिस्त्रिभिः कृतो रवः ।।
अतिस्त्रयेऽतिस्त्रेश्च अतिस्त्रियोऽपि पक्षतः ।
हे अतिस्त्रे अतिस्त्रियौ हे अतिस्त्रिय आसताम् ।।

अत्र विशेषकार्यम्—

ओस्यौकारे च नित्यं स्यादम्शसोस्तु विभाषया ।
इयङ्ङादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने ।।
तस्मादेव औजसोः औटि नित्यमियङ् भवेदिह ।
अन्यत्र घिसंज्ञाप्रयुक्तकार्यं कृतमस्तीति ।।

स्त्रियमतिक्रान्तं यत्कुलमिति विग्रहे तु—

अतिस्त्रि अतिस्त्रिणी अतिस्त्रीणि । प्र० द्वि० ।
अतिस्त्रिणा अतिस्त्रिभ्याम् अतिस्त्रिभिः ।।
अतिस्त्रिणे, अतिस्त्रिये अतिस्त्रिभ्यामतिस्त्रिभ्यः ।

अतिस्त्रिणः अतिस्त्रेः अतिस्त्रिणोः अतिस्त्र्योरादि रूपं विज्ञेयम् । स्त्रियां तु प्रायेण पुंवत् । शसि अतिस्त्रीः, ३ अतिस्त्रिया ४ अतिस्त्रये, अतिस्त्रियै, ५ अतिस्त्रियाः अतिस्त्रेः, अतिस्त्रीणाम् ७ अतिस्त्रौ ।

प्रधीशब्दस्य वृत्तिकारादीनां मते लक्ष्मीवद्रूपम् ।
प्रधीः प्रध्यौ तथा प्रध्यः प्रधीम् प्रध्यौ प्रधीरिति ।।

प्रध्या तथा प्रधीभ्याञ्च प्रधीभिरादि पठ्यते ।
प्रध्यै प्रध्याश्च प्रध्याः प्रधीनां प्रध्यामिति ।।

कैयटमते पुंवदेव रूपमिति विशेषता—

प्रधीः प्रध्यौ तथा प्रध्यः प्रध्यं प्रध्यौ प्रध्य इति ।
प्रध्या प्रधीभ्यां प्रधीभिः प्रध्ये प्रध्यः प्रध्य इति ।।

प्रकृष्टा धीरिति विग्रहे लक्ष्मीवदेव रूपम् यथा—

प्रधीः प्रध्यौ च प्रध्यश्च प्रधीं प्रध्यौ प्रधीरिति ।
प्रध्या प्रधीभ्यां प्रधीभिः प्रध्ये प्रध्याः प्रध्यामिति ।।

सुष्ठु धीर्यस्याः—सुष्ठु ध्यायतीति विग्रहे वा सुधीः, श्रीवत् ।

सुधीः सुधियौ सुधियः सुधियं सुधियौ सुधियः शसि ।
सुधिया सुधीभ्यां सुधीभिः सुधियै सुधिये ङिति द्विधा ।।

पक्षान्तरे पुंवत्—

अत्र ङयि ङसौ ङसि ङौ च एकमेव रूपं भवति । न तु श्रीशब्द-वन्नदीसंज्ञाप्रयुक्तं रूपं ङिति विभक्तौ जायते इति बोध्यम् । सुष्टु धीरिति विग्रहे तु श्रीवदेव रूपं प्रयोक्तव्यम् ।

अत्र सुधियै सुधिये सुधियाः सुधियः सुधियां सुधियि-इति ।
आमि सुधीनां सुधियामिति विशेषः ।

क्रोष्ट्रीशब्दः—

स्त्रियां च । ७ । १ । ९६ ।

स्त्रीवाची क्रोष्टुशब्दो जायते च तृजन्तवत् ।

ऋन्नेभ्यो ङीप् । ४ । १ । ५

ऋदन्तेभ्यश्च नान्तेभ्यः स्त्रियां ङीप् जायते सदा ।
ङीप्प्रत्ययं विधायात्र क्रोष्ट्री रूपं यणि कृते ।।

रूपदर्शनम्—

क्रोष्ट्री क्रोष्ट्र्यौ तथा क्रोष्ट्र्यः प्रथमारूपमुच्यते ।
क्रोष्ट्रीं क्रोष्ट्र्यौ वने क्रोष्ट्रीः पश्यन्ति बालका मुदा ।।
क्रोष्ट्र्या क्रोष्ट्र्यै तथा क्रोष्ट्र्याः क्रोष्ट्र्याश्च क्रोष्ट्र्यामिति ।
अजादौ यण् हलादौ न नदीवद्रूपमिष्यते ।।
हे क्रोष्ट्रि ? रूपं संबुद्धौ नदीत्वाद् ध्रस्व इष्यते ।

**धेनुशब्दः—**

ङिति ह्रस्वश्च सूत्रेण नदीसंज्ञाऽत्र वा भवेत् ।
धेनुः पूज्यास्ति देशस्य धेनवः सन्तु मद्गृहे ॥
धेनुं दुग्ध्वा लभे दुग्धं धेनूः वनेषु चारयेत् ।
धेन्वा सहास्ति वत्सोऽस्या धेनुभिर्दीयते पयः ॥
धेनवेऽस्तु नमो नित्यं धेनुभ्यो घाससर्पयेत् ।
धेन्वाः धेनोर्यमो राजा धेनुभ्यश्च बिभेति च ।
धेन्वाः धेनोर्वधः पापं धेनूनां पालनं शुभम् ।
धेन्वां धेनौ दयाभावः धेनुषु दृश्यते जनैः ॥
हे धेनो त्वं जगन्माता दुग्धं ददासि प्राणिने ।
धेनू धेनू च धेनुभ्यां धेनुभ्यां धेनुभ्यामिति ॥
धेन्वोः धेन्वोः क्रमाज् ज्ञेयं प्रथमादौ द्वित्वबोधने ॥

**वधूशब्दः—**

वधूः शुभा कुलीनास्ति श्वश्रूः शंसतितां सदा ।
वधूं पश्य प्रसन्नास्यां श्वश्रूं पश्य दयावतीम् ॥
वध्वा मे क्रियते पाकः—श्वश्र्वा पाकः प्रशंस्यते ।
वध्वै वस्त्रं नवं दत्ते श्वश्र्वै सा रोचते यतः ॥
वध्वाः लघ्वी न मद्गेहे श्वश्र्वाः सा शुभमिच्छति ।
वध्वाः पिता समायातः—श्वश्र्वाः नन्दति मानसम् ॥
वध्वां गृहस्य भारोऽस्ति श्वश्र्वां शान्तिः प्रवर्धते ।
हे वधु त्वं गृहंरक्ष हे श्वश्रु त्वं हरिं भज ॥
रूपमत्रैकवचने केवलं दर्शितं मया ।

**भ्रूशब्दः—**

भ्रूः भ्रुवौच भ्रुवस्तासामङ्गनानां सुशोभनाः ।
भ्रुवं भ्रुवौ भ्रुवः पश्य तस्य तस्याः यथारुचि ॥
भ्रुवा भ्रूभ्यां तथा भ्रूभिः शोभते वनिता सदा ।
अजादौ स्यादुङ्ङत्र हलादौ नहि किञ्चन ॥

**सुभ्रूशब्दः—**

इयं सुभ्रूः सुभ्रवौ ते सुभ्रुवः ता वराङ्गनाः ।
सुभ्रुवं सुभ्रुवौ दृष्ट्वा सुभ्रुवः को न नन्दति ॥

सुभ्रुवा सह सुभ्रूभ्यां सुभ्रूभिः शोभते गृहम् ।
सुभ्रुवे सुभ्रवः पश्चात् सुभ्रुवः सुभ्रुवि क्रमात् ॥

खलं पुनाति या सा खलपूः—

खलपूः सा खलप्वौ ते खलप्वः ता भ्रमन्ति वै ।
पुंवदेवात्र रूपाणि संभवन्ति स्त्रियामपि ।

पुनर्भूशब्दः—

एकाजुत्तरपदे णः । ८ । ४ । १२

एकाजुत्तरपदं यस्य तादृशे च समासके ।
पूर्वपदस्थनिमित्ताच्च परस्य नस्य णो भवेत् ॥
प्रातिपदिकान्तसंज्ञकान्तस्थस्य नुमस्तथा ।
विभक्तिस्थस्य नस्यात्र णत्वमस्माद् विधीयते ॥
सा पुनर्भूः पुनर्भ्वौ ते पुनर्भ्वः प्रभवन्ति ताः ।
पुनर्भ्वं तां पुनर्भ्वौ ते पुनर्भ्वस्ताः सभाजये ॥
पुनर्भ्वा च पुनर्भ्वै स्यात् पुनर्भ्वाः पञ्चमीङसौ ।
पुनर्भ्वास्तथा पुनर्भ्वोः पुनर्भूणामिति भवेत् ॥
पुनर्भ्वां तथा पुनर्भ्वोः पुनर्भूषु च सप्तमी ।
हे पुनर्भु पुनर्भ्वौ हे हे पुनर्भ्वः याथ क्व ॥

अयं वर्षाभुः ह्रस्वान्तोऽपि वर्त्तते ।

इत्यूकारान्तशब्दाः

—:०:—

ऋकारान्तशब्दाः—

स्वसृशब्दः–भगिनीवाचकः–सावसेर्ऋन् । ऋदुशनशित्यादिनाऽनङ् । अप्तृन्तृजिति दीर्घश्चात्र विशेषकार्यम् ।

अत्र विशेषकार्यम्—

नषट् स्वस्रादिभ्यः । ४ । १ । १०

षट्संज्ञकस्वस्रादेश्च ङीप्टापौ भवतो नहि ।
स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ॥
याता मातेति शब्देषु ऋत्रेभ्योङीब् न जायते ॥

रूपसंग्रन्थनम्—

इयं स्वसा स्वसारौ ते स्वसारः कति सन्ति मे ।
स्वसारं तां स्वसारौ ते स्वसॄः वस्त्रेण नन्दयेत् ।।
स्वस्रा स्वस्रे स्वसुश्चादि रूपं भवति धातृवत् ।
केवलं शसि भिन्नत्वं क्रियते नत्वमत्र न ।।

ननान्दृशब्दः—( ननान्दा तु स्वसा पत्युः ) ।

ननान्दा च ननान्दारौ ननान्दारो मम प्रियाः ।
ननान्दारं ननान्दारौ ननान्दॄः हासयन्ति ताः ।।
ननान्द्रा च ननान्दृभ्यां ननान्दृभिरादि च ।
ननान्द्रे तथा ननान्दुः ननान्दरि च ङौ भवेत् ।।

मातृशब्दः—

इयं माता मातरौ ते मातरः सन्ति ताः स्त्रियः ।
मातरं मातरौ मातॄः प्रणमामि दिने दिने ।।
मात्रा तथा च मातृभ्यां मातृभिः पितृवत् पठेत् ।
केवलं शसि नत्वं न नान्यरूपे विशेषता ।।

यातृशब्दः—

भार्या तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।
इयं याता यातरौ ते यातरः कति सन्ति ते ।।
यातरं यातरौ यातॄः मातृवत् पठ्यते सदा ।
यात्रा यात्रे तथा यातुः यातुरिति ङसि पुनः ।।
यातरि च तथा यात्रोः यातृषु सप्तमीपदम् ।

दुहितृशब्दः—(दूरे हिता दुहिता = कन्या) ।

दुहिता च दुहितरौ दुहितरस्तु मातृवत् ।
दुहितरं दुहितरौ दुहितॄः पालयाम्यहम् ।।

रैशब्दः—

रैशब्दस्य रूपाणि पुंवदेव भवन्ति वै ।
रात्येनं रा इति ख्यातं स्त्री वा राः कथ्यते बुधैः ।
राः रायौ रायः प्रथमा रायं रायौ राय इति ।
राया राभ्याञ्च राभिश्च राये रायश्च रायि च ।।

द्योशब्दः—(आकाशवाची)

द्यौः द्यावौ द्यावः प्रथमा द्यां द्यावौ द्या इति शसि।
द्यवा द्योभ्यां तथा द्योभिः द्यवे द्योः द्योः द्यवि इति ॥

नौ ग्लौवत्।

नौः नावौ नाव इत्येवं नावं नावौ इति क्रमः ॥

इत्यजन्तस्त्रीलिङ्गप्रकरणम्।



# अथाजन्तनपुंसकलिङ्गप्रकरणम्

ज्ञानशब्दः—

ज्ञप्तिर्ज्ञानं विजानीयाद् भावे ल्युडन्तमिष्यते।
अत्र विशेषकार्यम्।

अतोऽम्। ७। १। २४

अतोऽमिति च सूत्रेण अजन्तादङ्गतः स्वमोः।
अम्विधानं भवेत् क्लीबे तस्माज् ज्ञानं फलं शुभम्॥
पूर्वरूपविधानाय अमिपूर्वोऽत्र स्मर्यते॥
एङ्ह्रस्वादिति सूत्रात् संबुद्धेर्हल्विलुप्यते।
सम्बुद्धौ तेन हे ज्ञान हे फल आदि कथ्यते॥

नपुंसकाच्च। ७। १। १९

नपुंसकाच्च सूत्रेण औङः शी जायते सदा।
अनुबन्धशकारस्य इत्संज्ञा लोप इष्यते॥
गुणे कृते द्विवचने रूपं ज्ञाने फले शुभे।

यस्येति च। ६। ४। १८४

इवर्णावर्णयोर्भस्य लोप ईकारतद्धिते।
भसंज्ञा जायते तस्माद् यस्येति च प्रवर्तते॥
औङः श्यां प्रसिषेधो लोपस्यात्र विचार्यताम्। वा.

शिसर्वनामस्थानम्। १। १। ७१

शेश्च सर्वनामस्थानसंज्ञाऽत्र जायते सदा।

नपुंसकस्य झलचः। ७। १। ७२

नपुंसके झलन्तस्य अजन्तस्य नुमागमः।
शौ च सर्वनामस्थाने सूत्रादुपधादीर्घ इति॥

तस्माज्जसि भवेद्रूपं ज्ञानानि च फलानि च ।
प्रथमायां यथारूपं द्वितीयायामपि तथा ।
शेषरूपमकारान्तक्लीबस्य रामवद् भवेत् ।

क्रमशो रूपदर्शनम्—

ज्ञानं ज्ञाने च ज्ञानानि वस्तूनां सन्तु सर्वदा ।
ज्ञानं ज्ञाने च ज्ञानानि दत्ते विद्यालये गुरुः ॥
ज्ञानेन सह ज्ञानाभ्यां ज्ञानैः संशोभते वपुः ।
ज्ञानाय पाठ्यतां ज्ञानाद् विना विप्रो न शोभते ॥
ज्ञानस्य च फलं मानः ज्ञाने सति जयो भवेत् ।
पुंलिङ्ग बालशब्दस्य तुल्यरूपाणि टादिषु ॥

फलशब्दरूपाणि—

फलं फले फलानि त्वं रूपाभ्यासं क्रमात्कुरु ।
प्रथमायां द्वितीयायां तुल्यं रूपं नपुंसके ॥
अकारान्तस्य शब्दस्य तृतीयादौ नपुंसके ।
रामवद्रूपमुच्चार्य फलेन च फलाय च ॥

निर्देशनम्—

अकारान्ताश्च ये शब्दास्तृणपत्रजलादयाः ।
तेषां रूपाणि ज्ञानस्य फलस्य सदृशानि स्युः ॥
श्रीपाशब्दः ( अत्र विशेषकार्यम् )

ह्रस्वौ नपुंसके प्रातिपदिकस्य १ । २ । ४७

ह्रस्वः स्यात्प्रातिपदिकस्य अजन्तस्य नपुंसके ।
श्रीपं श्रीपे च श्रीपाणि ज्ञानवद्रूपमुच्यते ।
श्रीपेण श्रीपाभ्याञ्च श्रीपैः कुलैः स शोभते ।
ङयि रूपं तु श्रीपाय आतो लोपोऽत्र नैव स्यात् ।
सन्निपातलक्षणं कार्यं स्वनाशे नैव तिष्ठति ।
श्रीपाभ्यामादिरूपाणि रामशब्दवदेव हि ।

कतरादि शब्दः—

अद्ड्डतरादिभ्य पञ्चभ्यः । ७ । १ । २५

डतरादि पञ्चशब्देभ्यः अद्ड्डादेशः स्वमोर्भवेत् ।

टेः । ६ । ४ । १४३

डिति परे भस्य टेर्लोपोः वाऽवसाने चर्त्वमिह ॥
कतरत् कतरद् रूपं कतरे कतराणि च ।
कतरेण कतराभ्याञ्च कतरैरादि सर्ववत् ॥

**कतमशब्दः—**

अद्डादेशः स्वमोरत्र जायते तेन कथ्यताम् ।
कतमत् कतमद्रूपं कतमे कतमानि च ।
कतमेन कतमाभ्यां कतमैरादि सर्ववत् ॥
अन्यत् अन्यद् विकल्पेन अन्ये अन्यानि च पुनः ।
द्वितीयायामपि तद्वत् तृतीयादौ च सर्ववत् ॥

**अन्यतरशब्दः—**

अन्यतरदन्यतरे अन्यतराणि रूपाणि ।
अन्यतरेणान्यतराभ्यामन्यतरैरादि सर्ववत् ॥

**इतरशब्दः—**

इतरत् इतरद् रूपम् इतरे इतराणि च ।
इतरेण इतराभ्यामितरैरादि सर्ववत् ॥

**अन्यतमशब्दः—**

अन्यतमदन्यतमे अन्यतमानि रूपाणि ।
आदेशः स्याददड एतेषु कतरादिषु पञ्चसु ॥

**एकतरशब्दः—**

एकतरात्प्रतिषेधः अद्डादेशोऽत्र नेष्यते । वा०
एकतरमिति रूपं तस्मादत्र प्रदर्शितम् ॥

**अजरशब्दः—**

अविद्यमाना जरा यस्य कुलस्य अजरं हि तत् ।
गोस्त्रियोरुपसर्जनस्य सूत्रेण ह्रस्व इष्यते ॥
अजरम् अजरे पश्चादजराणि जसि भवेत् ।
अजादौ जरसादेसाद् अजरसी अजरांसि च ॥

सान्तमहतः संयोगस्य । ६ । १ । १०

सान्तसंयोगशब्दस्य महतश्चात्र यो हि नः ।
तस्योपधाया दीर्घेण अजरांसि च जश्शसोः ॥
अजरसश्च अजरम् अजरेऽजरसी पुनः ।
अजरसाऽजराभ्याञ्च आदि रूपं पुंलिङ्गवत् ॥

हृदयशब्दः—

हृदयं हृदये रूपं हृदयानि जसि भवेत् ।
हृदयं हृदये पश्चाद् हृन्दि च हृदयानि शसि ॥
हृदा हृदयेन हृद्भ्यां हृदयाभ्यामिति क्रमात् ।
रूपं द्वयं द्वयं वाच्यं शसादावचि च हलि ॥

उदकशब्दः—

उदकं शीतलं कूपे उदके उदकानि च ।
उदकं देहि उदके उदानि उदकानि मे ॥
उद्ना स्यादुदकेनापि उद्भ्यामुदकाभ्यामिति ।
उद्भिश्च उदकैस्तृप्तिर्जायते प्राणिनामिह ॥
उदकस्य उदादेशः शसादिषु विभक्तिषु ॥

आसनशब्दः—

आसनं सुन्दरं तस्य आसने आसनानि च ।
आसनमासने पश्चाद् आसानि आसनानि च ॥
आस्ना सहाऽसनेन च आसभ्यामासनाभ्यामिति ।
द्वे द्वे रूपे शसादौ स्तः सर्वत्राचि हलि पुनः ॥

मासशब्दः—

मासं मासे च मासानि प्रथमारूपमुच्यते ।
मासं मासे मांसि पक्षे मासानि शसि च द्वयम् ॥
मास्ना मासेन मान्भ्याञ्च मान्भिरादिततः परम् ।
मास्ने मासाय च द्वे द्वे रूपे स्यातां शसादिषु ॥

वारिशब्दः—(जलम्)

इकारान्तनपुंसकशब्दे विशेषकार्यम्—

स्वमोर्नपुंसकात् । ७ । १ । २३

नपुंसकात् स्वमोर्लुक् स्यादिगन्तात् तेन वारि दधि ।

इकोऽचि विभक्तौ । ७ । १ । ७३

इगन्तक्लीबशब्दस्य नुमागमो भवेदचि ।
वारिणी स्याद् द्विवचने वारीणि शौ च दीर्घतः ।
हे वारे वारि संबुद्धौ न लुमताङ्गस्य वा भवेत् ॥
तस्माद् गुणो विकल्पेन संबुद्धौ ह्रस्वस्य इह ।
वारि च वारिणी पश्चाद् वारीणि पुनरिष्यते ॥

वृद्ध्यौत्त्वतृज्वद्भावगुणेभ्यो नुम्पूर्वविप्रतिषेधेन (वा०)

घेर्ङितीति गुणं कार्यं बाधित्वा वारिणेऽत्र नुम् ।
आङो ना वारिणा तेन वारिणे स्यान्नुमागमात् ॥
वारीणामिति नुट् दीर्घात् ङौ वारिणि नुमागमात् ।
हलादौ हरिवद्रूपं पठनीयं विचार्य च ॥

क्रमशो रूपदर्शनम्—

वारि वारिणी वारीणि प्रथमारूपमुच्यते ।
वारि वारिणी वारीणि द्वितीयायामपि तथा ॥
वारिणा सह वारिभ्यां वारिभिः स्नानमाचरेत् ।
वारिणे खलु वारिभ्यां वारिभ्यः कूपसेति सा ॥
वारिणः वारिभ्यामेवं वारिभ्यः शान्तिरागता ।
वारिणः वारिणोस्तत्र वारीणां वर्षणं बहु ॥
वारिणि वारिणोरेवं वारिषु शीतलो गुणः ।

अनादिशब्दः—न आदिर्यस्य तदनादि ( ब्रह्म ) । अत्र विशेष कार्यम्—

तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ।७।१।७४

तृतीयादिषु भाषितपुंस्कं पुंवद् विकल्पतः ।
गालवस्य मते टादावचि रूपं द्वयं द्वयम् ॥

रूपसंग्रन्थनम्—

अनादि ब्रह्म विख्यातम् अनादिनी च ते कुले ।
अनादीनि समस्तानि भूतानि कस्यचिन्मते ॥

अनाद्यनादिनी तानि अनादीनि पुनः पठेत् ।
अनादिना अनादिभ्याम् अनादिभिः प्रसीदतु ॥
अनादये भवेत् पुंसि अनादिने नपुंसके ।
चतुर्थ्यां स्यादनादिभ्यामनादिभ्यो नमः सदा ॥
पुंवद्भावेन द्वे रूपे ङेङसिङस्सुस्वरादिषु ।

**दधि–अत्रविशेषकार्यम्**

अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः । ७ । १ । ७५

अस्थि दध्नोश्च सक्थ्यक्ष्णोरनङ् टादावचि परे ।
दधि तद् दधिनी ते च दधीनि तानि च वदेत् ।
दधि दधिनी दधीनि प्रथमावत् पुनर्वदेत् ।
दध्ना सिञ्चति भोज्यानि दधिभ्यां दधिभिर्बहु ॥
दध्ने दध्नः तथा दध्नः दध्नोर्दध्नामिति पुनः ।
दध्नि दधनि डौ रूपं दध्नोः दधिषु सप्तमी ॥
अनङ्कार्यं तृतीयादावचि सर्वत्र पाठकैः ।

**अतिदधि–(कुलम्)**

अतिदध्यतिदधिनी अतिदधीनि तानि च ।
अतिदधिगृहं गच्छ गृहेऽतिदधिनी व्रज ॥
गृहाण्यतिदधीनि त्वं गत्वा प्राप्नोषि च दधि ।
अतिदध्नाऽतिदधिभ्यामतिदधिभिरादि च ॥
अजादौ स्यादनङ्कार्यमल्लोपोऽनश्च जायते ।

**मधुशब्दः—**

मधु मिष्टं च मधुनी मधूनि मधुराणि च ।
मधु करोति मधुनी मधूनि मधुमक्षिका ॥
मधुना च मधुभ्याञ्च मधुभिर्लेढि औषधम् ।
मधुने मधुनश्चादि नुमागमेन सिद्ध्यति ॥
हे मधो मधु संबोध्य मधुनि यततां सदा ।

**पीलु—फलविशेषः । राजस्थानमरुभागे विशेषतयोपलभ्यते ।**

फलं पीलु मरुत्प्रान्ते पीलुनी च पीलूनि च ।
खादन्ति पीलु पीलुनी पीलूनि मरुभूमिजाः ॥

पीलुना पीलुने रूपं पीलुनः पीलुनः पुनः ।
पीलुनि पीलुनोरेवं पीलुषु सप्तमी बहौ ॥
हे पीलो पीलु संबुद्धौ हलादौ न विशेषता ।
पीलुभ्यां पीलुभिरादि रूपं तु सरलं भवेत् ॥

सानु—( शिखरम् )

सानु सानुनी सानूनि प्रथमारूपमुच्यते ।
सानु सानुनी सानूनि स्नूनि आरोढुमिच्छति ॥
स्नुना च सानुना सार्धं सानुभ्यां सानुभिर्गिरिः ।
सानुनेऽथ स्नुने रूपं द्वयं द्वयमजादिषु ॥
मांस पृतना सानूनामिति स्नु स्याच्छसाद्यचि ।

अम्बु—( जलम् )

अम्बु अम्बुनी अम्बूनि प्रथमारूपदर्शनम् ।
अम्बु अम्बुनी अम्बूनि पीत्वा सुखी भवाम्यहम् ॥
अम्बुना खलु अम्बुभ्याम् अम्बुभिर्नाश्यते तृषा ।
हे अम्बो अम्बु संबोध्य अम्बुनि यत्नवान् भव ॥

प्रियक्रोष्टु—( कुलमिति विज्ञेयम् )

प्रियक्रोष्टु कुलं तस्य प्रियक्रोष्टुनी ते कुले ।
प्रियक्रोष्टूनि जानीहि वनस्थानि गृहाणि वै ॥
प्रथमारूपतुल्यानि द्वितीयायामपि सदा ।
प्रियक्रोष्ट्रा तथा पक्षे कथ्यतां प्रियक्रोष्टुना ॥
प्रियक्रोष्ट्रे दया कार्या न कुप्येत् प्रियक्रोष्टवे ।
पुंवद्भावेन रूपं स्याद् द्वयं द्वयं शसाद्यचि ॥

धातृशब्दः—( फल विशेषवस्तुप्रसिद्धमेतत् )

धातृ फलं सदा पथ्यं धातृणी धातॄणि च ।
धातृ धातृणी धातॄणि भक्षयन्ति सदा जनाः ॥
धात्रा उद्यानशोभाऽस्ति धातृभ्यां धातृभिस्तथा ।
स्पृहयन्ति न के धात्रे धातृभ्यां धातृभ्य इह ॥
पुंवद्भावेन वै टादावचि रूपं द्वयं द्वयम् ।
हलि सुपि न भेदोऽस्ति सदैकं रूपमुच्यते ॥

ज्ञातृ—

इदं ज्ञातृ ज्ञातृणी ते ज्ञातॄणि च मनांसि वः ।
ज्ञातृ ज्ञातृणी ज्ञातॄणि मनांसि त्वं वशे कुरु ॥
मनसा ज्ञातृणा ज्ञात्रा ज्ञातृभ्यां ज्ञातृभिः पुनः ।
ज्ञात्रे नमो ज्ञातृणे च हे ज्ञातृ कुत्र गच्छसि ॥
पुंवद्भावस्तृतीयातस्तस्माद्रूपं द्वयं द्वयम् ।

एच इग्घ्रस्वादेशे । १ । १ । ४८

आदिश्यमानह्रस्वेषु एच इगेव जायते ।

प्ररै-ऐकारान्तः । प्रद्यो-ओकारान्तः । सुनौ-औकारान्तः । एषां ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वे कृते एचः इगेवेति नियमोऽत्र भवति । तेन क्रमशः—प्ररि, प्रद्यु, सुनु स्वरूपं भवति तद्रूपाणि च सरलान्येव जायन्ते ।

अत्र निर्देशनम्

सुनु प्रधि सुधि प्रधु प्ररि सुनु नपुंसके ।
मधुवद्रूपमेषां स्यात् पुंवद्भावस्तु टादिषु ॥
तस्माट्टादिविभक्तौ च रूपं द्वयं द्वयं भवेत् ।
अन्यद्रूपञ्च सरलं पठनीयं विचार्य वै ॥

इत्यजन्तनपुंसकलिङ्गप्रकरणम्



# अथ हलन्तपुंलिङ्गप्रकरणम्

अजन्तपुंलिङ्गगणागतस्य
शब्दस्य रूपाणि प्रदर्शितानि ।
शब्दा हलन्ता इह पुंसि येऽत्र
ते साधनीयाः खलु पाठकैश्च ॥

होढः । ८ । २ । ३१

लेढीति विग्रहे पूर्वं लिह्धातोः क्विप् विधीयते ।
"होढः" सूत्रेण जायेत पदान्ते झलि हस्य ढः ॥
तस्य जश्त्वेन चर्त्वेन लिट् रूपं साध्यते क्रमात् ।
लिहौ लिहः सर्वमन्यद् विभक्त्या सह मेलनात् ॥
लिहं लिहौ लिहः पश्चात् लिहा लिड्भ्यामिति क्रमः ।
सप्तम्यां बहुवचने धुटा लिट्त्सु च लिट्सु च ॥

साधनक्रमः – लेढि इति विगृह्य लिह् धातोः क्विप् प्रत्ययः, प्रातिपदिकसंज्ञाकार्यं लिह् सु स् ढत्वं सुलोपः जश्त्वं चर्त्वं लिट् रूपम् । लिह् + औ लिहौ, लिह् जस् अस् रुत्वं विसर्गः लिहः—इत्यादिज्ञेयम् ।

दुहशब्दः—

दादेर्धातोर्घः । ८ । २ । ३२

दादेर्धातोर्हकारस्य घः पदान्ते झलि परे ।

एकाचो बशो भष् झषन्तस्य स्ध्वोः । ८ । २ । ३७

स्ध्वोः परतः पदान्ते च धातोर्बशस्तु भष् भवेत् ।
उपदेशे दादिधातोर्हस्य घः स्यात् पदान्तके ।
भष्भावेन दस्य धत्वं जश्त्वचर्त्वेन मधुक् पद ॥

धुग्भ्यां धुग्भिर्व्यञ्जनादौ सप्तम्यां धुक्षु जायते ।
दुहौ दुहः सर्वमन्यद् विभक्त्या संगमेन च ॥

साधनक्रमः— दोग्धि इति विगृह्य दुह् धातोः क्विप्प्रत्ययस्तस्य सर्वापहारलोपे कृते स्वादिविभक्तिः, हस्य धत्वेन भष्भावे जश्त्वे चर्त्वे च कृते धुक् पदम् ।

वा द्रुहमुहष्णुहष्णिहाम् । ८ । २ । ३३

द्रुह-मुह-ष्णुह ष्णिहां पदान्ते झलि हस्य घः ।
विकल्पेनैव जायेत ध्रुक् ध्रुग् ध्रुट् ध्रुड् द्रुहौ द्रुहः ॥

अत्र—

द्रुह-मुह-ष्णुह-ष्णिहामिति सूत्रं प्रवर्तते ।
द्रुहधातोर्विकल्पेन हस्य ढत्वं धत्वमपि ॥
ध्रुट् ध्रुक् ध्रुड्भ्यां तथा ध्रुग्भ्यां पदान्ते झलपरे द्वयम् ।
द्रुहौ द्रुहः द्रुहं रूपमजादौ सरलं भवेत् ।
सप्तम्यन्ते ध्रुट्सु ध्रुट्त्सु ध्रुक्षु रूपत्रयं वदेत् ॥

साधनक्रमः—द्रोग्धि इति विगृह्य द्रुहधातोः क्विप्प्रत्ययस्तस्य सर्वापहारलोपे प्रातिपदिकसंज्ञादिकार्ये सति हस्य विकल्पेन ढत्वे ध्रुट् ध्रुड् पक्षे ध्रुक् ध्रुग् ततोऽजादौ द्रुहौ द्रुहःद्रुहमित्यादि; हलादौ ध्रुड्भ्यां ध्रुग्भ्यामिति ।

एवमेव मुह्यतीति मुट् मुक् मूर्खो जनः कथ्यते । रूपञ्च मुट् मुड् मुक् मुग् मुहौ मुहः मुहं मुहौ मुहः मुहा मुड्भ्यां मुग्भ्यामित्यादि ज्ञेयम् ।

स्नुह् धातोः क्विप्प्रत्ययः, ततो हस्य ढत्वधत्वादिकार्येण स्नुट् स्नुक् स्निह्यतीति स्निट् स्निक् । स्निह धातुः स्नेहार्थकस्तस्मात् क्विप्-प्रत्ययः स्निक्षु स्निट्त्सु पूर्ववदेव ज्ञेयम् ।

विश्ववाह-भगवान् विश्वंवहतीति विग्रहे क्विप्प्रत्ययो ज्ञेयः ।

इग्यणः सम्प्रसारणम् । १ । १ । ४५

यणः स्थाने जायमान इक् सम्प्रसारणं भवेत् ।

वाह ऊठ् । ६ । ४ । १३३

भस्य वाहः सम्प्रसारणभाव्यूठ् च जायतेऽच्परे ।

सम्प्रसारणाच्च । ७ । १ । १०८

सम्प्रसारणादचि परे पूर्वरूपं ततः परम् ।
विश्वं वहति यो नित्यं विश्ववाट् स निगद्यते ॥
पदान्ते झल्परे ढत्वं विश्ववाड्भ्यां प्रयुज्यते ।
शसादावचि वाहस्तु सम्प्रसारणमूठ् भवेत् ॥
वृद्धिं कृत्वा तु विश्वौहः विश्वौहा आदि जायते ।
सप्तम्यां सुपि धुट् कार्यं विश्ववाट्त्सु प्रयुज्यते ॥

चतुरनडुहोरामुदात्तः । ७ । १ । ९८

चतुरनडुहोराम् स्यात् स्वादिपञ्चविभक्तिके ।

सावनडुहः । ७ । १ । ८२

सौ परेऽनडुहो नुम् स्यादनड्वानिति साध्यते ।

अम् संबुद्धौ । ७ । १ । ९९

अम्संबुद्धावनडुहः हे अनड्वन् प्रयुज्यते ॥

वसुस्रंसुध्वंस्वनडुहां दः । ८ । २ । ७२

सान्तवस्वन्तशब्दस्य स्रंसुध्वंसोरनडुहः ।
दः पदान्ते विधीयेत अनडुद्भ्यामिति भवेत् ॥

अनः शकटं वहतीति विगृह्य "अनसि वहेः क्विप्" अनसोडश्च अहडुह् शब्दः सिद्धयति । अनडुह वृषभो भवति ।

रूपसंग्रन्थनम्—

आम्नुमौ अनडुहः अनड्वान् यणि च कृते ।
अनड्वाहौ अनड्वाहः हे अनड्वन् न मां जहि ॥
भ्यांभिसादौ तु दत्वेन अनडुद्भ्यामादि कथ्यते ।
वसुस्रंसुध्वंसुसूत्रं स्मर्यतामस्य साधने ॥

साधनक्रमः—अनडुह् स् आम् अनडुआह स् यण् नुम् न् अनड्वान् ह स् सुलोपः अनड्वान्ह् संयोगान्तलोपोहस्यअनड्वान् ।

सहेः साडः सः । ८ । ३ । ५६

सहेः साडः सस्य षत्वं तुराषाडिति जायते ।
तुराषाड्भ्यां तुराषाड्भिरादि रूपं प्रसिद्धयति ॥

तुरासाह—( इन्द्रः )

सहेः साडः इति सूत्रात् पदान्ते ढत्व षत्वतः ।
तुराषाट् रूपमाद्यं स्यात् तुरासाहौ च तत्परम् ॥
तुरासाहः तुरासाहं तुरासाहाविति क्रमात् ।
अजादौ नहि ढत्वं स्यात् हलादावेव केवलम् ॥
तुराषाड्भ्यां तुराषाड्भिः तुराषाट्सु विशेषता ।

साधनक्रमः—तुरासाह् स् तुरासाढ् स् तुराषाट् तुरासाहौ तुरासाहः प्रथमा० तुरासाहं तुरासाहौ तुरासाहः द्वि० तुरासाहा तुराषाड्भ्यामादि ।

सुदिव्—

दिव औत् ७ । १ । ८४

दिव औदिति सूत्रेण औरादेशस्तु सौ परे ।

दिव उत् । ६ । १ । १३१

दिवोऽन्ते स्यादुदादेशो भ्यामादौ च पदान्तके ।
सुद्यौः रूपं यणि कृते सुद्युभ्यां दिव उत्कृते ॥
प्रथमा सौ परे सुद्यौः सुदिवौ सुदिवस्ततः ।
सुदिवं सुदिवौ पश्चात् सुदिवः सुदिवादि च ॥
सुद्युभ्यां सुद्युभिरादि हलादौ दिव उद्भवेत् ।
हे सुद्यौः सुदिवौ आदि संबोधनपदं भवेत् ॥

चतुर्=संख्यावाची बहुवचनान्त एव ।

षट्चतुर्भ्यश्च । ७ । १ । ५५

षट् संज्ञकाच्च चतुरः परस्यामो नुडागमः ।
णत्वं द्वित्वं ततो रूपं चतुर्णामिति साध्यते ।

रोः सुपि । ८ । ३ । १६

सुपि परे तु रोरेव विसर्गो रस्य जायते ।

रोः सुपीति नियमेन विसर्गो न चतुर्षु स्यात् ।

शरोऽचि । ८ । ४ । ४९

अचि परे शरो द्वित्वं चतुर्षु तेन जायते ।

**रूपदर्शनम्—**

चत्वारः सन्ति ते वेदाः चतुरः के पठन्ति वै ।
चतुर्भिः सह स्थास्यामि चतुर्भ्यः सादरं नमः ।
चतुर्भ्यो न पृथक् स्थेयं चतुर्णां मन्यतां वचः ।
चतुर्षु मम विश्वासः हे चत्वारः प्रयात न ।।

**साधनक्रमः**—चतुर् जस् अस् आम् आ यण् रुत्वं विसर्गश्च चत्वार इति । चतुर् आम् नुट्-नस्य णत्वं चतुर्णाम् ।

प्रियाश्चत्वारो यस्य स प्रियचत्वाः—

प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः, प्रियचत्वारम्, प्रियचत्वारौ, प्रियचतुरः, प्रियचतुरा, प्रियचतुर्भ्यामित्यादि सरलं रूपमुच्यते ।

गौणत्वान्नहि नुट् कार्यं प्रियचतुरामिति पदे ।
परमचतुर्णामत्र प्रधानत्वाच्च नुड् भवेत् ।।

**कमल्शब्दः**—कमलं कमलां वा आचक्षाणः कमल् ।

प्रथमायां कमल् रूपं कमलौ कमलः पुनः ।
कमलं कमलौ किं वा कमलः संशयन्ति ते ।।
कमला च कमल्भ्याञ्च कमल्भिः क्रियते सुखम् ।
कमल्षु सप्तमीरूपं षत्वमत्र प्रवर्तते ।।

**प्रशाम्शब्दः**—प्रशाम्यतीति विग्रहः । शम् उपशमे इति क्विप् अनुनासिकस्य क्विब्झलादेरिति दीर्घः ।

मोनो धातोः । ८ । २ । ६४

मोनो धातोरिति सूत्राद् नत्वं हलादिप्रत्यये ।
अजादौ नहि नत्वं स्यात् प्रशान् सर्वत्र शोभते ।।
आगच्छतः प्रशामौ द्वौ प्रशामः पूज्यतां गताः ।
प्रशामं तं प्रशामौ तौ प्रशामस्तान् नमन्ति ते ।।

प्रशामा च प्रशान्भ्याञ्च प्रशान्भिः सह गच्छतु ।
सप्तम्यां बहुवचने प्रशान्त्सु रूपमुच्यते ॥

**किम्शब्दः—प्रश्नार्थकः (सर्वनामशब्दः )**

किमः कः । ७ । २ । १०३

**कायतेश्चडिमिं कृत्वा किम् सर्वनाम सिद्धयति ।**
**किमः कः स्याद्विभक्तौ च कः कौ के आदि साध्यते ॥**

**कं कौ कान् केन काभ्यां कैः कस्मै आदि सर्ववत् ।**
**संज्ञा स्यात् सर्वनामात्र स्मै स्मात् स्मिन्नेत्वमादिकम् ॥**

**इदम्शब्दः ।**

इदमो मः । ७ । २ । १०८

**इदमो मस्य म एव सावत्वं न त्यदादितः ।**

इदोऽय् पुंसि । ७ । २ । १११ ।

**इदोऽय् पुंसि कर्तव्यः सोर्लोपेन भवेदयम् ।**

दश्च । ७ । २ । १०९

**दश्च सूत्रेण इदमो दस्य मः स्याद्विभक्तिषु ।**
**इमौ इमे इममादि रूपं सिद्धयति ज्ञायताम् ॥**

अनाप्यकः । ७ । २ । ११२

**अनाप्यकस्तु सूत्रेण टायामोसि च प्रत्यये ।**
**ककाररहितस्यैव अन्भवेदिदमः इदः ॥**
**अनेन अनयोः रूपं तस्मादेवेह जायते ।**

हलि लोपः । ७ । २ । ११३

**हलि लोपोऽककारस्य इदम इद उच्यते ।**
**आभ्यां रूपं ततः सिद्धयेत् दीर्घस्तु सुपि चेति वै ॥**
**आभ्यामत्र अकारस्य अदन्तत्वं विधीयते ।**

आद्यन्तवदेकस्मिन् । १ । १ । २१

**आद्यन्तवदेकस्मिन् भवतीति विचार्यताम् ।**

नेदमदसोरकोः । ७ । १ । ११

नेदमदसोरकोः सूत्रात् एभिरत्र न ऐस् भवेत् ।
अककारस्य ऐस् न स्यादिदमश्चादसो भिसः ॥
ककारस्यात्र योगेन अयकमिति सिद्धयति ।

क्रमशो रूपदर्शनम्—

अयम् इमौ इमे प्रथमा इमम् इमौ इमानिति ।
अनेन आभ्याम् एभिश्च अस्मै आभ्याम् एभ्य इति ॥
अस्मात् आभ्याम् एभ्यश्च अस्य अनयोः एषाम् ।
अस्मिन् च अनयोः एषु रूपाणां पुंसि पाठनम् ॥

इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ । २ । ४ । ३२

अन्वादेशे च विषये इदमोऽशनुदात्तकः ।
तृतीयादावश्विधानं साकच्कार्थमिदं कृतम् ॥

द्वितीयाटौस्स्वेनः । २ । ४ । ३४

द्वितीयायां तथा टौसोः परतः इदमेतदोः ।
अनादेशो विधीयेत अन्वादेशे विशेषतः ॥
किञ्चित्कार्यं विधातुं यः प्रवृत्तोऽस्त्यत्र त्तं यदि ।
कार्यान्तरे विनियुङ्क्ते अन्वादेशस्तु स भवेत् ॥

रूपसंदर्शनम्—

एनमेनौ तथा एनान् एनेन एनयोरिति ।
अन्वादेशस्य भिन्नार्थे इममेतं प्रयुज्यताम् ॥

सुगुण्शब्दः—

गणयतेः विचं कृत्वा सुगण् सः सुगणौ च तौ ।
सुगणस्ते जनाः सन्ति सुगणं सुगणौ वदेत् ॥
सुगणो नमन् च सुगणा सुगण्भ्यां सह गच्छति ।
क्विप्प्रत्यये कृते रूपं सुगाण् स्याद् दीर्घकार्यतः ॥
तौ सुगाणौ सुगाणस्ते सुगाणमादि पाठयेत् ॥

**राजन्शब्दः—**

राजते इति स राजा राजः कनि कृते भवेत् ।
प्रथममुपधादीर्घः पश्चाद् हल्ङ्यादिलोपनम् ॥
ततो नलोपतो राजा प्रथमं रूपमुच्यताम् ।
उपधादीर्घमात्रेण राजानावादि साध्यते ॥

न ङिसम्बुद्धयोः । ८ । २ । ८ ।

नस्य लोपो न संबुद्धौ ङौ विभक्तौ च क्रियते ।
हे राजन् पाहि प्रकृतिं परमेव्योमन् च छन्दसि ॥
अल्लोपोऽनः शसाद्यक्षु राज्ञश्च राज्ञि राजनि ।
भ्यांभिसादौ नलोपः स्याद्-राजभ्यां राजभिरिति ॥

**क्रमशो रूपदर्शनम्—**

स राजा तौ च राजानौ राजानः प्रथमापदम् ।
राजानं तौ च राजानौ राज्ञः पश्यन्ति पार्षदाः ॥
राज्ञा सह च राजभ्यां राजभिः सेवकाः स्थिताः ।
राज्ञे करान् प्रयच्छन्ति राजभ्यां राजभ्य इति ॥

नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति । ८ । २ । २

नलोपोऽसिद्ध इष्येत सुप्यजादिविधौ कृति ।
राजभ्यां राजभिरत्र तस्माद्दीर्घादिकं नहि ॥
राज्ञामश्वास्तु राजाश्वाः समासो यदि जायते ।
नस्य लोपो भवत्येव नान्तस्य पूर्ववर्तिनः ॥

**गच्छत् ( शतृप्रत्ययान्तः )**

गच्छन् पठति बालोऽयं गच्छन्तौ गायतश्च तौ ।
गच्छन्तः सत्पथे केऽपि नावसीदन्ति कर्हिचित् ॥
गच्छन्तं पश्य तं बालं गच्छन्तौ तौ वदाम्यहम् ।
गच्छतः सत्पथे बालान् दृष्ट्वा पिता प्रसीदति ॥
गच्छता सह गच्छद्भ्यां गच्छद्भिः कलहो नहि ।
गच्छते कुरु गच्छद्भ्यां गच्छद्भ्यः प्रीतिदर्शनम् ॥
गच्छतस्तत्र गच्छद्भ्यां गच्छद्भ्यः स निलीयते ।
गच्छतः गच्छतोः काशीं गच्छतां धर्मवर्धनम् ॥
गच्छति गच्छतोर्देशं गच्छत्सु शीघ्रताऽधिका ।
हे गच्छन् त्वं कदा भूय आगमिष्यसि तद्वद ॥

प्रतिदिव् शब्दः—प्रति दीव्यतीति विग्रहे "कनिन् युवृषि लक्षि राजिधन्वि विद्युत्प्रतिदिवः" इति कन् प्रत्ययो भवति। कनि ( अन् ) तिष्ठति।

राजा इव प्रतिदिवा रूपं प्रायस्तु जायते।

हलि च। ८। २। ७७

रेफवान्तस्य च धातोरुपधाया इको हलि।
दीर्घो भवति तस्माच्च प्रतिदीव्नः शसि भवेत्॥

रूपक्रमः—प्रतिदिवा, प्रतिदिवानौ प्रतिदिवानः प्र०, प्रतिदिवानं प्रतिदिवानौ प्रतिदीव्नः, प्रतिदीव्ना प्रतिदिवभ्यां प्रतिदिवभिः, प्रतिदीव्ने प्रतिदीव्नः प्रतिदीव्नः, प्रतिदीव्नि प्रतिदिवनि प्रतिदीव्नोः प्रतिदिवसु।

यज्वन् ( यज्ञकार्यकर्ता )। अत्र विशेषकार्यम्—

न संयोगाद्वमन्तात्। ६। ४। १३७

संयोगाद् वै वमन्ताच्च परस्यानोऽकारस्य च।
लोपो न जायते तस्माद् यज्वनः ब्रह्मणः शसि॥

रूपसंग्रन्थनम्—

यज्वा सः यज्वानौ तौ यज्वानः श्रुतिपण्डिताः।
यज्वानं किल यज्वानौ यज्वनः पूजयाम्यहम्॥
शसादावचि सर्वत्र नाल्लोपोऽनः प्रवर्तते।
हलादौ नस्य लोपेन यज्वभ्यामादि साध्यताम्॥

ब्रह्मन् शब्दः—( विप्रः धाता वा )

ब्रह्मा स्यात् प्रथमं रूपं ब्रह्माणौ ब्रह्माण इति।
ब्रह्माणं नौमि ब्रह्माणौ ब्रह्मणः प्रणमाम्यहम्॥
शसादावचि सर्वत्र नाल्लोपो यज्वब्रह्मणोः।
हलादौ प्रत्यये नस्य लोपेन रूपमुच्यते॥
ब्रह्मभ्यां ब्रह्मभिरादि राजभ्यामितिवत् सदा।

वृत्रहन् शब्दः—वृत्रं हतवानिति विग्रहः। वृत्रहा इन्द्रः। अत्र विशेषकार्यम्—

इन्हन्पूषार्यम्णां शौ। ६। ४। १२

इन्हनाद्युपधादीर्घः शावेव नान्यप्रत्यये।
नियमः क्रियते किन्तु सौ च सूत्रं प्रवर्तते॥

सौ च। ६। ४। १३

असंबुद्धौ सुविभक्तौ इन्नादेरुपधाक्षरे।
दीर्घो भवति तेनात्र वृत्रहा रूपमुच्यते॥
एकाजुत्तरपदे नस्य णत्वं वृत्रहणौ इति।
वृत्रहणौ द्वितीयायाः द्विवचने प्रयुज्यते॥

हो हन्तेर्ञ्णिन्नेषु। ७। ३। ५४

हन्तेर्हस्य च कुत्वं स्यात् ञ्णिन्नेषु परेषु च।
वृत्रघ्नश्च वृत्रघ्नादि रूपं साधयतां क्रमात्॥

रूपक्रमः—वृत्रहा वृत्रहणौ वृत्रहणः प्र०, वृत्रहणं वृत्रहणौ वत्रघ्नः द्वि०, वृतघ्ना वृत्रहभ्यां वृत्रहभिरादि विचार्य पठ्यताम्

हन्तेः। ८। ४। २२

हन्तेः सूत्रेण कर्तव्यमुपसर्गस्थनिमित्ततः।
परस्य नस्य णत्वं वै प्रहण्यादिति साध्यते॥

अत्पूर्वस्य। ८। ४। २२

अत्पूर्वस्यैव हन्धातोर्नस्य णत्वं विधीयते।
प्रघ्नन्ति तं प्रयोगेऽत्र तस्मान्न णत्वमिष्यते॥

पूषन्—सूर्यः। पूषा पूषाणौ पूषाणः प्र०, पूषाणं पूषाणौ पूष्णः द्वि०, पूष्णा पूषभ्यां पूषभिरादि रूपं ज्ञेयम्।

अर्यमन् शब्दः। अर्यमा अर्यमाणौ अर्यमाणः प्र०, अर्यमाणं अर्यमाणौ अर्यम्णः द्वि०, अर्यम्णा अर्यमभ्याम् अर्यमभिरादि रूपम्।

अनिनस्मन् ग्रहणान्यर्थवताऽनर्थकेन च तदन्तविधिं प्रयोजयन्तीति वचनात्। अर्यम्णि अर्यमणि, पूष्णि पूषणि इति।

मघवन् शब्दः—इन्द्रवाची । मह्यते = पूज्यते जनैरिति विग्रहः ।

मघवा बहुलम् । ६ । ४ । १२८

मघवा बहुलं सूत्रात् तृविधानं विकल्पतः ।
नकारस्य तृविधाने मघवत् जायते ततः ॥

उगिदचां सर्वनामस्थानेऽधातोः । ७ । १ । ७०

उगिदचां सर्वनामस्थानेऽधातोर्नुमागमः ।
उपधादीर्घतो रूपं मघवानिति सिद्धयति ॥
मघवन्तौ मघवन्तः भवद्वद्रूपमुच्यते ।
तृत्वाभावे तु मघवा मघवानाविति क्रमः ॥

श्वयुवमघोनामतद्धिते । ६ । ४ । १३३

श्वयुवमघोनामेषामन्नन्तानां भसंज्ञया ।
अतद्धितपरे तेषां वस उः सम्प्रसारणम् ॥
ततः सम्प्रसारणाच्च पूर्वरूपं ततो गुणः ।
मघोनः शसि रूपं वै साध्यते क्रमशः सदा ॥

रूपसन्दर्शनम्—तृत्वपक्षे मघवान् मघवन्तौ मघवन्तः प्र०, मघवन्तं मघवन्तौ मघवतः, मघवता मघवद्भ्यां मघवद्भिः, मघवते मघवद्भ्यामादि ज्ञेयम् ।

तृत्वाभावे—मघवा मघवानौ मघवानः । मघवानं मघवानौ मघोनः द्वि० । मघोना मघवभ्यां मघवभिः । मघोने मघवभ्यामादि पठनीयम् ।

युवन् शब्दः । अत्र विशेषकार्यम्—

युवन्शब्दे वकारस्य उत्वे संप्रसारणे कृते ।
यकारस्य पुनर्नात्र सम्प्रसारणमिष्यते ॥

न सम्प्रसारणे सम्प्रसारणम् । ६ । १ । ३७

न स्यात् सम्प्रसारणं क्वापि परे तु सम्प्रसारणे ।
इत्वं नात्र ततो यस्य यूनः यूनादि साध्यते ॥

रूपसंग्रन्थनम्—

युवा अस्ति युवानौ स्तः युवानः सन्ति ते दृढाः ।
युवानं च युवानौ च यूनः शंसामि तान् जनान् ॥

शसादावचि भसंज्ञा सम्प्रसारणमुर्भवेत् ।
हलादौ पदसंज्ञा स्याद् युवभ्यां नस्य लोपतः ॥
हे युवन् देशरक्षायाः कार्यभारं गृहाण वै ।

श्वन् शब्दः—( कुक्कुरः )

श्वा रूपमुपधादीर्घे सति राजेव सिद्धयति ।
श्वानौ श्वानस्तथा श्वानं श्वानौ शुनः शुना क्रमात् ॥
सम्प्रसारणमुवर्णः वकारस्य शसादिषु ।
सूत्रं श्वयुवमघोनामतद्धिते च संस्मरेत् ॥

केषाञ्चिन्मते श्वानशब्दोऽकारान्तोऽस्ति । तन्मते रूपम्—

श्वानः श्वानौ तथा श्वानः श्वानं श्वानावादि च रामवद्रूपम् ।
अत एव-श्वाननिद्रा तथैव चेति वाक्यं सङ्गच्छते ।

अर्वन् शब्दः ( अश्ववाची )

अर्वणस्त्रसावनञः । ६ । ४ । १२७

अर्वणश्चात्र त्रादेशः सुविभक्तिं विना सदा ।
नञः परो न चेदर्वन् अर्वा धावति शीघ्रतः ॥
अर्वन्तौ किल अर्वन्तः अर्वन्तमिति स्यात्ततः ।
अर्वन्तौ अर्वतः पश्य अर्वता गन्तुमिच्छति ॥
अर्वद्भ्यामर्वद्भिश्च भवत्तुल्यं समुच्चरेत् ।
अनञः प्रतिषेधेन अनर्वा यज्ववद् भवेत् ॥

पथिन्शब्दः ( मार्गवाची )

पथिमथ्यृभुक्षामात् । । ७ । १ । ८५ ।

पथिमथ्यृभुक्षामात् सौ परेऽन्त्यस्य च जायते ।

इतोऽत्सर्वनामस्थाने । ७ । १ । ८६ ।

पथ्यादेरितश्चात्र अद्भवेत् स्वादिपञ्चसु ।

थो न्थः । ७ । १ । ८७

न्थादेशः पथिमथोस्थस्य स्वादिपञ्चविभक्तिषु ।

भस्य टेर्लोपः । ७ । १ । ८८ ।

पथ्यादेश्च भसंज्ञस्य टेर्लोपेन पथः पथा ।
पथिभ्यामादिरूपेषु नस्य लोपो भविष्यति ॥

रूपक्रमः—पन्थाः पन्थानौ पन्थानः प्र० पन्थानं पन्थानौ पथः द्वि० पथा पथिभ्यां पथिभिः तृ० पथे पथिभ्यां पथिभ्य आदि ज्ञेयम् । सुपथिन् शब्दः—

नपुंसकानां संबुद्धौ नलोपो वा भविष्यति ।
हे सुपथिन् सुपथि च रूपद्वयं प्रयुज्यते ॥
शोभनः पन्थाः यस्मिन् वने तदितिविग्रहे ।
सुपथि सुपथी सुपन्थानि प्र० द्वि० ।
सुपथा सुपथिभ्यां सुपथिभिरादि सरलं रूपमग्रे ॥

शोभनः पन्थाः, यस्यामितिस्त्रियां नान्तलक्षणे ङीपिकृते भत्वाट्टिलोपः । सुपथी सुपथ्यौ सुपथ्यः प्र० । सुपथीमित्यादि ।

एवमेव सुमथी अनृभुक्षी शब्दयोः स्त्रीलिङ्गे नदीवद्रूपम् ज्ञेयम् । मथिन् शब्दः । मन्थनदण्डवाचकः ।

उक्तसूत्रत्रयेणैव मन्थाः रूपं प्रसाध्यते ।
शसादौ भस्य टेर्लोपः मथः मथा मथे मथः ।
मथिभ्यां मथिभिः शब्दे नस्य लोपो विधीयते ॥
ऋभुक्षाऽयं ऋभुक्षाणौ ऋभुक्षाणः क्रमेण वै ।
शसादौ भस्य टेर्लोपः ऋभुक्षः प्रणमाम्यहम् ॥
ऋभुक्षा च ऋमुक्षिभ्याम् ऋभुक्षिभिः सुरक्ष्यते ।
हे ऋभुक्षाः सर्वसौख्यं तवैव देवमण्डले ॥

पञ्चन् शब्दः—संख्यावाची बहुवचनान्त एव—

ष्णान्ता षट् । १ । १ । २४

षान्ता नान्ता च या संख्या षट्संज्ञका च सा भवेत् ।

षड्भ्यो लुक् । ७ । १ । २२ ।

षड्भ्यो लुक् जश्शसोः स्यात पञ्च षट् सप्त अष्ट ते ॥

नोपधायाः । ६ । ४ । ७ ।

नोपधाया इसि सूत्रं दीर्घं नामि करोति तत् ।

पञ्चानामथ अष्टानां रूपसिद्धिर्नलोपतः ।
रूपक्रमः—पञ्च, पञ्च पञ्चभिः पञ्चभ्यः पञ्चानां पञ्चसु ॥
परमपञ्च परमपञ्च परमपञ्चभिः परमपञ्चभ्य–आदि ।
गौणत्वे लुङ्नुटौनस्तः—प्रियपञ्चा तु राजवत् ॥

अष्टन् शब्दः ।

अष्टन आ विभक्तौ । ७ । ४ । ८४ ।

आत्वं स्यादष्टनो नित्यं हलादौ सुपि प्रत्यये ।

अष्टाभ्य औश् । ७ । १ । २१ ।

अष्टाभ्य औशिति सूत्रात् औत्वं भवति जश्शसोः ।
अष्टभ्य इति वक्तव्ये कृतात्वस्य प्रदर्शनात्
जश्शसोर्विषयेऽप्यात्वं ज्ञापकेनैव सिद्धयति ।
अष्टौ अष्टौ च अष्टाभि रष्टाभ्योऽष्टाभ्य इति ॥
आत्वं हलि विकल्पेन तस्मादष्टभिराद्यपि ।
अष्टानामष्टासु रूपम् क्रमेणैवं निगद्यताम् ॥

पक्षे—अष्ट अष्ट च अष्टभिरष्टभ्यामष्टानामष्टसु इति०
प्रिया अष्टौ यस्य स प्रियाष्टन् ।

प्रियाष्टाऽयं प्रियाऽष्टानौ प्रियाष्टानः पठन्ति न ।
प्रियाष्टानं प्रियाष्टानौ प्रियाष्ट्नः पश्य हे सखे ॥
प्रियाष्ट्ना च प्रियाष्टभ्यां प्रियाष्टभिः प्रमुद्यते ।
गौणत्वे न भवेदात्वं राजवद्रूपमिष्यते ॥
प्रियाष्ट्नो राजवत्सर्वं हाहावच्चापरं हलि ॥

बुध् शब्दः—( पण्डितवाची )

बुध्यतेः क्विपि रूपं स्यात् भुत् बुधौ च बुधः क्रमात् ॥
बुधं बुधौ बुधो नत्वा बुधा भुद्भ्यां भुद्भिरिति ।
हलादौ भष्भावेन सर्वत्र बस्य भो भवेत् ॥

ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च ।
। ३ । २ । ५९ ।

ऋत्विज् ( यज्ञकार्यकर्ता ) ऋतौ ऋतौ यजति यः सः ।

ऋत्विग् दधृक् स्रग्दिगुष्णि गञ्चु युजि क्रुञ्च इति ।
अष्टाभ्यः क्विन् प्रत्ययं कृत्वा रूपं साधयतामिह ॥

क्रुदतिङ् । ३ । १ । ८३

कृदतिङिति सूत्रस्य तिङ्भिन्नो धातुतः कृतः ।
प्रत्ययः कृत्संज्ञः स्यादिति स्पष्टार्थताऽस्य च ॥

वेरपृक्तस्य । ६ । १ ६७ ।

अपृक्तस्य वकारस्य लोपः स्यादिति कथ्यताम् ॥

रूप संग्रन्थनम्—

ऋत्विग् गच्छति यज्वायं ऋत्विजौ ऋत्विजः पुनः ।
ऋत्विजमृत्विजौ नत्वा ऋत्विजस्तान् नमाम्यहम् ॥
ऋत्विजाऽग्नौ च ऋत्विग्भ्यामृत्विग्भिः हूयते सदा ।
ऋत्विजे दक्षिणां दत्त्वा ऋत्विजो वरमाप्नुयात् ॥
ऋत्विजः कर्म संस्तुत्य ऋत्विक्षु श्रद्दधाति सः ॥

दधृक् शब्द—( धृष्टार्थकः )

दधृक् न लज्जते क्वापि दधृषौ दधृषश्च ते ।
दधृषं दधृषौ लोके दधृषः को न निन्दति ॥
दधृषा खलु दधृग्भ्यां दधृग्भिः सह वसन्तु न ।
दधृषे न नमः कार्यं दधृषः पृथगस्म्यहम् ॥
दधृषः स्वागतं नैव दधृषि न दयां कुरु ।
दधृक्षु सुपि सप्तम्यां रूपं ज्ञेयं विशेषतः ॥

युनक्ति इति युज्—( संयोजनकर्ता )

ऋत्विग् दधृगिति क्विन् स्यात् कृदतिङिति कृद् भवेत् ।
क्विनः सर्वस्य लोपोऽत्र जायते तत्परं पुनः ॥

युजेरसमासे । ७ । १ । ७१

युजेर्नुम् स्यादसमासे स्वादिपञ्चविभक्तिषु ।

क्विन् प्रत्ययस्य कुः । ८ । २ । ६२

क्विन् प्रत्यान्तशब्दस्य पदान्ते कुत्वमिष्यते ॥

चोः कुः । ८ । २ । ३० ।

चोः कुः सूत्राच्चवर्गस्य कवर्गः क्रियते झलि ।
पदान्तेषु भवेत्कुत्वं युक् सयुक् रूपमुच्यते ॥
युग् युञ्जौ युञ्जः प्रथमा युञ्जं युञ्जौ युज्ज इति ।
युजा युग्भ्याञ्च युग्भिश्च सप्तम्यां युक्षु कथ्यते ॥

सुयुज—सुष्ठु युनक्ति यः सः । शोभनो योगी, मेलनकर्ता वा ।

सुयुक्१ सुयुग् च सुयुजौ सुयुजः ते महाजनाः
अत्र चोः कुरिति कुत्वं पूर्वे क्विन् प्रत्ययस्य कुः ॥
२सुयुजं सुयुजा नत्वा सुयुजः प्रार्थयाम्यहम्
३सुयुजा च सुयग्भ्यां च सुयुग्भिः सह संविशेत् ॥
४सुयुजे तथा सुयुग्भ्यां सुयुग्भ्यः स्पृहयाम्यहम्
५सुयुजः सु६युजः पश्चात् सुयुजां सुयुजि वदेत्
सुयुक्षु सप्तमीरूपं प्रयोक्तव्यं च पाठकैः ॥
खञ्ज्-खजिगतिवैकल्ये तस्मात् क्विप् ।
खन् खञ्जौ खञ्जः प्रथमा रूपं क्रमेण पद्यते ।
खञ्जं खञ्जौ तथा खञ्जः द्वितीयारूपमुच्यते
खञ्जा खन्भ्यां च खन्भिः खञ्जे खन्भ्यां पठेत्क्रमात् ।
अन्यरूपं स्वयं ज्ञेयं नास्ति काचिद् विशेषता ॥

विश्वराज् शब्दः—( भगवान् )

विश्वस्य वसुराटोः । ६ । ३ । १२८

विश्वस्य वसुराटोश्च वरयो दीर्घ उच्यते ।
पदान्ते हलि विभक्तौ विश्वा विश्वस्य जायते ॥

रूपदर्शनम्—

विश्वाराट् भगवानेव विश्वराजं नमामि तम् ।
विश्वराजा कृतं सर्वं विश्वराजे नमोऽस्तु ते ॥
विश्वराजः फलं लब्धुं विश्वराजः स्तुतिं कुरु ।
विश्वराजि सदा स्नेहं श्रद्धां कुरुत हे नराः ? ॥
विश्वाराड्भ्यामादिरूपं विश्वस्य हलि दीर्घतः ।
विश्वाराट्त्सु च सप्तम्यां धुडागमेन जायते ॥

विश्वावसुः विश्ववसू विश्ववसवस्तेऽत्रवै ।
विश्ववसुं विश्ववसू विश्ववसूनिति वदेत् ॥
भानुवद्रूपमुच्येत पदान्ते हलि च पुनः ।
विश्वा विश्वस्य कर्तव्यः विश्वावसुभिरादिच ॥

राज् शब्दः—

राट् राड् वा शास्ति देशं राजौ राजः प्रशासति ।
राजं राजौ तथा राजः प्रणमन्ति सदाजनाः ॥
राजा राड्भ्यां तथा राड्भिः क्रियतां प्रकृतेर्हितम् ।
राजे राजस्तथा राजः राजोः राजां भयं कुरु ॥
राजि राजोः राट्सु राट्त्सु प्रेम्णा कार्यस्य साधनम् ।

विभ्राज्—

विभ्राट् सः विभ्राजौ तौ विभ्राजः सन्ति मन्त्रिणः ॥
विभ्राजं च विभ्राजौ विभ्राजः प्रणमन्ति ते ।
विभ्राजा विभ्राड्भ्याञ्च विभ्राड्भिरिति क्रमात् ॥
सरलं रूपमुच्चार्यं विभ्राट्त्सु च विशेषता ।

देवेज् शब्दः। देवं यजतीति विग्रहे क्विप् प्रत्ययः यस्य संप्रसारणञ्च ।

देवेट् देवेड् च देवेजौ देवेजः सन्ति ब्राह्मणाः ।
देवेजं देवेजौ च देवेजः प्रणमाम्यहम् ॥
देवेजा देवेड्भ्याञ्च देवेड्भिरिति च भवेत् ।
पदान्ते हलि च षत्वं जश्त्वकार्यं विशेषतः ॥

विश्वसृज्—( ब्रह्मा ) विश्वं सृजतीति विग्रहे क्विप् प्रत्ययः ।

विश्वसृट् विश्वसृड् रूपं विश्वसृजौ विश्वसृजः ।
विश्वसृजं विश्वसृजौ, विश्वसृजः समर्चयेत् ॥
विश्वसृजा विश्वसृड्भ्यां, विश्वसृड्भिरिति क्रमात् ।
हलादौ षत्वमिष्येत अजादौ नहि किञ्चन ॥

परिव्राज्—( संन्यासी ) परित्यज्य सर्वं व्रजति यः स इति विग्रहे क्विप् । परौ व्रजेः षः पदान्ते इति षत्वं तस्य जश्त्वेन ड् श्रुतिः ।

परिव्राट् धनधान्यादि त्यक्त्वा वनं प्रयाति सः ॥

परिव्राजं परिव्राजौ परिव्राजो नुमः सदा ।
परिव्राजा परिव्राड्भ्यां परिव्राड्भिः सुतप्यते ॥
परिव्राजे नमः कार्यं परिव्राजः कथां शृणु ।
परिव्राजः परिव्राजोः परिव्राट्सु च भक्तयः ॥

भ्रस्ज्—भृट् ।

स्कोः संयोगाद्योरन्ते च । ८ । २ । २७

पदान्ते झलि च लोपः संयोगाद्योस्तु स्कोः सदा ।
भ्रस्ज धातोर्भवेत् क्विप् च भृट् भृड् भृज्जौ भृज्ज इति ॥
भृज्जं भृज्जौ तथा भृज्जः भ्रष्टु वदामि कोद्रवान् ।
भृज्जा भृड्भ्यां तथा भृड्भिः पदान्ते षत्वजश्त्वकम् ॥
सप्तमी बहुवचने धुट्कार्यं भृट्त्सु भृट्सु च ।
सम्प्रसारणकार्येण भ्रस्जो रेफस्य ऋ इह ॥
ऊर्ज् शब्दः । ऊर्जबलप्राणनयोरिति क्विप् प्रत्ययः ।
ऊर्क् ऊर्ग् ऊर्जौ ऊर्जः, ऊर्जमूर्जौ ऊर्ज इति ॥
ऊर्जा ऊर्ग्भ्यां ऊर्ग्भिरादि रूपाणाञ्च प्रदर्शनम् ।

अथ सर्वनामशब्दाः ( हलन्ताः )

तदोः स सावनन्त्ययोः । ७ । १ । १०६

अनन्तयोस्तदोः सः स्यात् त्यदादीनाञ्च सौ परे ।
स्यः तथा सः प्रयोगोऽयं सा स्या एषा च एषकः ॥

अत्र ध्याने रक्षणीयम्—

तत्परोक्षे च दूरे च एतत्सामीप्यवस्तुनि ।
इदं समीपे प्रत्यक्षे परोक्षे स्याददःपदम् ॥

तच्छब्दस्य रूपसंग्रन्थनम्—

सः पठति सदा पाठं, तौ तत्र पठतः सदा ।
ते लभन्ते सुखान्यत्र, तं तौ तान् पाठयाम्यहम् ॥
तेन साकं गमिष्यामि, ताभ्यां तैः सह क्रीडतु ।
तस्मै जलं प्रयच्छामि, ताभ्यां तेभ्यः फलानि च ॥

तस्मात् ताभ्याञ्च तेभ्यश्च, पूर्णानन्दं लभामहे ।
तस्य संमुखमागत्य तयोः तेषां भयं नहि ।।
तस्मिन् सर्वे गुणाः सन्ति तयोः तेषु न किञ्च न ।
हे सः संबोधने रूपं प्रयोक्तुमपिशक्ष्यति ।।

त्यत्—

त्यदादीनाम इत्यस्मात् क्रियतामत्वमत्र वै ।
तदोः स इति सत्वं स्यात् स्यः पदं पूर्ववद् भवेत् ।।

रूपसंदर्शनम्—

स्यः त्यौ त्ये प्रथमा रूपं त्यं त्यौ त्यान् कर्मकारके ।
त्येन त्याभ्यां तथा त्यैश्च, तृतीयादिषु सर्ववत् ।।

अतित्यदस्तु अतित्यद् अतित्यदौ अतित्यद इत्येवं रूपं भवेत्—उपमर्जनत्वात् त्यदादीनाम इति न प्रवर्तते ।

इदम्—त्यदादीनाम इति प्रवर्ततेऽत्र ।

अयं बालः सुशीलोऽस्ति, इमे क्रीडन्ति प्राङ्गणे ।
इमं दृष्ट्वा प्रसीदामि, इमान् सुसरलान् कुरु ।।
अनेन सह वस्तव्यम्, एभिः किं क्रियतेऽधुना ।
अस्मै सुखं धनं दत्वा, एभ्यः फलानि यच्छतु ।।
अस्माल्लघुरहं वर्ते, एभ्यः श्रेष्ठो गुरुर्मम ।
अस्य नास्ति गृहं क्वापि, एषां गृहेषु सज्जनाः ।।
अस्मिन् वृक्षे फलं पक्वमेषु पक्वा लताः स्थिताः ।।

द्विवचनरूपम्—

इमौ इमौ च आभ्यां त्रिरनयोरन्तयोर्द्वयोः ।
प्रथमादिक्रमादुक्त्वा वाक्यं नवं विधीयताम् ।।

एतत्—( अतिसामीप्ये )

रूपसंग्रन्थनम्—

एषः किं कुरुते कार्यम्, एते धावन्ति बालकाः ।
एनमेतं जनं पश्य, एनानेतान् जयेद्रिपून् ।।

एनेन सह एतेन, एतैस्तु मित्रता शुभा ।
एतस्मै भोजनं दत्त्वा, एतेभ्यः फलमाहर ॥
एतस्माल्लघुरेषोऽस्ति, एतेभ्यः को न बिभ्यति ।
एतस्य शोभनाचारः, एतेषां दर्शनं शुभम् ॥
एतस्मिन् स्वगृहे वासः, एतेषु रमते मनः ।
एतौ एतौ च एताभ्यां, वारत्रयं द्विरेतयोः ॥
प्रथमादिद्विवचने, क्रमशो रूपमुच्यताम् ।

यत्तदोर्नित्यसंबन्धः ( त्यदादीनामः स्याद्विभक्तौ )

यः कश्चित्कुरुते धर्मं, स गच्छति सुरालयम् ।
यं यौ यान् कुरुतेऽध्यक्षान्, तं तौ तानभिनन्दत ॥
येन यैर्वा तपस्तप्तं, तेन तैः शोधितं मनः ।
यस्मै येभ्यः कृपा शंभोः, तस्मै तेभ्यः सुखं सदा ॥
यस्मात् येभ्यश्च मुक्तोऽस्ति तस्मात् तेभ्यः कुतो भयम् ।
यस्य येषां धनं ज्ञानं तस्य तेषां सदाऽऽदरः ॥
यस्मिन् येषु च विश्वासः तस्मिन् तेषु च प्रीतयः ।

किम् शब्दः ( प्रश्नार्थकः )

कः सिन्धोस्तरणे शक्तः, कं न क्रोशन्ति दुर्जनाः ।
केन प्राप्तं सुखं नित्यं कस्मै राजा सदा प्रियः ॥
कस्मात् सर्वेजनास्तुष्टाः, कस्य सौख्यं निरन्तरम् ।
कस्मिन् दोषो न संलग्नः, किं कुत्सा प्रश्नवाचकम् ॥
कस्मात् काभ्यां च केभ्यश्च, सर्वशब्दवदेव हि ॥

युष्मदस्मच्छब्द रूपसाधनम्—

ङेप्रथमयोरम् । ७ । १ । २८

प्रथमायाः द्वितीयायाः विभक्तेरम् च ङेरपि ।
मपर्यन्तस्य । ७ । २ । ९१ । इत्यधिकारः ।

त्वाहौ सौ । ७ । २ । ९४

त्वाहौ सावितिसूत्रेण मान्तभागस्य एतयोः ।
आदेशौ क्रमतः त्वाऽहौ जायेते सौ परे सदा ।

शेषे लोपः । ७ । २ । ९०

**शेषे लोप इतिसूत्र-तात्पर्यं निम्नरूपकम् ।**
**आत्वयत्वनिमित्तेर-विभक्तौ युष्मदस्मदोः ॥**
**अन्त्यस्य च भवेल्लोपः, त्वमहं पूर्वरूपतः ।**
**परमत्वं परमाहम्, अतित्वमत्यहं पुनः ॥**
**अमादेशेन त्वाहाभ्यां, शेषे लोपेन जायते ।**

युवावौ द्विवचने । ७ । २ । ९२

**युवावौ स्तो द्विवचने, मान्तस्य युष्मदस्मदोः ।**

प्रथमायाश्च द्विवचने भाषायाम् । ७ । २ । ८८

**प्रथमाया द्विवचने, भाषायामात्वमिष्यते ।**
**युवामावाञ्च युवकामावकामिति साध्यताम् ॥**

यूयवयौ जसि । ७ । २ । ९८

**यूयवयौ जसि परे, मान्तस्व युष्मदस्मदोः ।**
**यूयं वयं तथैवातियूयमतिवयं वदेत् ॥**

त्वमावेकवचने । ७ । २ । ९७

**त्वमौ स्यातामेकवचने, मान्तभागस्य एतयोः ।**

द्वितीयायां च । ७ । २ । ८०

**द्वितीयायाश्च सूत्रेण, आत्वमत्र विधीयते ।**

शसो नः । ७ । १ । २९

**युष्मदस्मद्द्वयात्पश्चाच्छसः सस्यात्र नोभवेत् ।**
**त्वां मां युवां भवेदावां युष्मानस्मानिति भवेत् ॥**

"योऽचि" । ७ । २ । ८९

**यादेशः स्यादजादौ प्रत्यये युष्मदस्मदोः ।**
**त्वया मया तृतीयायां, रूपं साधयक्रमात् ।**

युष्मदस्मदोरनादेशे । ७ । २ । ८६

**अनादेशे हलादौ च, विभक्तौ आत्वमेतयोः ।**

युवाभ्यामावाभ्याञ्च, युष्माभिरस्माभिरिति ॥

तुभ्यमह्यौ ङयि । ७ । २ । १४

तुभ्यमह्यौङयि परे, मान्तभागस्य केवलम् ।
युष्मदस्मदोरादेशौ तस्मात् तुभ्यं मह्यमिति ॥
अतितुभ्यमतिमह्यं, परमतुभ्यमादि च ।
युवाभ्यामावाभ्याञ्च, युवावादेशतस्तथा ॥

भ्यसोऽभ्यम् । ७ । १ । ३०

भ्यसोऽभ्यमिति सूत्रेण भ्यसोभ्यमभ्यमत्र वा ।
युष्मभ्यमस्मभ्यन्तु शेषे लोपेन जायते ॥

एकवचनस्य च । ७ । १ । ३२

पञ्चाम्येकवचनस्य अत्स्यात्पश्चात् त्वमाविति ।
त्वत् मत् रूपं द्वयं सिद्धयेत् युवाभ्यामादि पूर्ववत् ॥

पञ्चम्या अत् । ७ । १ । ३१

पञ्चम्या अदिति सूत्रात् भ्यसोऽत् स्यात् युष्मदस्मदोः ।
युष्मदस्मट्टिलोपो न बहुवचनेऽत्र जायते ॥

तव मम ङसि । ७ । २ । ९६

ङसि तवममौ स्यातां मान्तस्य युष्मदस्मदोः ।

युष्मदस्यद्भ्यांङसोऽश् । ७ । १ । २७

अश् ङसो युष्मदस्मद्भ्यां तव ममेति सिद्धयति ।

सामआकम् । ७ । १ । ३३

सामआकम् युष्मदस्मद्भ्यां युष्माकमस्माकमिति ।
त्वयि मयि त्वमादेशात् योऽचि सूत्रेण सिद्धयति ॥
आत्वं कृत्वा च युष्मासु अस्मासु सप्तमी बहौ ।

अत्र भट्टोजिदीक्षित श्लोकाः—

समस्यमाने द्वयेकत्व वाचिनी युष्मदस्मदी ।
समासार्थोऽन्यसंख्यश्चेत् स्तो युवावौ त्वमावपि ॥

सु जस् ङे ङस्सु परत आदेशाः स्युः सदैव ते ।
त्वाहौ यूय वयौ तुभ्य मह्यौ तवममावपि ॥
एते परत्वाद् बाधन्ते पूर्वविप्रतिषेधतः ।
द्व्येकसंख्यः समासोर्थो बह्वर्थे युष्मदस्मदी ॥
तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ न च ॥
युष्मद् मध्यम पुरुषः । रूपसंग्रन्थनम् ।
त्वं मित्र कुत्र गन्ताऽसि युवां कुत्र गमिष्यथः ।
यूयं पठिष्यथ पाठान् अत्र संबोधनं नहि ॥
त्वां पश्यामि वदामि त्वा युवां वां प्रेक्षते जनः ।
युष्मान् वः सेवमानस्य विद्या धनञ्च वर्धते ॥
त्वया कृतं युवाभ्याञ्च युष्माभिः हसितं कथम् ?
तुभ्यं ते च युवाभ्यां वां युष्मभ्यं वः सदा नमः ॥
त्वत पृथग् न भविष्यामि युवाभ्यां युष्मदत्र वा ।
तव ते युवयोः वाञ्च युष्माकं वः समुन्नतिः ॥
त्वयि च युवयोः सर्वे युष्मासु निर्भयाः जनाः ।

अस्मत् उत्तम पुरुषः—क्रमशो रूपदर्शनम् ।

अहं वन्दे गुरुं प्रातरावां वन्दावहे शिवम् ।
वयं वन्दामहे लक्ष्मीं, मां मा कोऽपि न वन्दते ॥
आवां नौ पाठशालां, अस्मान् नः पाठयन्ति ते ।
मयाआवाभ्यां जलं पीतम् अस्माभिः क्रीडितं बहु ॥
मह्यं मे हितमावाभ्यामस्मभ्यं नः करोति सः ।
मदावाभ्यां विना कार्यं अस्मत् कोऽत्र करिष्यति ॥
मम मे आवयोः नौ च अस्माकं नः सुखं गृहे ।
मयि च आवयोः माता अस्मासु च दयावती ॥

त्वामतिक्रान्त इतिविग्रहे—

अतित्वम् अतित्वाम् अतियूथम् प्र० । अतित्वाम् अतित्वाम् अति-त्वान् द्वि० अतित्वया अतित्वाभ्याम् अतित्वाभिः तृ० । अतितुभ्यम् अतित्वाभ्याम् अतित्वभ्यम् च० । अतित्वत् अतित्वाभ्याम् अतित्वत् प० । अतितव अतित्वयोः अतित्वाकम् ष० । अतित्वयि अतित्वयोः अतित्वासु सप्तमी ।

मामतिक्रान्त इतिविग्रहे च—

अत्यहम् अतिमाम् अतिवयम् । अतिमाम् अतिमाम् अतिमान् । अतिमया अतिमाभ्याम् अतिमाभिः । अतिमह्यम् अतिमाभ्याम् अतिमभ्यम् । अतिमत् अतिमाभ्याम् अतिमत् । अतिमम अतिमयोः अतिमाकम् । अतिमयि अतिमयोः अतिमासु । सप्तमी रूपम् ।

युवामतिक्रान्त इति विग्रहे च—

सुजस् ङेङस्सु प्राग्वत् यथा अतित्वम् अतियुवाम् अतियूयम् ।

अतियुवाम् अतियुवाम् अतियुवान् ।
अतियुवया अतियुवाभ्याम् अतियुवाभिः तृ० ॥
अतितुभ्यम् अतियुवाभ्यम् अपियुवभ्यम् । च० ।
अतियुवत् अतियुवाभ्याम् अतियुवत् प० ॥
अतितव अतियुवयोः अतियुवाकम् । ष० ।
अतियुवयि अतियुवयोः अतियुवासु सप्तमी ॥

युष्मानतिक्रान्त इति विग्रहे—रूपाणि—

अतित्वम् अतियुष्माम् अतियूयम् प्र० ।
अतियुष्माम् अतियुष्माम् अतियुष्मान् द्वि० ॥
अतियुष्मया अतियुष्माभ्याम् अतियुष्माभिः तृ० ।
अतितुभ्यम् अतियुष्माभ्याम् अतियुष्मभ्यम् च० ॥
अतियुष्मत् अतियुष्माभ्याम् अतियुष्मत् प० ।
अतितव अतियुववोः अतियुष्माकम् ष० ॥
अतित्वयि अतियुवयोः अतियुष्यासु सप्तमी ।
अनुदात्तं सर्वमपादादौ, पदात्, तथा परस्य च ॥८।१।१६

यथाकार्यमग्रे सूत्रेऽधिकारश्च भवेदिह । ८ । १ । १८

युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयो र्वां
नावौ । ८ । १ । २०

षष्ठीद्विवचनान्तस्य द्वितीयायां तथैव च ।
चतुर्थीद्विवचनान्तस्य वां नौ स्तो युष्मदस्मदोः ॥

**बहुवचनस्य वस्नसौ । ८ । २ । २१**

षष्ठीबहुवचनस्य द्वितीयायास्तथैव च ।
चतुर्थीबहुवचनस्य रूपस्थ युष्मदस्मदोः ॥
क्रमाद्वस्नसौ स्यातामपादादिस्थितिषु वै ।

**तेमयावेकवचनस्य । ८ । १ । २२ ।**

ते मयावेकवचनस्य-रूपस्व युष्मदस्मदोः ।
षष्ठीचतुर्थी विभक्तौ क्रमशो भवत इह ॥

**त्वामौ द्वितीयायाः । ८ । १ । २३ ।**

त्वामौ स्यातां द्वितीयाया एक वचनान्तरूपयोः ।
अपादादौ च स्थितयोः पदाच्च परयोः पुनः ॥

**सर्वेषाञ्च उदाहरणवाक्यानि—**

श्रीशस्त्वाऽवतु मापीह दत्ता त्ते मेऽपि शर्म सः ।
स्वासी ते मेऽपि सहरिः पातु वामपि नौ विभुः ॥
सुखं वां नौ ददात्वीशः पति वांमपि नौ विभुः ।
सोऽव्याद् वो नः शिवं वो नो दद्यात् सेव्योऽत्र वः स नः ॥

**सारांशः—**

अत्र पदात्परस्य अपादादौ स्थितस्य युष्मच्छब्दैकवचनस्य क्रमेव त्वामित्यस्य त्वा, तुभ्यमित्यस्य ते तवपदस्य च ते भवति । एवमेव युवां युवाभ्यां युवयोरितिपदत्रयाणां वां भवति । तथा युष्मान् युवभ्यं युष्माकमित्येतेषां वस् भवति । एवमेव अस्मच्छब्द स्यापि अपादादौ स्थितस्य पदात्परस्य मा० नौ० मे० न आदेशा ऊह्याः ।

समानवाक्ये तिघात युष्मदस्मदादेशा वक्तव्याः । वा ।
वाक्यं स्यादेकतिङ्वाऽत्र वां नावादिविधाविह । वा०
युष्मदोऽस्मद आदेशाः एकवाक्ये भवन्ति वै ॥
भक्तं पच तव भविष्यतीत्यत्र ततो न ते ।
शालीनां ते ओदनानि दास्यास्यत्र भवेदतः ॥
वां नावादय आदेशा अनन्वादेशबोधने ।
विकल्पेनैव जायन्ते अन्वादेशे तु नित्यतः ॥ वा ।

अस्ति धाता स भक्तस्ते तवभक्तोऽस्ति वा स्थितौ ।
तस्मै ते नम इत्येव नित्यं ते क्रियतां त्वया ॥

नचवाहाहैवयुक्ते । ८ । १ । २४

च वाहाऽहैव युक्तेषु आदेशाः स्युरिमे नहि ।
हरिस्त्वां मां च रक्षतु कथं त्वां मामवेन्नहि ।
समीक्ष्यते चेतसा त्वां भक्तस्तव रूपमीक्ष्यते ।
अनालोचने तु भक्तस्त्वा पश्यति नयनेन स्यात् ॥

पश्यार्थैश्चानालोचने । ८ । १ । २५

नयनज्ञानभिन्नार्थधातुयोगे पदे क्वचित् ।
त्वामादयो न जायन्ते आदेशा इति बुध्यताम् ॥
तस्मात्प्रदर्शितं वाक्यं चेतसा त्वां समीक्षते ।
आलोचने भवेदेव भक्तस्त्वा पश्यतीक्षणैः ॥

सपूर्वायाः प्रथमाया विभाषा । ८ । १ । २६

किञ्चित्पूर्वकप्रथमा विभक्त्यन्ताद् विभाषया ।
अन्वादेशेऽपि वां नौ स्तः ते मे वस् नस् क्रमेण वै ॥
भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम् ।
त्वा मा वा त्रायते वाच्यमितिस्थितौ त्वयापुनः ॥

सामन्त्रितम् । २ । ३ । ४८

आमन्त्रितं भवेत्संज्ञा संबोधनपदस्थले ॥

आमन्त्रितं पूर्वमविद्यमानवत् । ८ । १ । ७२

अविद्यमानवत्पूर्वमामन्त्रितपदं भवेत् ।
अग्ने तव महादेव अस्मान् पाहि प्रयुज्यते ॥
इह ते नो न जायेत पूर्वमामन्त्रितं यतः ।
अग्ने नय अग्न इन्द्र निघातो नहि तिङ्पदे ॥
आमन्त्रितनिघातोऽपि नैवात्राविद्यमानके ।
नामन्त्रिते समानाधिकरणेऽविद्यमानता ॥

नामन्त्रिते समानाधिकरणे सामान्यवचनम् । ८ । १ । १७३

विशेष्यस्य समानाधिकरणेऽविद्यमानता ।
न स्यात् हरे दयालोनोऽवतादिति प्रयुज्यते ॥
आमन्त्रिते समानाधिकरणे च विशेषणे ।
अविद्यमानवद्भावो विशेष्यस्य विकल्पतः ॥
यूयं प्रभव इत्यत्र युष्मान् भजामि वो भजे ।

सुपाद्—( शोभनो पादौ यस्य सः )

अयं सुपात् सुपादौ तौ सुपादः सन्ति ब्राह्मणाः ।
सुपादं तं सुपादौ तौ सुपदः श्री गुरून् नुमः ॥
शसादावचि सर्वत्र पदादेशो विधीयते ।

पादः पत् । ६ । ४ । १३०

पादः पदिति सूत्रेण भसंज्ञाऽवयवस्य च ॥
शसादौ स्यात्पदादेशस्तस्माद्रूपे विभिन्नता ।
सुपदा च सुपाद्भ्याञ्च सुपाद्भिः श्रम्यते त्वरित् ॥
सुपदे तथा सुपाद्भ्यां सुपाद्भ्यः सुखमस्ति नः ।
सुपदः तथा सुपाद्भ्यां सुपाद्भ्यः सुखसंभवः ॥
सुपदः खलु संमानः सुपदोः सुपदां सुखम् ।
सुपदि सुपदोः सर्वे सुपात्सु स्नेहमाचरेत् ॥

अग्निमथ्—

अग्निमत् पूज्यते यज्ञे अग्निमथौ मुनी च तौ ।
अग्निमथः प्रहर्षन्ति कुर्वन्ति हवनानि वै ॥
अग्निमथमग्निमथौ अग्निमथः स्तुवन्ति ते ।
अग्निमथा अग्निमद्भ्याम् अग्निमद्भिश्च दीप्यते ॥
अग्निमथे ददौ द्रव्यं यजमानः सुखी जनः ॥

प्रकृष्टमञ्चतीति प्राञ्च् ( प्रथमः पूर्वीयः )
अत्र विशेषकार्यम्—

अनिदितां हल उपधायाः क्ङिति । ६ । ४ । २४

हलन्तानामनिदितामङ्गानामुपधाख्यकः ।
यो नकारस्तस्यलोपः किति ङिति च प्रत्यये ॥

अचः । ६ । ४ । १३८

भस्याकारस्य लोपः स्यात् लुप्तनकारस्याञ्चतेः ।
अचः सूत्रस्य तात्पर्यमस्तीति प्रतिपाद्यताम् ॥

चौ । ६ । ४ । १३८

चाविति सूत्रतो दीर्घः पूर्वस्याणो भवेदिह ।
लुप्ताकारनकारेऽञ्चतौ परे प्राचः भवेत् ॥

रूपदर्शनम् —

प्राक् प्राञ्चौ प्राञ्च आदौ हि प्राञ्चं प्राञ्चौ प्राच इति
प्राचा प्राग्भ्यां तथा प्राग्भिः सप्तम्यां सुपि प्राक्षु च ॥
पूजार्थे तु नलोपो न भवति ।

नाञ्चेः पूजायाम् । ६ । ४ । ३०

नाञ्चे र्नकारलोपः स्यात् पूजार्थस्य च बोधने ।
हे प्राङ् रूपं वदेदत्र हे प्राञ्चौ प्राञ्च इत्यपि ॥

रूपदर्शनम्—

प्राङ् प्रञ्चौ प्राञ्चः, प्राञ्चं प्राञ्चौ प्राञ्चः स्तुवन्ति ते ।
प्राञ्चा प्राङ्भ्याञ्च प्राङ्भिः ४प्राञ्चे ५प्राञ्चः प्राङ्क्षु च ॥

प्रत्यञ्चशब्दः ( पाश्चात्यः )

प्रत्यङ् वदति प्रत्यञ्चौ प्रत्यञ्चः प्रवदन्ति ते ।
प्रत्यञ्चं वच्मि प्रत्यञ्चौ प्रतीचस्तान् निवेदय ॥
प्रतीचा सह प्रत्यग्भ्यां प्रत्यग्भिः न वसाम्यहम् ।
सप्तम्यां बहुवचने प्रत्यक्षु रूपमुच्यताम् ॥

अमुम् अञ्चतीतिविग्रहे—

विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये । ६ । ३ । ९२

सर्वनाम्नस्तथा विष्वग्देवयोष्टेरद्रिरिति ।
अञ्चतावप्रत्ययान्ते परे इति विमृश्यताम् ॥

अदसोऽसेर्दादुदो मः । ८ । २ । ८० ।

अदसोऽसेर्दादुदो मः उदूतौ स्तः प्रयोगके ।
दस्य मः क्रियते तेन अमुमुयङ् इति भवेत् ॥
अदमुयङ् अदद्र्यङ् च रूपत्रयञ्च सौ परे ।

उक्तञ्च—

अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥

क्रमशो रूपदर्शनम्—

अमुमुयङ् अमुमुयचौ अमुमुयञ्चः सज्जनाः ।
अमुमुयञ्चमसि स्याद्-अमुमुयञ्चौ अमुमुईचः ।
अमुमुईचा, अमुमुयग्भ्याम् अमुमुयग्भिः । एवं विचार्यपाठचम् ।

पक्षे—अन्त्यबाधेऽन्त्यसदेशस्य । प०

अदमुयङ् अदमुयञ्चौ अदमुयञ्चस्ते जनाः ।
अदमुयञ्चमदमुयञ्चौ अदमुईचः स्तौम्यहम् ॥

उदञ्च्शब्दः—( उत्तरीयः )

अत्र विशेषकार्यम्—शसाद्यचि विभक्तावुद ईत् ।

उद ईत् । ६ । ४ । १३९

उद ईदिति सूत्रेण अञ्चतेरस्य ईद्भवेत् ।
उच्छब्दात्परस्यैव—उदीचः शसि सिद्धचति ॥
उदङ् सोऽस्ति उदञ्चौ तौ उदञ्चः सन्ति ते बुधाः ।
उदञ्चं तथा उदञ्चौ—उदीचस्तान् सभाजयेत् ॥
उदीचा सह उदग्भ्याञ्च उदग्भिश्चिन्त्यते श्रुतिः ।
उदीचे आदि सरलं रूपं भवति बुध्यताम् ॥
सप्तम्यां सुप्युदक्षु रूपे वैशिष्टचमस्ति वै ॥

तिर्यञ्च् शब्दः—पक्षिबोधकः । तिरः अञ्चतीति विग्रहः ।
१०

तिरसस्तिर्यलोपे । ६ । ३ । ९४

स्यात्तिरिस्तिरसो वप्रत्ययान्ते अञ्चतौ परे ।
तिर्यङ् सौ भवेद्रूपं—तिरश्चः शसि पठ्यते ।।

क्रमशो रूपदर्शनम्—

अयं तिर्यक् च तिर्यञ्चौ तिर्यञ्चो बहुभेदकाः ।
तिर्यञ्चं तिर्यञ्चौ च तिरश्चः पश्यत बहून् ।।
तिरश्चा सह तिर्यग्भ्यां तिर्यग्भिः क्रियते रवः ।
तिरश्चे देहि तिर्यग्भ्यां तिर्यग्भ्यस्तण्डुलान् सदा ।।
तिरश्चः पञ्चमी रूपं तिरश्चः स्यात् ङसि पुनः ।
तिरश्चि ङौ भवेद्रूपं तिर्यक्षु सुपि कथ्यताम् ।।

सम्यच्शब्दः—सम्यग् अञ्चतीति विग्रहः ।

समः समि । ६ । ३ । ९३

वप्रत्ययान्त इह स्यादञ्चतिर्वै परः क्वचित् ।
तदा समः समिस्तत्र जायते बुध्यतामिति ।।

रूपदर्शनम्—

सम्यक् तथा च सम्यञ्चौ सम्यञ्चः प्रथमापदम् ।
सम्यञ्चमथ सम्यञ्चौ—समीचः पश्यत जनान् ।।
[१]समीचा सह सम्यग्भ्यां सम्यग्भिः साध्यते जयः ।
[१]समीचे तथा समीचैः सम्यक्षु सप्तमी सुपि ।।

क्रुञ्च् शब्दः—( पक्षिविशेषे )

क्रुङ् क्रुञ्चौ क्रुञ्चः पश्चात् क्रुञ्चं क्रुञ्चौ क्रुञ्च इति ।
क्रुञ्चा क्रुङ्भ्यां च क्रुङ्भिः सप्तम्यां क्रुङ्क्षु जायते ।।

पयोमुच्—( मेघः )

पयोमुक् प्रथमारूपं पयोमुचौ पयोमुचः ।
पयोमुचं पयोमुचौ—पयोमुचः समीक्षताम् ।।
पयोमुचा पयोमुग्भ्यां पयोमुग्भिर्विलीयते ।

पयोमुचे पयोग्मुभ्यां पयोमुग्भ्यः स्पृहयते ॥
पयोमुचः पयोमुग्भ्यां पयोमुग्भ्यो जलं लभे ।
पयोमुचः भवेत् पूजा पयोमुचोः पयोमुचाम् ।
पयोमुचि पयोमुचोः पयोमुक्षु जलं स्थितम् ।
पदान्ते चोः कुरादेशः झलि परे च सर्वदा ॥

सुवृश्च्—सुष्ठु वृश्चतीति विग्रहः ।

सुवृट् सः सुवृश्चौ तौ सुवृश्चः सन्ति तक्षकाः ।
सुवृश्चं तं सुवृश्चौ तौ सुवृश्चस्तान् समाह्वय ॥
सुवृश्चा छिद्यते वृक्षः सुवृड्भ्यामपि छिद्यते ।
सुवृड्भिरपि छेतव्यः सुवृट्सु शक्तिरस्ति वै ॥

सह अञ्चतीति सध्र्यच्

सहस्य सध्रिः । ६ । ३ । ९५

अञ्चतौ वप्रत्ययान्ते सध्रिः सहस्य जायते ।
सध्र्यङ् स सध्र्यञ्चौ तौ सध्र्यञ्चस्ते मम प्रियाः ॥
सध्र्यञ्चमिह सध्र्यञ्चौ सध्रीचः प्रीणयाम्यहम् ।
सध्रीचा सह सध्र्यङ्भ्यां सध्र्यङ्भिः प्राप्यते सुखम् ॥
सध्रीचे सलिलं दत्ते सध्रीचामादरं कुरु ।
सध्रीचि खलु सध्रीचोः सध्र्यङ्क्षु विश्वसिम्यहम् ॥

धीमत्—बुद्धिमान् ।

अत्वसन्तस्य चाधातोः । ६ । ४ । १४

अत्व सन्तस्य चाधातोः दीर्घः स्यादुपधाक्षरे ।
सुब् विभक्तावसंबुद्धौ परे धीमानिति भवेत् ॥

रूपदर्शनम्—

धीमान् भवति शास्त्रज्ञो धीमन्तौ रामलक्ष्मणौ ।
धीमन्तस्ते नराः पूज्याः हे धीमन् त्वां नमाम्यहम् ॥
धीमन्तमथ धीमन्तौ धीमतः प्रणमाम्यहम् ।
धीमता सह धीमद्भ्यां धीमद्भिः सह संविशेत् ॥

अन्यरूपाणि सर्वाणि भवच्छब्दसमानि च ॥

गोमत्—( धातोरप्यत्वन्तस्य दीर्घः )

गोमन्तमिच्छति गोमानिव आचरति वेति विग्रहः क्विन्तात् क्यजन्ताद्वा सिद्धिरस्य ।

रूपदर्शनम्—

गोमानिह च गोमन्तौ गोमन्तः सुखिनः सदा ।
गोमन्तमिह गोमन्तौ गोमतः पश्य सुदृढान् ॥
गोमता सह गोमद्भ्यां–गोमद्भिः क्रियते सुखम् ।
गोमते गोमतः पश्चात् गोमति गोमतोरिति ॥

महत् –मह्यते=पूज्यते यः स महान् । महधातोर्डतिप्रत्ययः ।
वर्तमाने पृषन् महज्जगच्छतृवच्चेति सूत्रेणनिपातितः ।

सान्तमहतः संयोगस्य । सू० ६ । ४ । १०

सान्तसंयुक्तशब्दस्य महतश्चात्र नोऽस्ति यः ।
तदुपधादीर्घकार्यं स्यादसंबुद्धौ परे च सौ ॥
नुमि कृते ततः पश्चात् संयोगान्तश्च लुप्यति ।

रूपदर्शनम्—

एकवचने— बहुवचने—

महान् सत्यं वचो ब्रूते—महान्तः सत्यभाषिणः ।
महान्तं तं समादृत्य—महतः सर्वदा नुमः ॥
महता रक्ष्यते लोकः—महद्भिः सह संविशेत् ।
महते आसनं दद्यात्—महद्भ्यः क्रियतां नमः ॥
महतः सर्वदा सौम्यां—महद्भ्यश्च मतिं लभे ।
महतः पण्डितस्यैव—महतां च शुभासनम् ॥
महति दृश्यतेधैर्यं महत्सु बहवो गुणाः ।
हे महान् हे महान्तौ हे महान्तः रक्षत जनान् ॥

द्विवचनरूपम्

महान्तौ विवदेते न महान्तौ नम तौ सदा ।

महद्भ्यां ३ महतोः रूपं वाक्ये स्वयं प्रयुङ्क्ष्व भोः ।

भवत्—सर्वनामशब्दोऽयम् ।

सर्वविभक्तिलाभार्थमकजर्थं तथा पूर्वपदप्रयोगार्थं सर्वनामसु पाठोऽस्य कृतः ।

भातेर्डवतु प्रत्ययः—डकारोकारयोरित्संज्ञा टिलोपेच कृते-भवत् ।

रूपदर्शनम्—

भवान् याति भवन्तौ स्तः भवन्तः सन्ति पण्डिताः ।
भवन्तं वै भवन्तौ च भवतः श्रावये कथाम् ॥
भवता च भवद्भ्याञ्च भवद्भिः सह यान्ति ते ।
भवते भवतश्चादि सरलं रूपमूह्यताम् ।
हे भवत् न प्रयोक्तव्यं संबुद्धिर्न त्यदादिषु ॥

अत्र विशेषः—

तद्धितमतुप्प्रत्ययान्तभगवद्-धनवद्—गुणवदादि, एवं कृदन्त क्तवतुप्रत्ययान्तगतवत् कृतवदादि च भवच्छब्दतुल्यं भवति शतृ-प्रत्ययान्तोऽपि एवमेव भवति, केवलं प्रथमैकवचनेऽत्र दीर्घो न भवति यथा गच्छन् पचन् चलन्नित्यादि प्रयुज्यते ।

भूभृत्—( राजा पर्वतो वा )

एकवचने— बहुवचने

भूभृत्कविर्महेन्द्रोऽभूत् भूभृतः पालने रताः ।
भूभृतं द्रष्टुमिच्छामि भूभृतः प्रणमन्ति ते ॥
भूभृता रक्ष्यते लोको भूभृद्भिः पाल्यते प्रजा ।
भूभृते आशिषं दत्वा भूभृद्भ्यः करमर्पयेत् ॥
भूभृतः सा नदी जाता भूभृद्भ्यः को न बिभ्यति ।
भूभृतः कठिनं चित्तं भूभृतां प्रीतिरस्थिरा ॥
भूभृति नैव विश्वासः भूभृत्सु नीतिमाश्रयेत् ।
रूपं द्विवचने प्रायः सरलं स्वयमूह्यताम् ॥

**समित्—( हवनकाष्ठम् )**

समित् भवति बिल्वस्य समिधौ समिधस्तरोः।
समिधं समिधौ होता समिधः प्रक्षिपन्ति ते ॥
समिधाऽथ समिद्भ्याञ्च समिद्भ्यो यतते मुनिः।
समिधो वह्निरुत्पन्नः समिधश्चयनं कुरु ॥
समिधि घृतमाधाय—हवनं कुरुते यतिः।
हे समित् समिधौ रूपं सम्बोधने प्रदर्शयेत् ॥

**ददत्**—ददातीति विग्रहे दाञो लटः शत्रादेशः शपःश्लुः द्वित्वमभ्यासकार्यं ह्रस्वश्च। श्नाभ्यस्तयोरात इत्याकारलोपश्चात्रजायते।

**विशेषकार्यम्—**

उभे अभ्यस्तम्। ६। १। ५

षाष्टद्वित्वप्रकरणे द्वित्वं यस्य विधीयते।
तदुभयं समुदितमभ्यस्तसंज्ञकं भवेत् ॥

नाभ्यस्ताच्छतुः। ७। १। ७८

नाभ्यस्तसंज्ञकादत्र शतुर्नुम् जायते ततः।
ददत् स ददतौ तौ च ददतः प्रथयन्ति ते ॥
ददतं नौमि ददतौ च ददतः प्रथयन्ति ते।
नुम्विधानं न कुत्रापि रूपेऽभ्यस्तपदे भवेत् ॥

**जक्षत्—**

जक्षित्यादयः षट्। ६। १। ६

जक्षित्यादय इत्यत्र शब्दाः सन्ति निपातिताः।
तेषामभ्यस्तसंज्ञा स्यात् तस्माद् द्वित्वादिकं नहि ॥
अभ्यस्तसंज्ञकानां हि द्वित्वं न जायते इह।
जक्षत् जाग्रद् दरिद्रच्च शासच्चकाशदित्यपि ॥
दीध्यद् वेव्यदिमे सप्त सरला भूभृदेव हि।
नुमागमो न चैतेषां जायतेऽभ्यस्तसंज्ञया ॥

**गुप्-शब्दः—**

गोपायतीति गुप्—गुपू रक्षणे तस्मात् क्विप् प्रत्ययः।

**रूपदर्शनम्—**

गुप् शोभते गुपौ भातः गुपः सन्ति दयालवः।
गुपं गुपौ गुपो नत्वा गुपा गुब्भ्यां सह व्रजेत् ॥
अजादिप्रत्यये पस्य विभक्त्या सह संस्थितिः।
हलादौ पस्य जश्त्वेन गुब्भ्यां गुब्भिरिति क्रमः
गुपि गुपोस्तथा गुप्सु वर्तस्व विनयेन वै ॥
पक्षे—अर्थात् गुप् धातोर्विच् प्रत्यये सति गोपापदं भवति।
गोपाः गोपौ च ते गोपाः प्रथमा रूपमुच्यते।
गोपां गोपौ प्रशंसामि गोपः कोऽपि न निन्दति।
विश्वपावद्भवेद्रूपं शसादावा विलुप्यति ॥

**तादृश्—**

स इव पश्यतीति विग्रहे तादृश् शब्दः—क्विनन्तः कञन्तश्च।

**अत्र विशेषकार्यम्—**

त्यदादिषु दृशोऽनालोचने कञ्च। ३। २। ६०

त्यदादिषूपपदेषु अज्ञानार्थदृशेश्च कञ्।
क्विन् प्रत्ययोऽपि जायेत यथायोग्यं प्रयुज्यताम् ॥

आ सर्वनाम्नः। ६। ३। ९१

आ सर्वनाम्न एतेन सर्वनामपदस्य च।
आत्वमन्त्यस्य जायेत दृग् दृशोश्च वतुप्परे ॥
तस्मात् तादृक् प्रयोगः स्यात् तावानादि च जायते।

**रूपदर्शनम्—**

तादृक् तादृगुभयं स्यात्–तादृशौ तादृशस्ततः।
तादृशं तादृशौ दृष्ट्वा तादृशः कथयामि किम् ॥
तादृशा सह तादृग्भ्यां-तादृग्भिः सुखतो व्रजेत्।
तादृ[४]शे तादृ[५]शः पश्चात् तादृ[६]शः तादृशोरिति ॥
ता[७]दृशि तादृशोः पश्चात् तादृक्षु सप्तमीपदम् ॥

कञन्त तादृशशब्दस्य तु रामवद्रूपं पठनीयम् ।

तादृशः तादृशौ रूपं तादृशाः पण्डिता इमे ॥
तादृशं तादृशौ प्रातः तादृशान् नौमि रामवत् ।
तादृशेन तृतीयायां तादृशाभ्यां च तादृशैः ॥

विश्—विशप्रवेशने धातुस्तस्मात् विशतीति विग्रहे विट् । व्रश्च-भ्रस्जेति षत्वमत्र पदान्ते झलि परे ।

रूपदर्शनम्—

विट् विड् विशौ विशः प्रोक्तं प्रथमायां क्रमेण वै ।
विशं विशौ विशः प्रोच्य विशा विड्भ्यां विशे विशः ॥
विशां विशि विशोः विट्सु विट्त्सु रूपं द्वयं सुपि ।

नश्यतीति नश्—

नशेर्वा । ८ । २ । ६३

नशेर्वा सूत्रतोऽन्त्यस्य कवर्गो वा विधीयते ।
पदान्ते तेन नक् नट् स्यात् नग्भ्यां नड्भ्यां द्विधापदम् ॥

रूपदर्शनम् —

नक् नड् वा अस्ति संसारो नशौ नशः नशं नशौ ।
नशः नशा तथा नग्भ्यां नड्भ्या हलि द्विधा पुनः ॥
सप्तम्यां सुपि रूपं स्यात् नक्षु नट्सु विचार्यताम् ।

घृतस्पृश्—घृतं स्पृशतीति विग्रहे क्विप् प्रत्ययः ।

स्पृशोऽनुदके क्विन् । ३ । २ । ५८

अनुदके सुप्युपपदे क्विन् प्रत्ययः स्पृशेरिह ।
तस्य सर्वापहारः स्यात् न किञ्चित् क्विनि तिष्ठति ॥
घृतस्पृक् प्रथमारूपं घृतस्पृशौ घृतस्पृशः ।
घृतस्पृशं घृतस्पृशौ घृतस्पृशः समाह्वय ॥
घृतस्पृशा घृतस्पृग्भ्यां घृतस्पृग्भिरिदं कृतम् ।
घृतस्पृहे घृतस्पृशः घृतस्पृक्षु विशेषता ॥

रत्नमुष्—( रत्नचौरः )

रत्नानि मुष्णातीति विग्रहः ।

रूपदर्शनम्—

रत्नमुट् रत्नमुषौ तौ रत्नमुषो वणिग्जनाः ।
रत्नमुषा तृतीयायां रत्नमुड्भ्यामिति क्रमात् ॥
हलादौ जश्त्वकार्येण षस्थाने ड प्रयुज्यते ।
रत्नमुट्सु तथा मुट्त्सु सुपि रूपं द्वयं वदेत् ॥

षष्-शब्दः । संख्यावाची बहुवचनान्त एव ।

अत्र ष्णान्ताः षडिति षट्संज्ञा जायते जश्शसोश्च लुग्भवति ।
षट् षट् षड्भिस्तथा षड्भ्यः षड्भ्यः षण्णामिति पुनः ।
षट्सु षट्त्सु सुपि प्रोक्तं द्वयं रूपं धुडागमात् ॥

परमाश्च ते षट् परमषट्—

परमषट् जसि रूपं स्यात् तथैव शसि कथ्यते ।
रूपं परमषड्भिः स्यात् न कुत्रापि विशेषता ॥

प्रियाः षट् येषां ते प्रियषषः, प्रियषषः, प्रियषड्भिः, प्रियषड्भ्यः, प्रियषड्भ्यः, प्रियषषाम्, प्रियषट्सु, प्रियषट्त्सु, गौणत्वात् षट्संज्ञादिकार्यं नात्र जायते ।

पिपठिष्—( पठितुमिच्छुर्जनः ) । अत्र विशेष कार्यम् ।

र्वोरुपधाया दीर्घ इकः । ८ । २ । ७६

रेफान्तस्य च वान्तस्य धातोर्या उपधा भवेत् ।
तत्रेको दीर्घ इष्येत पदान्ते पिपठीरिति ॥

नुम्विसर्जनीयशर्व्यवायेऽपि । ८ । ३ । ५८

नुमि शरि विसर्गे च व्यवायेऽपि क्वचित्स्थले ।
इण्कुभ्याञ्च परस्यात्र सस्य षत्वं विधीयते ॥
पिपठीष्षु भवेद्रूपं सप्तम्यां तत एव हि ।
हलादाविह सर्वत्र विभक्तौ षस्य रुर्भवेत् ॥
दीर्घकार्यं पुनस्तत्र सौ भ्यामादिपरेषु च ॥

रूपदर्शनम्—

पिपठीः स्यात् पिपठिषौ पिपठिषः पठन्ति ते ।
पिपठिषं पिपठिषौ पिपठिषः प्रशंसतु ॥
पिपठिषा पिपठीर्भ्यां पिपठीर्भिः स्थितं मठे ।
पिपठिषि पिपठीष्षु पिपठीःषु च सप्तमी ॥

चिकीर्ष्—

कर्तुमिच्छति चिकीर्षति— चिकीर्षतीति । चिकीः क्विप् प्रत्ययः ।

रूपदर्शनम्—

चिकीरेषः चिकीर्षौ तौ चिकीर्षः सन्ति ते जनाः ।
चिकीर्षं तं चिकीर्षौ तौ चिकीर्षस्तान् प्रशंसतु ॥
चिकीर्षाऽथ चिकीर्भ्याञ्च चिकीर्भिः सह तिष्ठतु ।
चिकीर्षे तु चतुर्थ्यां स्यात् चिकीर्भ्यामादि पूर्ववत् ॥
चिकीर्षु सुपि रूपं स्यात् दीर्घो र्वोरुपधाक्षरे ॥

दोषशब्दः ( भुजवाचकः )

दाम्यतीति दमेर्डो सिः प्रत्ययः टिश्च लुप्यति ।
दोषन्नादेश इष्येत पद्दन्नेति शसादिषु ॥
दोः दोषौ दोष इत्येवं प्रथमायां प्रवर्तते ।
दोषं दोषौ तथा दोष्णः, द्वितीयारूपमुच्यते ॥
दोष्णा दोर्भ्यां तथा दोर्भिः सप्तम्यां सुपि दोष्षु वै ॥

विविश्—

विशेः सन् प्रत्ययस्तत्र द्वित्वाभ्यासादि कार्यतः ।
षत्वं व्रश्चेति सूत्रेण जश्त्वे चर्त्वे विविट् पदम् ॥

रूपदर्शनम्—

स विविट् विविशौ तौ स्तः विविशश्चोरयन्ति ते ।
विविशं विविशौ दृष्ट्वा विविशस्तान् निवारयेत् ॥
विविशा च विविड्भ्यां हि विविड्भिः सह गच्छति ।
विविट्सु रूपमुच्चार्यं विविट्त्सु सप्तमी बहौ ॥

तक्ष् शब्दः ।

तक्ष त्वक्ष तनूकरणे, ताभ्यां क्विप् प्रत्यय, । स्कोः संयोगाद्योरन्ते चेति कस्य लोपः ।

रूपदर्शनम्—

तट् तड् तक्षौ जसि तक्षः तक्षं तक्षाविति क्रमः ।
तक्षा तड्भ्या भवेत् तड्भिः–तट्सु तटत्सु भवेत्सुपि ।।

त्वक्ष् शब्दः—

त्वट् त्वक्षौ त्वक्ष इत्यादि रूपं पूर्ववदेव च ।
त्वक्षं त्वक्षा तथा त्वड्भिः त्वट्सु त्वट्त्सु च सप्तमी ।।

अत्र तक्षि त्वक्षिण्यन्ताभ्यां क्विप् प्रत्यये तु तक् त्वक् इत्यादि ।
अस्मिन् पक्षे संयोगान्तस्य षस्यैव लोपो भवति ।
गां रक्षतीति गोरक्–गोरक्ष् शब्दः । स्कोरिति कस्य लोपः ।
गोरक् गोरक्षौ गोरक्षः गोरक्षं गोरक्षौ गोरक्षः ।
गोरक्षा-गोरग्भ्यां गोरग्भिरित्यादिरूपं बोध्यम् ।

पिपक्ष्—

पक्तुमिच्छतीति विग्रहे सन् सन्नन्ताच्च क्विप् । अत्र संयोगान्तलोपः ।

रूपदर्शनम्—

पिपगस्ति पिपक्षौ स्तः पिपक्षस्ते व्रजन्ति वै ।
पिपक्षं तं पिपक्षौ तौ पिपक्षस्तान् विलोकय ।।
पिपक्षाऽथ पिपग्भ्यां च पिपग्भिः सह गच्छति ।
पिपक्षु सप्तमीरूपं बह्वर्थे सुपि च परे ।।

वक्तुमिच्छति विवक्षति---विवक्षतीति विवक्ष् संयोगान्तलोपः ।

विवग् रूपं विवक्षौ च विवक्षः प्रथमापदे ।
सप्तम्यां सुपि रूपं स्याद् बिवक्षु तद्विचार्यताम् ।।

दिधक्ष्—

दिधक्षतीति विग्रहे क्विप् संयोगान्तलोपश्च ।
दिधक् रूपं दिधक्षौ च दिधक्षः प्रथमापदम् ॥
दिधक्षं स्यात् दिधक्षौ वै दिधक्षः कर्मकारके ।
दिधक्षाऽथ दिधग्भ्याञ्च दिधक्षु सप्तमी सुपि ॥

सुपिस्-शब्दः—सुष्ठु पेसतीति विग्रहः ।

स सुपीः सुपिसौ तौस्तः सुपिसः प्रथमापदे ।
सुपिसं सुपिसौ कर्मकारके सुपिसः पठेत् ॥
सुपिसाऽथ सुपीर्भ्याञ्च सुपीर्भीरादि पठ्यताम् ।
सान्तमहतसंयोगस्य सूत्रेणात्र च दीर्घता ॥

सुतुस् शब्दः—सुष्ठु तोसतीति विग्रहः । तुस्खण्डनेऽत्र धातुः ।

सुतूः स सुतुसौ तौ च सुतुसः काष्ठिकाः जनाः ।
सुतुसं सुतुसा रूपं सुतूर्भ्याञ्च सुतूर्षु च ॥

विद्वस् शब्दः—

वेत्तीति विद्वान्– विदेः शतुर्वसुरिति साधनमस्य ।

वसोः सम्प्रसारणम् । ६ । ४ । १३१

वस्वन्तस्य भसंज्ञस्य सम्प्रसारणमुर्भवेत् ।
पूर्वरूपं ततः षत्वं विदुषः विदुषादि च ॥

रूपदर्शनम्—

विद्वान् विद्वांसौ विद्वांसः प्र०, विद्वांसं विद्वांसौ विदुषः द्वि ।
विदुषा विद्वद्भ्यां विद्वद्भिः तृ० विदुषे विद्वद्भ्यां विद्वभ्यः च० ॥
विदुषः विद्वद्भ्यां विद्वद्भ्यः प० विदुषः विदुषोः विदुषाम् ष० ।
विदुषि विदुषोः विद्वत्सु स० हे विद्वन् इति सम्बोधनम् ॥

सेदिवस्—

भाषायां सद वस श्रुव इति लिटः क्वसुः । लिटिधातोरनभ्यासस्येति द्वित्वे हलादिः शेषे । अत एकहल्मध्ये इति एत्वाभ्यासलोपौ, वस्वेकाजामितीट् नुम् सान्तमहत इति दीर्घश्चात्र जायते ।

रूपसंग्रन्थनम्—

सेदिवान् सेदिवांसौ च सेदिवांसश्च ते जनाः ।
सेदिवांसं तथा सेदिवांसौ सेदुष उच्यते ॥
सेदुषा सेदिवद्भ्याञ्च सेदिवद्भिर्न श्रूयते ।
सेदुषे सेदुषश्चादि रूपाणि पठत क्रमात् ॥

सुहिन्स् शब्दः । सुष्ठुहिनस्तीति विग्रहः ।

रूपसंग्रन्थनम्—

सुहिन् अयं सुहिंसौ तौ सुहिंसः सैनिकाः जनाः ।
सुहिंसं तं सुहिंसौ तौ सुहिंसो निन्दयाम्यहम् ॥
सुहिंसा च सुहिन्भ्याञ्च सुहिन्भिः पीडचते जगत् ।
सुहिंसे न कृपाकार्या सुहिंसः पृथगस्म्यहम् ॥
सुहिंसो नहि विश्वासः सुहिंसि च दया नहि ।
सुहिन्त्सु सुपि सप्तम्यां तुगागमोऽत्र जायते ॥

ध्वंस् अवस्रंसनेऽस्मात् क्विप् प्रत्ययः । अत्र वसुस्रंसुध्वंस्विति दत्वं भवति पदान्ते ।

रूपम्—

ध्वत् ध्वद् ध्वसौ ध्वसः प्र० ध्वसं ध्वसौ ध्वसः द्वि० ।
ध्वसा ध्वद्भ्यां ध्वद्भिः तृ० ध्वसे ध्वद्भ्यां ध्वद्भ्यः च० ॥
ध्वसः ध्वद्भ्यां ध्वद्भ्यः प० ध्वसः ध्वसोः ध्वसाम् ष० ।
ध्वसि ध्वसोः ध्वस्सु स० ।

स्रंस्—

स्रत् स्रद् स्रसौ स्रसः प्र० स्रसं स्रसौ स्रसः द्वि० ।
स्रसा स्रद्भ्यां स्रद्भिः तृ० स्रसे स्रद्भ्यादि रूपं ज्ञेयम् ।

पुमस्—( पुरुषः )

पाते र्डुमसुन् प्रत्ययः । पूञो वा डुमसुन् जायते ।

पुंसोऽसुङ् । ७ । १ । ८९

पुंसोऽसुङ् स्यात् सदा सर्वनामस्थाने विवक्षिते ।
नुम् दीर्घादिविधानेन पुमान् रूपं सुसिद्धयति ॥

रूपदर्शनम्

पुमान् कीर्तिं करोत्येषः पुमांसौ गच्छतो बहिः।
पुमांसः सात्त्विका वीराः सन्तु तत्प्रार्थयाम्यहम् ॥
पुमांसं तं पुमांसौ तौ पुंसस्तानभिनन्दतु।
पुंसा पुंभ्याञ्च पुंभिश्च रक्ष्यन्ते निर्बलाः सदा ॥
पुंसे पुंभ्यां तथा पुंभ्यः क्रियते बहुरादरः।
पुंसः पुंभ्यां तथा पुंभ्यः विना न देशरक्षणम् ॥
पुंसः पुंसोस्तथा पुंसां वीरता दृढता गुणाः।
पुंसि पुंसोः तथा पुंसु विश्वसन्ति नरीषु न ॥
हे पुमन् हे पुमांसौ हे पुमांसः सदाऽवत ॥

हि० सारस्वतव्याकरणे सप्तम्यां सुपि पुंक्षु रूपमस्ति, तन्नेष्टं पाणिनीयानाम्।

उशनस्—( शुक्राचार्यः )

वशेः कनसीति सूत्रेण साध्यते। अत्र ऋदुशनससीत्यनङ् भवति

रूपदर्शनम्—

उशना स्यादुशनसौ प्रथमायामुशनसः।
उशनसमुशनसौ उशनसो नमाम्यहम् ॥
उशनसा उशनोभ्यामुशनोभिश्च रुत्वतः।
उशनसे उशनोभ्याम् उशनोभ्योऽत्ररुर्भवेत् ॥
उशनश्शब्द सम्बुद्धौ वाऽनङ् भवति तत्परम्।
नस्य लोपो विकल्पेन हे उशन उशनन् पुनः ॥
हे उशनः प्रयोगोऽपि जायते इति बुध्यताम्।

अनेहस् ( दिवसवाचकः )

अत्रात्वसन्तस्य चाधातोरिति दीर्घः।

रूपदर्शनम्—

अनेहाः शोभनोऽस्त्यत्र अनेहसौ गताषुभौ।
अनेहसः शुभाः प्रायः फाल्गुने सुखदायकाः ॥
अनेहसं द्वितीयायामनेहसौ अनेहसः।
अनेहसा अनेहोभ्याम् अनेहोभिरिति क्रमः।

भ्यांभिस्भ्यस्सुपि रुत्वंस्यादुत्वं गुणश्च जायते ॥
विभक्त्या सह संयोज्य रूपं भवत्यजादिषु ।

वेधस्—( ब्रह्मा )

अत्वसन्तस्य चाधातोः । ६ । ४ । १४

अत्वसन्तस्य चाधातोरिति सूत्रेण दीर्घता ।
वेधाः संसारकर्त्ताऽस्ति वेधसं वन्दते जनः ॥
वेधसा सृज्यते लोकः वेधसेऽस्तु सदा नमः ।
वेधसः कस्य भीतिर्न वेधसः पुष्करे सरः ॥
वेधसि न दयाभावः हे वेधः पाहि मां सदा ।
रुत्वमुत्वं गुणस्तस्माद् वेधोभ्यामादिकस्थले ॥

सुवस्—सुष्ठु वस्ते यः सः ।

सुवाः स सुवसौ तौ स्तः सुवसः प्रवदन्ति न ।
सुवसं सुवसौ पश्चात् सुवसस्तान् समाह्वयेत् ॥
सुवसा सुवसोभ्याञ्च सुवसोभिः सहैतु वै ।
सुवसे सुवसः पश्चात् सुवसि च सुवस्सु च ॥

प्रिण्डग्लस्—

पिण्डं ग्लसते यः स पिण्डग्लः । प्रेतः श्राद्धान्नभोक्ता वा ।

रूपदर्शनम्—

पिण्डग्रः केशवो विप्रः पिण्डग्रसौ उभौ इमौ ।
पिण्डग्रसः इह प्रेताः ब्राह्मणाः श्राद्धपूजकाः ॥
पिण्डग्रसं तथा पिण्डग्रसौ पिण्डग्रसः पठेत् ।
भ्यांभिस्भ्यस्सुरुत्वंस्यादुत्वं गुणश्च जायते ॥
पिण्डग्लस्—पिण्डान्ग्लसति स जनः ।
पिण्डग्लसः सदाश्राद्धे भवन्ति ब्राह्मणा इह ॥
पिण्डग्लसं तथा पिण्डग्लसौ पिण्डग्लसो नुमः ।
पिण्डग्लसा न भूयेत पिण्डग्लोभ्यामिति पुनः ॥
अजादि प्रत्ययेनात्र विभक्त्या सह सङ्गमः ।
हलादौ रुत्व, मुत्वंस्याद्गुणोऽपि क्रियते ततः ॥

**ज्यायस् कनीयस्—**

ज्यायान् यदा समायाति कनीयान् नन्तुमिच्छति ।
ज्यायांसं वन्दतां नित्यं कनीयांसं सुलालयेत् ॥
ज्यायसा दीयते द्रव्यं कनीयसा च नीयते ।
भ्यांभिस्भ्यस्सु भवेद्रुत्वं गुणश्च पूर्ववत् ॥

**अदस्—**

अदस औ सुलोपश्च । ७ । २ । १०७

अदस औ सुलोपश्च अत्वसत्वे भवेदसौ ।

एत ईद्बहुवचने । ८ । २ । ८१

अदसो दात् परस्यैतः ईद्भवेद् दस्य मस्तथा ।
बह्वर्थोक्तौ अमी रूपम् अमीभिः भिसि प्रत्यये ॥

**रूपदर्शनम्—**

असौ अमू अमी पश्चाद् अमुमम् अमूनिति ।

न मुने । ८ । २ । ३

नाभावे इह कर्तव्ये तृतीयायां कृतेऽपि वा ।
मुभावस्तु असिद्धः स्याद् अमुना टाविभक्तिके ॥
भ्यामि रूपममूभ्यां स्यादमीभिर्भिसि जायते ॥
अमुष्मै स्यादमूभ्याञ्च अमीभ्यस्तदनन्तरम् ॥
स्यादमुष्मादमूभ्याञ्च अमीभ्यः पञ्चमी बहौ ।
अमुष्य अमुयोः रूपम् अमीषामामि पठ्यते ॥
अमुष्मिन् अमुयोः पश्चादमीषु सप्तमीपदम् ।
औत्व प्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च । वा
साकचकस्य भवेदुत्वमौत्वं स्यादत्र पक्षतः ।
असुकः स्यात् तथा पक्षे रूपं स्यादसकाविति ॥
अदः पर्यायवाचित्वादमुकोऽपि प्रसिद्ध्यति ।
सुरेशझाकृतश्लोकसिद्धान्तकौमुदीकृतौ ॥
पुंलिङ्गा ये हलन्ता हि ते सर्वेऽत्र प्रदर्शिताः ।

॥ इति हलन्तपुंलिङ्गप्रकरणम् ॥

# अथ हलन्तस्त्रीलिङ्गप्रकरणम्

नहो धः । ८ २ । ३४ ।

नहो हस्य धकारः स्यात् पदान्ते झलि प्रत्यये ।

उपानह्—उपपूर्वात् नहेः संपदादित्वात् क्विप् प्रत्यये सति नहि वृतीत्यादिसूत्रेण पूर्वपदस्य दीर्घोऽनेन धत्वे ततश्चर्त्वेन उपानत् सिद्धयति ।

रूपसंग्रन्थनम्—

उपानत् स्यादुपानद् वा उपानहौ उपानहः ।
उपानहमुपानहौ उपानहस्तु शसि भवेत् ॥
उपानहा उपानद्भ्यामुपानद्भिः प्रताडनम् ।
उपानहे उपानद्भ्यामुपानद्भ्यः शुनीस्पृहा ॥
हलि सर्वत्र धत्वेन जशत्वं भवति बुध्यताम् ।
सुप्युपानत्सु रूपं स्याच्चर्त्वमप्यत्र जायते ॥

उष्णिह्—( शिरोवेष्टनवस्त्रम् )

उत्पूर्वकात् ष्णिह्धातोः—ऋत्विग्दधृगादिसूत्रेण क्विन् प्रत्ययः । निपातनाद् दलोपषत्वादिकृते उष्णिक् सिद्धयति ।

रूपदर्शनम्—

सा उष्णिक् उष्णिहौ तेऽपि उष्णिहः सन्ति मद्गृहे ।
उष्णिहमुष्णिहौ मित्र उष्णिहः परिधेहि भोः ॥
उष्णिहा शोभते विप्रः उष्णिग्भ्यां नैव शोभते ।
उष्णिहे उष्णिहः पश्चादुष्णिहः उष्णिहोरिति ॥
उष्णिहि उष्णिहोरेवमुष्णिक्षु सुपि कथ्यताम् ।

दिव्—(आकाशः) अत्र विशेषकार्यम्—

दिव औदिति सूत्रेण वस्य औत्वं च सौ परे ।
दिव उदिति सूत्रेण भ्यामादौ वस्य उत्वमिह ॥

रूपदर्शनम्—

द्यौः दिवौ च दिवः पश्चाद् दिवं दिवौ दिवस्ततः ।
दिवा द्युभ्यां द्युभिः सार्द्धं वसन्ति प्राणिनः सदा ॥
[४]दिवे दिवः[५] दिवः[६] पश्चाद् दिवि[७] सुपि द्युषु भवेत् ।

गिर्--(वाणी)

उपधासंज्ञकस्यात्र इको दीर्घश्च जायते ।
र्वोरुपधेति सूत्रेण हलादिसुपि प्रत्यये ॥

रूपदर्शनम्—

गीः गिरौ च गिरः पश्चाद् गिरं गिरौ गिरः स्मरेत् ।
गिरा गीर्भ्यां तथा गीर्भिः सज्जनानां सुखं सदा ॥
गिरे गीर्भ्यां तथा गीर्भ्यः गिरः गीर्भ्याञ्च पञ्चमी ।
गिरः गिरोः गिरां षष्ठी गिरि गिरोश्च गीर्षु इति ॥

पुर्—(नगरः)

रूपदर्शनम्—

पूः स्यात् पुरौ पुरः पश्चात् पुरं पुरौ पुरश्शसि ।
पुरा पूर्भ्यां ततः पूर्भिस्तृतीयायाञ्च दर्शयेत् ॥
पुरे[४] पुरः[५] पुरः[६] पश्चात् पुरि पूर्षु सुशोभताम् ।
हे पूः पुरौ पुरः संबोधनमेवञ्च दर्श्यताम् ॥

चतुर्—(संख्यावाची)

स्त्रियां तिसृ चतसृ स्यात् त्रिचतुरोः क्रमेण वै ।
चतस्रादेश इत्यत्र चतुरः क्रियते स्त्रियाम् ॥

रूपदर्शनम्—

चतस्रः कन्यकाः सन्ति चतस्रस्ताः समाह्वय ।
चतसृभिः कृता पूजा चतसृभ्यः सुखं भवेत् ॥
चतसृभ्यो भयं नास्ति चतसृणामियं शुभा ।
चतसृषु सदाचारो विप्रनारीषु दृश्यते ॥

सर्वादिगणीयः किमादिशब्दः—

किम्—

त्यदादीनाम इत्यस्मात् प्रथममत्वमत्र वै ।
ततो भवेदजाद्यतष्टाप् स्त्रीलिङ्गस्य विवक्षणे ॥

रूपदर्शनम्—

का के काः प्रथमारूपं कां के काः कर्मकारके ।
कया काभ्यां तथा काभिः सर्वावत् पठ्यतामिह ।।

इदम्—

यः सौ । ७ । २ । ११० ।

यः सौ सूत्रेण इदमो मस्य यः सौ परे स्त्रियाम् ।
एतावन्मात्रमेवात्र कार्यं भवति बुध्यताम् ।।

रूपम् -

इयम् इमे इमाः रूपम् इमामिमे इमास्ततः ।
[३]अनया सह आभ्याञ्च आभिः सुखी जनः सदा ।।
[४]अस्यै आभ्यां तथा आभ्यः अस्याः[५] अस्याः[६] तथाऽनयोः ।
आसामस्यां क्रमाज् ज्ञेयम् अनयोरासु सप्तमी ।।

त्यत्—

त्यदाद्यत्वं ततष्टाप् स्यात् तदोः सः सावनन्तयोः ।

रूपम्—

स्या त्ये त्याः प्रथमारूपं त्यां त्ये त्याः कर्मकारके ।
त्यया त्याभ्यां तथा त्याभिः त्यस्यै त्यस्याः क्रमेण च ।।

तत्—

सा ते ताः प्रथमारूपं तां ते ताश्च ततो भवेत् ।
तया ताभ्यां तथा ताभिः तृतीयायां निगद्यताम् ।।
तस्यै ङयि ङसौ तस्याः ङसि तस्याश्च पूर्ववत् ।
तयोः तासाञ्च ङा तस्या तयोः तासु च सप्तमी ।।

स्रज्—(माला)

ऋत्विग्दधृगिति सूत्रात् सृजेः क्विन् जायते ततः ।
अमादेशस्तु कार्यं स्यान्निपातनक्रियाबलात् ।।

रूपम्—

इयं स्रक् ते स्रजौ भातः स्रजः सन्ति मनोहराः ।
स्रजं स्रजौ स्रजः पश्य स्रजा स्रग्भ्यां स्रग्भिरिति ।।
स्रजे स्रजः स्रजः पश्चात् स्रजि स्रक्षु सुपि भवेत् ।
अजादौ नहि किञ्चित् स्यात् झलादौ हलि ग्भवेत् ।।

वाच्—(वाणी)

अत्र चोः कुरितिकुत्वं तस्माच्चस्य च कः स्मृतः ।।
सौ भ्यां भिस् भ्यस्सु कुत्वं स्यात्–सप्तम्यन्ते च क्षुश्रुतिः ।।

रूपम्—

वाक् वाग् प्रथमा सौ स्यात् वाचौ वाचः ततः परम् ।
वाचं वाचो शुभाः वाचः यच्छन्ति पण्डिता जनाः ।।
वाचा वाग्भ्यां तथा वाग्भिः प्रसीदामि बुधामिह ।
वाचे वाचस्तथा वाचः वाचि वाक्षु च सप्तमी ।।

अप्—( जल )

अप् जलं कथ्यते तस्य रूपं बहुषु केवलम् ।
तस्माज्जसि शसीत्यादि विभक्तौ रूपदर्शनम् ।।

अपोभिः । ७ । ४ । ४८ ।

अपः पस्य तकारः स्याद् भादौ भ्यां भिस् भ्यसि परे ।
अप्तृन्तृजादिसूत्रेण जसि दीर्घो भवेदिह ।।

रूपदर्शनम्—

आपः शुद्धाश्च गङ्गाया अपः पीत्वा पुनीहि ताः ।
अद्भिर्गात्राणि शुद्धयन्ति अद्भ्यः कूपान् खनन्ति ते ।।
अद्भ्यः स्नानं तृषानाशः अपां मरौ महार्घता ।
अप्सु मत्स्या न मज्जन्ति जीवन्ति शेरते सुखम् ।।

दिश्—( दिशा काष्ठा )

क्विन्नन्तात् कुत्वमत्र स्यात् पदान्ते झलि केवलम् ।

रूपदर्शनम्—

दिक् दिग् दिशौ दिशः पश्चाद् दिशं दिशौ दिशः पठेत् ।
दिशा दिग्भ्यां दिग्भिरेवं दिशे दिग्भ्यां क्रमेण वै ।।
हलादौ गयुतं रूपं सप्तम्यां सुपि दिक्षु च ।

दृश्—( नयनम् )

क्विन्नन्तात् कुत्वमत्रापि षडगका भवन्ति वै ।
कयुतं गयुतं रूपं प्रथमा सौ परे भवेत् ॥
भ्यामादौ गश्रुतिश्चात्र सुपि क्षु श्रूयते सदा ।
दृक् दृशौ च दृशः पूर्वं दृशं दृशौ दृशस्ततः ।
दृशा दृग्भ्यां तथा दृग्भिः तृतीयारूपमुच्यते ॥
दृशे दृशः दृशश्चैवं दिशि दृक्षु विचारय ।

त्विष्—( तेजः )

प्रथमा सौ परे एवं भ्यां भिस्भ्यस्सु विभक्तिषु ।
षस्य जश्त्वेन डकार्यं सुपि धुट् स्याद्विशेषतः ॥

रूपदर्शनम्—

त्विट् त्विड् त्विषौ त्विषः प्रायो गभस्तेः शोभनाः प्रियाः ।
त्विषं त्विषौ त्विषः सोढ्वा तपस्यन्ति च योगिनः ॥
त्विषा त्विड्भ्यां तथा त्विड्भिः भानुस्तापयते सदा ।
त्विषे त्विषः त्विषः पश्चात् त्विषि त्विट्त्सु सप्तमी ॥

सजुष्—( मित्रं, सेवको वा )

ससजुषोरुरिति सूत्रात् पदान्ते झलि च परे ।
षकारस्य भवेद्रुत्वं हलादि सुब्विभक्तिषु ॥

रूपम्—

प्रथमायां सजूः सौ स्यात् सजुषौ सजुषस्ततः ।
सजुषं पश्य सजुषौ सजुषः सुखयन्ति ते ॥
सजुषा सह सजूर्भ्यां सजूर्भिः प्रीतिरेधते ।
सजुषे सजुषः पश्चात् सजुषः सजुषामिति ॥
सजुषि सजुषोः सर्वे सजूःषु विश्वसन्ति ते ॥

आशिष्—( शुभाशंसनम् )

आशासः क्वावुपधाया इत्वमत्र विधीयते ।
शासिवसीति सूत्रेण षत्वमत्र विधीयते ॥

रूपम्--

आशीः सुखाय पूज्यानामाशिषं लभतां सदा ।
आशिषा वर्धते आयुराशिषे सेवतां गुरून् ॥
आशिषः शान्तिमाप्नोति आशिषः फलमद्भुतम् ।
आशिषि यजमानस्य यशोधनं विवर्धते ॥
भ्यामादौ सुपि आशीर्भ्यामाशीर्भिरादि कथ्यते ।
र्वोरुपधायाश्च दीर्घ आशीष्षु सुपि च पुनः ॥
आशीःषु इत्यपीहास्ति रूपं वाक्ये प्रयुज्यताम् ।

अदस् ।

असौ अमू अमूः पश्चादमूममू अमूरिति ।
अमुया सह अमूभ्याममूभिश्च गताः स्त्रियः ॥
अमुष्यै स्यादमुष्याश्च अमुष्या अमुयोरिति ।
अमूषामामि रूपं स्याद् ङावमुष्यां प्रयुज्यते ॥
अमूषु सुपि रूपं स्याद् अमूभ्यामूत्वमत्वतः ।
अमूभिश्च तथाऽमूभ्यः साध्यतामूत्वमत्वतः ।

इति हलन्तस्त्रीलिङ्गप्रकरणम् ।



# अथ हलन्तनपुंसकलिङ्गप्रकरणम्

स्वनडुहशब्दः । शोभनोऽनड्वान् यस्मिन् कुले तत् ।

अत्र विशेषकार्यम्—

वसुस्रंसुध्वंस्वनडुहां दः पदान्ते हलि परे ।
स्वनडुच्च स्वनडुही स्वनड्वांहि कुलानि वः ॥
स्वनडुत् तथा स्वनडुही स्वनड्वांहि निरीक्षताम् ।
स्वनडुहा स्वनडुद्भ्यां स्वनडुद्भिरिति क्रमात् ॥
स्वनडुहे स्वनडुहः स्वनडुत्सु सुपि भवेत् ।

विमलदिव्—

दिव उदिति सूत्रेण वस्य उत्वं पदान्तके ।
विमलद्यु विमलदिवी विमलदिवि च क्रमः ॥
एवमेव द्वितीयायां रूपस्य पठनं कुरु ।
विमलदिवा विमलद्युभ्याञ्च विमलद्युभिः ॥
विमलदिवे आदि सर्वं रूपं सरलमेव हि ।

अत्रोत्तरपदस्य त्वापदादिविधौ प्रतिषेध इति प्रत्ययलक्षणस्य निषेधात् विमलदिवीत्यत्र न उत्वम् । दधिसेचावित्यत्र तु प्रत्यय-लक्षणस्य सत्वात् षत्वनिषेधो जायत एवेति वस्तुविवेकः ।

वार्-शब्दः—(जलवाची)

वाः वारी वारि वर्तन्ते वा वारी वारि आनय ।
वारा वार्भ्यां तथा वार्भिः स्नानं गण्डूषमादि च ॥
वारे वार्भ्यां तथा वार्भ्यः कूपं खनति मानवः ।
वारः वारः वारि वाःसु पञ्चम्यादौ क्रमेण च ॥

किम्—(सर्वनाम)

त्यदादीनाम इत्यत्वं स्वमोर्लुगिति लुग् भवेत् ।

रूपदर्शनम्—

किं के कानि प्रथमायां द्वितीयायां तथैव च।
केन काभ्याञ्च कैरुक्तं कस्मै काभ्यां केभ्य इति॥
कस्मात् काभ्यां भवेत् केभ्यः सर्वमग्रेऽस्ति सर्ववत्।

इदम्—

इदम् इमे इमानीति प्रथमावत् ततः परम्।
अनेनाभ्यामेभिरादि पुंलिङ्गसदृशं वदेत्॥

एतत्—

अन्वादेशे नपुंसके एनद्वक्तव्यः। वा।
एतदस्तु भवेदेनद् अन्वादेशे नपुंसके॥
एनदेनेन एनानि एनेन एनयोरिति।
अम्येवेदं विधीयेत न त्वौट्शसादिप्रत्यये॥
फलाभावादिति प्रोक्तं दृश्यतां तत्त्वबोधिनी।

ब्रह्मन्—

ब्रह्म तद् ब्रह्मणी ते स्तः ब्रह्माणि तानि सन्ति वै।
प्रथमायां द्वितीयायां तुल्यं रूपं नपुंसके॥
ब्रह्मणा खलु ब्रह्मभ्यां ब्रह्मभिः क्रियते जगत्।
ब्रह्मणे ब्रह्मणश्चादौ नस्य णत्वं विधाय च॥
विभक्त्यचा तु संयोज्य रूपमत्र प्रदर्शयेत्।
हलादौ नस्य लोपः स्याद् ब्रह्मभ्यामादितः सदा॥

अहन्—

अहन्। ८। २। ६८।

अत्राहन्निति सूत्रेण पदान्ते नस्य रुः सदा।

रूपदर्शनम्—

अहः सूर्योदये ख्यातं द्वे अह्नी अहनी मम।
अहानि तानि सर्वाणि शोभनानि घनात्यये॥

अह्ना एकेन कार्यं स्याद् अहोभ्याञ्च समाप्स्यति ।
अहोभिर्बहुभिः प्रायश्चान्द्रायणव्रतं भवेत् ॥
अह्ने अह्नस्तथाऽह्नश्च अह्नि अहनि अहःसु च ।

दीर्घाहन्—

तदन्तस्यापि रत्वं स्याद्रुत्वं दीर्घाहनि पदे ।
दीर्घाहा मास एषोऽस्ति दीर्घाहानौ ततः परम ॥
दीर्घाह्नारूपमित्येवं दीर्घाहोभ्यामिति ततः ।
हे दीर्घाहो निदाघेति सम्बुद्धौ रूपमुच्यताम् ॥

दण्डिन्—

दण्डि अस्ति दण्डनी स्तः सन्ति दण्डीनि कथ्यताम् ।
दण्डि वा दण्डिनी दृष्ट्वा दण्डीनि प्रणमेज्जनः ॥
दण्डिना सह दण्डिभ्यां दण्डिभिः शोभते पुरम् ।
दण्डिने आदि रूपाणि सरलान्येव सन्ति वै ।

स्रग्विन्—(मालावत्)

स्रग्वि च स्रग्विणी रूपं स्रग्वीणि जसि कथ्यते ।
स्रग्विणा सह स्रग्विभ्यां स्रग्विभिः शोभते सभा ॥

वाग्मिन्—

इदं वाग्मि वाग्मिनी ते वाग्मीनि विलसन्ति च ।
एतादृशं द्वितीयायामपि रूपं प्रदर्शयेत् ॥
वाग्मिना सह वाग्मिभ्यां वाग्मिभिः शोभते सभा।
वाग्मिने वाग्मिन आदि रूपं सरलमस्ति वै ॥
कुलानि बहुवृत्रहाणि बहुपूषाणि च पुनः ।
बह्वर्यमाणि रूपाणि क्लीबे ज्ञेयानि जश्शसोः ॥

सुपथिन्—

सुपथि च सुपथिनी सुपन्थानि वने नहि ।
सुपथि च सुपथिनी सुपन्थानि समाश्रयेत् ॥
सुपथिना सुपथिभ्यां सुपथिभिश्चलेत् सदा ।
सुपथिने सुपथिनः सर्वं सरलमेव हि ॥

**असृज्—**

अस्यतेरौणादिके ऋच्-प्रत्यये सति सिद्ध्यतीदम् ।
इदमसृक् असृजीते असृञ्जि तानि सन्ति वै ॥
पुनरसृगसृजीति असानि शसि कथ्यताम् ।
पद्दन्नोमासिति सूत्रादसृजोऽसन्निति भवेत् ॥
शसादि प्रत्यये तस्माद् द्वे द्वे रूपे भविष्यतः ।
अस्ना पक्षेऽसनारूपमसभ्यामसृगन्वितम् ॥
असभिः स्यादसृग्भिश्च अस्ने स्यादसृजे पुनः ।

**ऊर्ज्—**

ऊर्क् ऊर्ग् ऊर्जौ पश्चात्-ऊर्न्जि ऊर्जि जसि भवेत् ।
संयोगो नरजानाञ्च पक्षे भवति जश्शसोः ॥
अन्त्यात्पूर्वोऽत्रनुम् वा स्याद् वार्त्तिकं वर्तते यतः । वा० ।
ऊर्जा ऊर्भ्यां क्रमेणोक्त्वा सुप्यूर्क्षु रूपमुच्यते ॥

**बहूर्ज्—**

बहूर्क् बहूर्जौ बहूर्जि बहूर्न्जि पठ्यतां क्रमात् ।
एवमेव द्वितीयायां बहूर्जा आदि टादितः ॥

**तिर्यञ्च्—**

तिर्यक् तिर्यग् च तिर्यञ्चौ तिर्यञ्चि प्रथमापदम् ।
तिरश्चा सह तिर्यग्भ्यां तिर्यग्भिः खेलतीह सः ॥
तिरश्चे आदि सर्वत्र तिरेस्तिरो विधीयते ।
पूजायामस्य तिर्यङ् स्यात् तिर्यञ्चौ तिर्यञ्चि च ॥
पठनीयं विचार्यैव नस्य लोपो न पूजने ।

**गाम् अञ्चतीति विग्रहे गवाक्—**

गवाक् शब्दस्य रूपाणि क्वीबेऽर्चागतिभेदतः ।
असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतम् १०९ मतम् ॥

**तद्यथा प्रथमाविभक्तौ—**

गवाक् गवाग् गोअक् गोअग् गोक् गोग् । गवाङ् गोअङ् गोङ् । गोची गवाञ्ची गो-अञ्चि गोऽञ्ची । गवाञ्चि गो-अञ्चि गोऽञ्चि । एवमेव द्वितीयायामपि रूपाणि भवन्ति ।

३—गोचा गवाञ्चा गो-अञ्चा गोऽञ्चा। गवाग्भ्यां गो-अग्भ्यां गोऽभ्याम्। गवाङ्भ्यां गो-अङ्भ्यां गोऽङ्भ्याम्। गवाग्भिः गो-अग्भिः गोऽग्भिः, गवाङ्भिः गो-अङ्भिः गोऽङ्भिः।

४—गोचे गवाञ्चे गो-अञ्चे गोऽञ्चे। गवाग्भ्यां गो-अग्भ्यां गोऽग्भ्याम्। गवाङ्भ्यां गो-अङ्भ्यां गोङ्भ्याम्। गवाग्भ्यः गो-अग्भ्यः गोऽग्भ्यः, गवाङ्भ्यः गोअङ्भ्यः गोऽङ्भ्यः,

५— गोचः गवाञ्चः गो-अञ्चः गोऽञ्चः। भ्यामि भ्यसि पूर्ववत्।

६—गोचः गवाञ्च गो-अञ्च गोऽञ्चः। गोचोः गवाञ्चोः गो-अञ्चोः गोऽञ्चोः। गोचां गवाञ्चां गो-अञ्चां गोऽञ्चाम्।

७—गोचि गवाञ्चि गो-अञ्चि गोऽञ्चि। गोचोः गवाञ्चोः गो-अञ्चोः गोऽञ्चोः। गवाङ्क्षु गो-अङ्क्षु गोऽङ्क्षु, गवाङ्षु गो-अङ्षु गोऽङ्षु गवाक्षु गो-अक्षु गोऽक्षु।

९—स्वम्सुप्सु नवषट्भादौ षट्के स्युस्त्रीणि जश्शसोः।
चत्वारि शेषे दशके रूपाणीति विभावय॥

अत्र विशेषवस्तु—कुक्पक्षे तु तस्यासिद्धत्वाज्जश्त्वाभावे पक्षे द्वितीयादेशात् त्रीणि रूपाणि वर्धन्ते एव।

एवं त्रयाणामाधिक्यसंभवात् सुपि द्वादशरूपाणि भवन्तीति संकलनया द्वादशाधिकशतं मतमित्युचितम्।

ऊह्यमेषां द्विर्वचनानुनासिकविकल्पनात्।
रूपाण्यश्वाक्षि भूतानि ५२७ भवन्तीति मनीषिभिः॥

तत्—( आदिसर्वनाम )

स्वमोर्लुक् क्रियते क्लीबे त्यदादीनाम इत्यपि।
अन्यकार्याणि पूर्वत्र दर्शितान्यत्र चापि स्युः॥

रूपम्—

तत् ते तानि च रूपाणि तत् ते तानि पुनः पठेत्।
तेन ताभ्याञ्च तैरादि पुंवदेव पठेत् क्रमात्॥

त्यत्—( तदर्थक एव )

त्यत् त्ये त्यानि समुच्चार्यं त्यत् त्ये त्यानि तादृशम् ।
त्येन त्याभ्यां तथा त्यैश्च त्यस्मै त्यस्मात् पुंलिङ्गवत् ॥

एतत् —

एतत् एते च एतानि द्वितीयारूपमीदृशम् ।
एतेन खलु एताभ्याम् एतैरादि पुंलिङ्गवत् ॥

शकृत्—( पुरीषम् )

शकृत् शकृद् शकृती च जसि शकृन्ति शकानि च ।
शक्ना च शकृता रूपं शकृद्भ्यामादि पठ्यताम् ॥
शक्ने ङयि शकृते च शक्नः शकृत इत्यपि ।
द्वे द्वे रूपे शसादौ स्तः हलादावेकमेव च ।

यकृत्—( प्लीहारोगः )

यकृत् यकृती यकृन्तीति पद्दन्निति च वा यकन् ।
यकानि शसि पक्षेऽत्र यक्ना टायाञ्च यकृता ॥

ददत्—अत्र विशेषकार्यम्—

वा नपुंसकस्य । ७ । १ । ७९ ।

नपुंसके च अभ्यस्ते शत्रन्ते नुम् विभाषया ।
जश्शसोः सर्वनामस्थाने ददन्ति ददति च ॥
ददत् स्यादेकवचने ददती द्वित्वबोधने ।
जसि ददन्ति ददति द्वितीयायामपीदृशम् ॥
ददता च ददद्भ्याञ्च ददद्भिरादि पठ्यताम् ।

तुदत्—(शतृप्रत्ययान्तः)

आच्छीनद्योर्नुम् । ७ । १ । ८० ।

अवर्णान्ताच्च अङ्गात् परश्चेच्छतृप्रत्ययः ।
तदन्तस्य विभाषा नुम् तुदन्ती तुदती पुनः ॥
भात्—भा धातोः शतृ प्रत्ययः स्वमोर्लुक् ।
भात् भाद् भान्ती भाती जसि भान्ति इति वदेत् ॥

पुनस्तद्वद् द्वितीयायां भाता भाद्भ्यामिति क्रमः ।

पचत्—

शप्श्यनोर्नित्यम् । ७ । १ । ८१ ।

शीनद्योः परतश्चैवं शप्श्यनोरात्परस्य वै ।
शत्रन्तस्य च नुम् नित्यं पचन्तीत्यादि तेन हि ॥

रूपम् —

पचत् पचद् पचन्ती च पचन्ति क्रमशः पठेत् ।
[३]पचता पचते[४] पश्चात् [५]पचतः[६] पचति[७] क्रमः ॥
व्यञ्जनादि विभक्तौ तु पचद्भ्यामादि जायते ।

दीव्यत्—

दीव्यत् रूपञ्च दीव्यन्ती दीव्यन्ति जसि पठ्यते ।
दीव्यता सह दीव्यद्भ्यां दीव्यद्भिर्न वसेत् क्वचित् ॥
दीव्यते दीव्यतश्चादिरूपं सरलमेव हि ।

कर्मन् – (भाग्यं क्रियावस्तु वा)

रूपम्—

कर्म स्यात् कर्मणी पश्चात् कर्माणि जसि च पठेत् ।
प्रथमावद् द्वितीयायां कर्मणा कर्मणे इति ॥
भ्यामादौ नस्य लोपः स्यादजादौ न विशेषता ।
हे कर्मन् कर्मसंबुद्धौ रूपद्वयं नपुंसके ॥

नामन्—(संज्ञा)

नाम किं तव हे भ्रातः नाम्नी च नामनी वद ।
नामानि कानि एतेषां बालानां तानि मे वद ॥
नाम्ना परिचितो नेता नाम्ने स यतते सदा ।
नाम्नः पापानि नश्यन्ति हरेर्नाम्नः फलं महत् ।
नाम्नि नामनि रामस्य विश्वसन्ति महर्षयः ।
हलादौ नस्य लोपः स्याद् नामभ्यामादि जायते ॥
संबुद्धौ नस्य लोपो न हे नामन् कथ्यतामिह ।

शर्मन् धामन् तथा वर्मन् चर्मन् आदि च नामवत् ।
तद्रूपं सर्वथा नामशब्दवत् पठ्यतामिह ॥

स्वप्—(सरः)। शोभना आपो यस्मिन् तत्। अप्तृन्निति सूत्रेण दीर्घो भवतीति विशेषता। प्रतिपदोक्तत्वाद् यदा नुम् भवति तदापि दीर्घः। भ्यांभिस्भ्यस्सु -अपोभिः —सूत्रेण पकारस्य तकारोऽपि जायते।

रूपदर्शनम्—

स्वप् स्वपी स्वाम्पि स्वम्पि द्वितीयायामपीदृशम् ।
स्वपा स्वद्भ्यां स्वद्भिरेवं स्वपे स्वद्भ्यां स्वद्भ्य इति ॥
स्वपः स्वद्भ्यां तथा स्वद्भ्यः स्वपः स्वपोः स्वपामिति ।
स्वपि स्वपोः तथा स्वप्सु हे स्वप् स्वपी स्वाम्पि स्वम्पि ॥

धनुष्—

अत्र जसि शसि च सान्तमहत्संयोगस्येति दीर्घोऽपि जायते ।

रूपदर्शनम्—

धनुः प्रियं प्रतापस्य धनूंषि सन्ति मद्गृहे ।
धनुः शम्भोर्नमन् रामः धनूंषि कत्यभञ्जयत् ॥
धनुषा हन्यते शत्रुः धनुर्भिर्हन्यते रिपुः ।
धनुषेऽथ धनुर्भ्याञ्च धनुर्भ्यः स्पृहयन्ति ते ॥
धनुषः पतितो बाणः धनुर्भ्यः पतिताः शराः ।
धनुषः धनुषोः शब्दः धनुषाञ्च भयप्रदः ॥
धनुषि धनुषोश्चैवं धनुःषु द्रोणकौशलम् ।
हे धनुः त्वञ्च वीराणां भूषणं जीवनं धनम् ॥

चक्षुष्—( नेत्रवाची )

अत्र–चष्टे इति विग्रहे चक्षेः पिच्च चादुसि ।

रूपम्—

एकं चक्षुर्न कस्यास्तु चक्षुषी भवतः सदा ।
चक्षूंषि त्रीणि श्रीशम्भोः सहस्रन्तु शचीपतेः ॥
चक्षुषा पश्य चक्षुर्भ्यां चक्षुर्भिः सर्वदा प्रभोः ।
चक्षुषे चक्षुषश्चादिरूपं पठ विचार्य च ॥

हविष्—( हवनसामग्री, घृतञ्च )

हविः प्रियञ्च देवस्य हविषी च हवींषि च।
हविर्भुङ्क्ते च हविषी हवींषि देवता सदा॥
हविषाऽथ हविर्भ्याञ्च हविर्भिरेधतेऽनलः।
हविषेऽथ हविर्भ्याञ्च हविर्भ्यो यतते जनः॥
हविषश्च हविर्भ्यां च हविर्भ्यस्तृप्तिरस्ति मे।
हविषः हविषोः प्रायः हविषां भोजने सुखम्॥
हविषि हविषोः पक्वं हविष्षु राजभोजनम्।
हे हविः प्रत्यहं देहि दर्शनं भोजने मम॥

सर्पिष्—( घृतम् )

सुपेरिस् प्रत्यय इकारस्येत्संज्ञा गुणे च कृते सिद्धिः।
रूपम्–सर्पिः प्रियं बलं रुच्यं सर्पिषी सर्पींषि च।
सर्पिः किञ्चित् सर्पिषी वा सर्पींषि देहि खादितुम्॥
सर्पिषा मधुसर्पिर्भ्यां समं घृतं विषं भवेत्॥
सर्पिषे यतते भोक्ता सर्पिष्षु स्नेहवानहम्॥

पिपठिष्–

स्यात् पिपठीः पिपठिषी पिपठिषि कुलानि वः।
अत्र अल्लोपस्य भवेत् स्थानिवत्त्वं तस्मान्न नुम् भवेत्॥
स्वविधौ स्थानिवत्त्वं न ततोऽजन्तकृतोऽपि न।
पिपठिषा पिपठीर्भ्यां पिपठीर्भिः सुशोभते॥
पिपठीष्षु रूपं सुपि पठनीयं विचार्य च।

अर्चिष्—

अर्चिः सूर्यस्य प्रख्यातमर्चिषी अर्चींषि च।
अर्चिषा च तथाऽर्चिर्भ्यामर्चिर्भिस्तप्यते बहु॥
अर्चिषे अर्चिषः पश्चादर्चिषि अर्चिष्षु सुपि।

तपस्—

प्रथमायां द्वितीयायां तपः तपसी तपांसि च।
तपसा च तपोभ्यां हि तपोभिर्वर्धते जनः॥
तपसेऽथ तपोभ्यां हि तपोभ्यः स्पृहयाम्यहम्।
तपसस्तथा तपोभ्यां तपोभ्यः पृथगस्तु न॥

तपसः तपसोरेवं तपसां वर्धनं कुरु ।
तपसि तपसोर्मित्र तपस्सु यत्नवान् भव ।।

**पयस्—**

प्रथमायां पयः पयसी पयांसि रूपमुच्यते ।
पयः पयसी पयांसीति द्वितीयायामपीदृशम् ।।
पयसा च पयोभ्याञ्च पयोभिर्भोजनं शुभम् ।
पयसे पयसः पश्चात् सुपि पयस्सु उच्यते ।।
हलादौ सस्य रुत्वं स्यादुत्वं गुणश्च जायते ।
अजादिप्रत्ययेनात्र सस्य सम्मेलनं भवेत् ।।

**मनस्—**

मनः प्रसन्नं प्रियदर्शनेन मनः सदा मे व्यथयन्ति शत्रवः ।
स्वकीयकार्यं मनसा कुरुध्वं त्वमेव सौम्यो मनसेऽतिरोचसे ।।
न त्वं पृथङ् मे मनसः कदापि रुणद्धि चेतो मनसः स पण्डितः ।
महाजनानां मनसि प्रमोदः त्वं हे मनः चञ्चलतां विमुञ्च ।।

**सुपुंस्—**

सुपुं कुलं रघोरस्ति सुपुंसी सुपुमांसि च ।
सुपुंसा च सुपुंभ्यां वै सुपुंभिः शोभते पुरम् ।।
सुपुंसेऽथ सुपुंसश्च सुपुंसश्च सुपुंसि च ।
सुपुंसु तेषु सर्वेषां विश्वासो जायते त्वरित् ।।

**अदस्—**

प्रथमायामत्र रूपम् अदः अमू अमूनि वै ।
द्वितीयारूपमप्येवम् अदः अमू अमूनि च ।।
अमुना च अमूभ्याञ्च अमीभिः पुंवदेव हि ।
अमुष्मै ङयि अमूभ्याममीभ्यः पूर्ववद् भवेत् ।।
अमुष्मात् स्यादमूभ्याममीभ्यः पञ्चमीपदम् ।
अमुष्य अमुयोः पश्चादमीषामिति पठ्यताम् ।।
अमुष्मिन् अमुयोरेवममीषु सप्तमीपदम् ।

इति हलन्तनपुंसकलिङ्गप्रकरणम् ।



# अथाऽव्ययप्रकरणम्

स्वरादिनिपातमव्ययम् । १ । १ । ३७

स्वरादयो निपाताश्च भवन्त्यव्ययसंज्ञकाः ।
त्रिषु लिङ्गेषु तुल्यास्ते विभक्तिवचनैर्विना ॥
पादपूर्त्यै विशिष्टार्थे वाक्यालङ्कारहेतवे ।
अव्ययानां प्रयोगस्तु जायते गद्यपद्ययोः ॥
स्वरादिगणशब्दोऽपि भवेदव्ययसंज्ञकः ।
स्वरन्तः प्रातरुच्चैर्नीचैः शनैः पृथक् पुनः ॥
सनुतर्युगपद् आराद् ईषदृते चिरं दिवा ।
ह्यस् सायं मनाक् ईषत् जोषं श्वः समया बहिः ।
निकषाऽवस् स्वयं नक्तं नञ् हेतौ अद्धा वृथा ॥
इद्धा तूष्णीं सामिवत् ब्राह्मणवत् क्षत्रियवत् ॥
सनत् सनात् सना ज्योकम् अन्तरा उपजा तिरः ।
अन्तरेण विना शम् कम् सहसा स्वस्ति अस्ति धिक् ॥
अलं स्वधा क्षमा मिथ्या श्रौषट् वौषट् वषट् मृषा ।
अन्यत् विहायसा दोषा नानोपांशु माङ्गिति ॥
मिथो मिथस् आर्यहलम् मुधा पुरा प्रबाहुकम् ।
मुहुः प्रायः नमः साकं सार्द्धपश्चादथो अथ ॥
अमाम् हिरुगभीक्ष्णं प्रताम् प्रशाम् प्रशानिति ।
आकृत्या गणनीयोऽयमन्योऽव्ययः स्वरादिषु ॥
पण्डितानां प्रयोगेण ज्ञातव्यः काव्यशास्त्रयोः ।

गणसूत्रम्—उपसर्गविभक्तिस्वरप्रतिरूपकाश्च ।

उपसर्गसदृशः शब्दाः सुब्विभक्त्यन्तसदृशः ।
तिङन्तसदृशश्चापि स्वरस्य सदृशोऽव्ययाः ॥

एषां क्रमश उदाहरणम्—

अवदत्तमहंयुश्च अस्ति क्षीरा अ आ इ ई ।
चादयो निपातसंज्ञकाव्ययसंज्ञकाः ॥

च वा अह एव एवं नूनं शश्वत् क्वचित् कुवित् ।
युगपत् चण नुम् कच्चित् सूपत् तथापि ओम् ॥
किञ्चिद् भूयो यत्र तत्र माकिम् माकिः नकिं नकिः ।
नह माङ् नञ् स्वधा स्वाहा यावत् तावत् सुष्ठु अथ ॥
त्वैं द्वैं न्वैं श्रौषड् वौषड् रैं स्म खलु किल अथो ।
नेत् चेत् आदह अन्ये यथाकथा च पशु शुकम् ॥
पाट् प्याट् है हे अङ्ग यत् भो अये द्य तथैव च ।
विषु एकपदे आतः चादेरप्याकृतितो ग्रहः ॥

तद्धितश्चासर्वविभक्तिः १ । १ । ३८

यस्मात् सर्वा विभक्तिर्न तद्धितान्तोऽप्ययं भवेत् ।

अत्र परिगणनम्—

तसिलादिः पाशपः प्राक् शसादिरासमासान्तात् ।
अम् आम् कृत्वोऽर्थाश्च ना नाञौ च तसि वती ॥
प्रत्ययाः परिगणिता भवन्त्यव्ययसंज्ञकाः ।

कृन्मेजन्तः । १ । १ ३९

कृत्प्रत्ययेषु ये मान्ता एजन्ता वा भवन्ति ये ।
तदन्तानामव्ययत्वं जायते तत्र लुक् सुपाम् ॥
स्मारं स्मारं जीवसे च पिबध्यै भादिषु सदा ।
सुब्विभक्तेस्तु लोपोऽस्ति कृन्मेजन्तपदेषु च ॥

क्त्वातो सुन्कसुनः । १ । १ । ४०

क्त्वातोसुन् प्रत्ययो यत्र कसुन् वा धातुतो भवेत् ।
तत्राप्यव्ययसंज्ञा स्यात् ततो लोपः सुपां भवेत् ॥

उदाहरणम्—

उदेतोर्विसृपः कृत्वा क्रमेणोदाहरेदिह ।

अव्ययीभावश्च । १ । १ । ४१

समासोऽव्ययीभावो यत्रास्ति अव्ययस्तु सः ।
अधिहरि अनुविष्णु यथाशक्ति सहरि च ॥
अदन्तादव्ययीभावात् सुपां लोपो न जायते ।
अमादेशादुपदिशम् उपकुम्भं प्रयुज्यते ॥

अव्ययादाप्सुपः । २ । ४ । ८२

अव्ययाद्विहितस्यापः सुपां लोपश्च जायते ।
शालायां तत्र वस्तव्यं तत्र शब्दात् सुपश्च लुक् ॥

अव्ययाद्विहितस्यैव लोपः स्यान्नाव्ययान्ततः ।
अत्युच्चै सौ पदे तस्माल्लोपो नानेन जायते ॥

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपश्चैव हलन्तानां यथा वाचा निशा दिशा ॥

वगाहोऽवगाहश्च पिधानमपिधानकम् ।
विनार्थेऽस्त्यन्तरा मध्ये आन्तरेणेति वर्जने ॥

ज्योक्शब्दः कालभूयस्त्वे प्रश्ने शीघ्रेऽपि कथ्यते ।
कं सुखे वारिमूर्ध्नोः शं सुखे च प्रयुज्यते ॥

आकस्मिकाविमर्शेऽत्र सहसाशब्द उच्यते ।
वर्जनेऽस्ति विना शब्दो नानाऽनेकविनार्थयोः ॥

वह्नौ क्वापि हविर्दाने स्वाहाशब्दः प्रयुज्यते ।
मङ्गले स्वस्ति वक्तव्यं पितृदाने स्वधा भवेत् ॥

अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ।
श्रौषट् वौषट् हविर्दाने वषट्शब्दोऽपि कथ्यते ॥

अस्तिप्रयोगः सत्तायां क्षमा क्षान्तौ प्रयुज्यते ।
अप्रकाशे रहस्ये च उच्चारणे उपांशु वै ॥

दोषा रात्रौ मुधाऽत्यर्थे आकाशेऽस्ति विहायसा ।
वितथे च मृषा मिथ्या चिरातीते पुरा भवेत् ॥

प्रायःशब्दस्तु बाहुल्ये पुनरर्थे मुहुर्भवेत् ।
समानकाले ऊर्ध्वार्थे प्रवाहकं निगद्यते ॥

आर्यहलं बलात्कारे साकं सार्द्धं सहार्थकम् ।
पौनःपुन्येऽस्त्यभीक्ष्णं नमस्कारे नमःपदम् ॥

इ ई उ ऊ ए ऐ ओ औ पाट् प्याट् है हे अवे च भोः ।
सम्बोधने स्वराश्चैते योजनीया बुधैः सदा ॥
वर्जनेऽस्ति हिरुक् शब्दो धिक् निन्दायां प्रयुज्यते ।
अम् शैघ्र्ये स्वल्पे वाच्यं स्वीकृतौ आम् प्रयुज्यते ॥

प्रताम् ग्लानौ प्रयुञ्जीत विस्तारे च प्रतानिति ।
प्रशान् वाच्यं समानार्थे निषेधे मा प्रयुज्यते ।
स्वाच्छन्द्ये काममित्युक्तं प्रकाममतिशयार्थकम् ॥

पुनरर्थे भवेद् भूयः न्याय्ये साम्प्रतमुच्यते ।
किन्त्वर्थे परमित्युक्तं साक्षात् प्रत्यक्षबोधकम् ॥

तिर्यगर्थे साक्षिशब्दः शैघ्र्ये आशु च मंक्षु च ।
संवद् वर्षे उषा रात्रौ स्वीकारे ओमिति वदेत् ॥

भूः पृथिव्यां भुवोऽन्तरिक्षे प्रयुञ्जीत कोविदः ।
शैघ्र्ये तु तरसा शब्दः झटिति झगिति तथा ॥

सुः पूजाधाश्च निन्द्ये कुः अञ्जसा तत्त्वशीघ्रयोः ।
विनाशार्थकमलं स्यात् स्थाने युक्तार्थवाचकम् ।
वरं स्यादीषदुक्तार्थे सुदि शुक्ले कृष्णे वदि ॥

हा दुःखार्थे प्रसिद्धौ च एवमनुक्तसंग्रहे ।
कूपत् प्रश्नो प्रशंसायां कुवित् भूरि प्रशंसने ॥

चेत्शब्दस्तु शंकायां चेत् यद्यर्थे प्रयुज्यते ।
चेदर्थे चणशब्दोऽस्ति हन्त हर्षेऽनुकम्पने ॥
प्रत्यारम्भे नह प्रोक्तं तुङ्कारे तुम् प्रयुज्यते ।
निदर्शने तथाहि स्यात् कच्चित्तस्यादिष्टप्रश्नके ॥

निषेधे निश्चये वाक्यालंङ्कारे कथ्यते खलु ।
अलीके किल वक्तव्यं वार्तायामपि कथ्यते ॥
त्वै विशेषे वितर्के च द्वै वितर्के प्रयुज्यते ।
यावत् तावत्तु साकल्यावधि मात्रावधारणे ॥
शुकं शैघ्र्येऽतिशये च वितर्केऽनुक उच्यते ।
नानार्थे विषु प्रख्यातं सम्यगर्थे पशु भवेत् ॥

कुत्सायां युत् प्रयुञ्जीत यत् तत् हेतौ प्रयुज्यते ।
आहोस्वित् विकल्पे स्यात् चटु चाटु प्रियं वचः ॥

भर्त्सने हमिति ख्यातं दिष्ट्या आनन्दवर्धने ।
सर्वतो भवने सीम द्यहिंसापादपूरणे ॥

अनादरे यथाकथा च अद्यत्वे अधुनार्थकम् ।
पादपूर्त्तौ इवार्थे च शंवद् सादृश्यवाचकम् ॥

इतोऽपीत्यर्थं आतः स्यात् स्मातीते च पूरणे ।
आ वाक्ये स्मरणे ज्ञेयः सम्बोधने इ ई उ ऊ ॥

विवक्षुः संस्कृतं वाक्यं जिज्ञासुः शास्त्रसंग्रहम् ।
सुरेशझाकृतश्लोकसिद्धान्तकौमुदीं पठेत् ॥

इत्यव्ययप्रकरणम् ।



# अथ स्त्रीप्रत्ययप्रकरणम्

लिङ्गनिर्णयः—

शास्त्राद् भवति लोकाच्च शब्देषु लिङ्गनिश्चयः ।
पारिभाषिकमप्यस्ति क्वचिद् दारादि नामनि ॥
दाराः पुंस्येव भूम्न्येव कोषेषु कथितं यथा ।
अर्थनिष्ठं शब्दनिष्ठं लिङ्गं द्विधाऽत्र बोध्यते ॥
किञ्चित् पदेऽर्थतः स्त्रीत्वं क्वचित्तु शास्त्रबोधनात् ।
शास्त्रे त्रयो गुणाः ख्याताः सत्त्वं रजस्तमस्तथा ॥
तेषामुपचये पुंस्त्वं स्वल्पत्वे स्त्रीत्वमुच्यते ।
सर्वेषां समतायां स्याद् नपुंसकमिति स्थितिः ॥
स्तनकेशवती नारी लोमशः पुरुषः स्मृतः ।
एतयोरन्तरं यच्च तन्नपुंसकमुच्यते ॥

स्पष्टता—

लोम श्मश्रु इति ख्यातं तद्वान् सर्वः पुमानिह ।
स्त्यायेते शुक्रशोणितौ यत्र सा स्त्री निगद्यते ॥
तदर्थबोधकाः शास्त्रे प्रत्यया बहवः स्मृताः ।

कोशे केशपदेन भगस्य लोमपदेन लिङ्गस्य च ग्रहणं भवति, तस्मात् कन्यायां बालेषु च नाव्याप्तिः ।

स्त्यायेते एकत्रीभवतः शुक्रशोणिते रजोवीर्ये यत्रेति स्त्री ।

स्रग् वागुपानदित्यादि स्त्रियां पाणिनिनोच्यते ।
शासनं शास्त्रकारस्य व्यवहारेण गम्यते ॥
स्त्रीलिङ्गस्य विधानाय प्रत्ययाः प्रभवन्त्यमी ।
टाप् डाप् चाप् च ङीप् ङीषौ ङीन् ङौ प्रत्ययश्च तिः ॥
टाप् डाप् चाप्सु आ शेषोऽनुबन्धाश्च ततः परे ।
ङीप् ङीष् ङीन्सु ई शेषः ऊङि ऊ तिर्यथा कृता ॥

स्त्रियाम् । ४ । १ । ३

अजाद्यतष्टाप् । ४ । १ । ४

स्त्रियामित्यधिकारेऽत्र अजाद्यतस्तु टाब् भवेत् ।
अनुबन्धस्य लोपेन ततो दीर्घेण स्यादजा ॥
एवं स्यादेडका अश्वा चटका मूषिका तथा ।
वत्सा बाला विलाता च मन्दा वयसि साध्यते ॥

अत्र फक्किका—

विशेषणादजादीनां स्त्रीत्वस्य पञ्चाजी इति ।
अत्र स्त्रीत्वं समाहारे तस्माट्टाबत्र न कृतः ॥
पञ्चानामजानाञ्च समाहारोऽत्र विग्रहः ॥

संभस्त्राजिनशणपिण्डभ्यः फलात् । वा० ।

संभस्त्राऽजिनशणपिण्डपञ्चभ्यः परतः फलात् ।
टाब् भवति विशेषेण भस्त्रा फला च संफला ॥
शणफलाऽजिनफला पिण्डफलाऽपि जायते ।

सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् । वा ।

सदच्काण्डादिशब्देभ्यः परात् पुष्पादपि च टाप् ।
सत्पुष्पा प्रत्यक्पुष्पा प्राक्पुष्पादि प्रसिद्ध्यति ॥

शूद्रा चामहत्पूर्वा जातिः । वा० ।

जात्यर्थे अमहत्पूर्वा शूद्रा इत्यत्र टाब् भवेत् ।
पुंयोगे तु भवेत् शूद्री शूद्रस्य स्त्रीति विग्रहे ॥
जातावपि महाशूद्री महत्पूर्वस्य टाप् नहि ।
आभीरी तु महाशूद्री जातिपुंयोगयोः समा ॥

अत्र फक्किका—

शूद्रा चामहत्पूर्वा जातिरित्यत्र वार्त्तिके ।
व्यर्थोऽमहन्निषेधोऽयं दोषोऽत्र प्रकृते नहि ॥
समुदायो महाशूद्र आभीरस्य च वाचकः ।
तदवयवे च शूद्रे जातिर्न विद्यते यतः ॥

तदन्तविधिबोधाय क्रियते यदि कथ्यते ।
सोऽप्यर्थोऽनुपसर्जनादधिकारेण सिद्ध्यति ॥
तस्मादत्रामहत्पूर्वा इत्यंशो व्यर्थ एव वै ।
क्रुञ्चा देवविशा शब्दे उष्णिहाऽत्रापि टाब् भवेत् ॥
अजादिगणपाठत्वाददन्तत्वाद् द्विधैव टाप् ।
ज्येष्ठा तथा कनिष्ठादौ टाबेव क्रियतां सदा ॥
पुंयोगेऽपि ङीप् नैव टाबेव मध्यमा पदे ।
टाबेव कोकिला–शब्दे जातावपि च जायते ॥

नञ्पूर्वकाच्च मूलाद्वै स्त्रियां टाप् प्रत्ययो भवेत्। वा० ।

मूलान्नञः वार्त्तिकेन अमूला साध्यते लता ।
कर्त्री धर्त्री दण्डिनी च ऋन्नेभ्यो ङीबिति कृते ॥

उगितश्च । ४ । १ । ६

उगिदन्तात् प्रातिपदिकात् स्त्रियां ङीप् क्रियते सदा ।
शप् श्यनोरिति नुम् कार्यं भवन्ती भवती भवेत् ॥
दीव्यन्ती स्यात् पचन्तीति प्राच्युदीची प्रतीच्यपि ।
उखास्रत् पर्णध्वच्छब्दे नियमान् ङीप् न जायते ॥

वनो र च । ४ । १ । ७

वनो र चेति सूत्रेण वन्नन्तादेस्तु ङीप् च रः ।
अतिसुत्वरी प्रयोग एवं स्यादतिधीवरी ॥

वनो न हश इति वक्तव्यम् । वा० ।

हसन्ताद् धातुतो यत्र वन् तत्र ङीप् न रोऽपि न ।
अवावा ब्राह्मणी शब्दे तस्माट्टाबेव जायते ॥

बहुव्रीहौ वा । वा० ।

बहुव्रीहौ विकल्पेन ङीप् रश्च क्रियतां पदे ।
बहुधीवा पदं तस्मात् पक्षे च बहुधीवरी ॥

पादोऽन्यतरस्याम् । ४ । १ । ८

पादोऽन्यतरस्यां सूत्रात् पादान्तस्य विकल्पतः ।
ङीब् भवेद् द्विपदी रूपं द्विपादित्यपि जायते ॥

टाबृचि । ४ । १ । ९

टाबृचि इति सूत्रेण ऋचा बोधेऽत्र टाब् भवेत् ।
द्विपदैकपदा शब्दः तस्मादेव प्रसिद्ध्यति ॥
षट् स्वस्रादिभ्यो न ङीप् कार्यं चतस्रः पञ्च वा स्त्रियः ।

मनः । ४ । १ । ११

मन्नन्तादिति ङीप् नैव तस्मात् सीमा पदं भवेत् ।

अनो बहुव्रीहेः । ४ । १ । १२

अनो बहुव्रीहेः सूत्रादन्नन्तान् ङीप् न जायते ।
बहुयज्वा पदं तस्मात् स्त्रियामत्र प्रसिद्ध्यति ॥

डाबुभाभ्यामन्यतरस्याम् । ४ । १ । १३

पूर्वसूत्रद्वयोपात्ताभ्यां डाबत्र विकल्पतः ।
सीमा सीमे च सीमानौ दामा दामे तथैव च ॥
बहुयज्वा बहुयज्वे बहुयज्वानावित्यपि ।
रमावद् राजवद्रूपं प्रयोगे वक्तुमर्हसि ॥

अन उपधालोपिनोऽन्यतरस्याम् । ४ । १ । २८

अन्नन्ताद् बहुव्रीहेरुपधालोपिनः पदात् ।
ङीप् कार्यं विकल्पेन पक्षे डाबपि जायते ॥
बहुराज्ञी बहुराज्ञ्यौ नदीवद्रूपमुच्यते ।
बहुराजा बहुराजे बहुराजानावित्यपि ॥

प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः । ७ । ३ । ४४

प्रत्ययस्थात् ककारात् पूर्वस्यातस्तु इत्वमिह ।
सर्विका कारिका रूपं इत्वं नौकादिषु नहि ॥

अत्र फक्किका—

पूर्वस्येति पदाभावे परस्यापीत्वमत्र स्यात् ।
कटुका रूपमिष्टं हि कटुकी न कथञ्चन ॥
शका राका कारकश्च प्रत्युदाहरणं समम् ।

मामकनरकयोरुपसंख्यानम् । वा० ।

मामकनरकयोरेवमित्वं टापि परे भवेत् ।
मामिका नरिका रूपं त्यगन्ताद् दाक्षिणात्यिका ।।

त्यक्त्यपोश्च । वा० ।

त्यक्त्यपोश्च भवेदित्वमिह त्यिका कलावती ।

न यासयोः । ७ । ३ । ४५

यत्तदोरस्य इत्वं न यका सका यकां तकाम् ।।
न यासयोः स्वरूपस्य ग्रहणं विद्यते इह ।

त्यकनश्च निषेधः । वा० ।

त्यकनश्च निषेधोऽस्ति अधित्यका उपत्यका ।
प्रत्ययस्थात् कादिति च इत्वं तस्मान्न स्यादिह ।।

आशिषि वुनश्च न । वा० ।

आशिषि वुनश्च नेत्वं जीवका भवका भवेत् ।
उत्तरपदस्य लोपेन देवका देवदत्तिका ।

क्षिपकादीनां च । वा० ।

क्षिपकादेर्निषेधोऽस्ति क्षिपका ध्रुवका भवेत् ।
तारका ज्योतिषि प्रोक्ता वर्णिका स्तोत्रपाठिका । वा०
वर्णका तान्तवेऽर्थे स्यादन्यस्मिन् वर्णिका भवेत् । वा०
वर्तका शकुनौ प्राचामुदीचां वर्तिका मता । वा०
अश्नन्ति ब्राह्मणा यस्यां सा भवेदष्टका तिथिः । वा०
अष्टका पितृदैवत्ये अष्टिकाऽन्यार्थबोधने ।। वा०
परिमाणमष्टौ यस्या अष्टिका तत्र कथ्यते ।

सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम् । वा० ।

सूतका पुत्रकादीनां वा अ इति विधीयते ।।
सूतका सूतिका तस्मात् पुत्रिका पुत्रका पुनः ।
वृन्दारका वृन्दारिका स्वेच्छयैव प्रयुज्यताम् ।।

उदीचामातः स्थाने यकपूर्वायाः । ७ । ३ । ४६

स्त्रीप्रत्ययाऽकार स्थाने योऽकारो यकपूर्वकः ।
कात्पूर्वस्य तस्य इत्वं विकल्पेन विधीयते ॥
आर्यका आर्यिका शब्दः चटका च चटकिका ।
सांकाश्यिकाऽश्विका शब्दः शुभंयिका विचार्यताम् ॥

धात्वन्तयकोस्तु नित्यम् । वा० ।

धात्वन्तयकपूर्वस्य नित्यमित्वं विधीयते ।
सुनायिका सुपाकिका प्रयोगः क्रियतां सदा ॥

भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि । ७ । ३ । ४७

भस्त्रा एषा अजा ज्ञा द्वा स्वा इति षण्णामपि ।
अस्य इत्वं विकल्पेन नञ्समासवतामपि ॥

उदाहरणानि—

अनेषका परमैषका अद्वके परमद्वके ।
अजका अजिका रूपं ज्ञका ज्ञिका द्वके द्विके ॥
निःस्वका निःस्विका शब्दः प्रयुज्यतां विकल्पतः ।
निर्भस्त्रका निर्भस्त्रिका एषका एषिका पुनः ॥
केवलस्य सपूर्वस्य सिद्ध्येदित्वं यथायथम् ।

अभाषितपुंस्काच्च । ७ । ३ । ४८

अभाषितपुंस्कशब्दाद्विहितस्य आतः स्थले ।
योऽकारस्तस्य इत्वं वा गङ्गिका गङ्गका पुनः ॥

आदाचार्याणाम् । ७ । ३ । ४९

आदाचार्याणामिति सूत्रादात्वं वाऽनुक्तपुंविधौ ।
गङ्गाका गङ्गिका रूपं गङ्गकेति त्रयं भवेत् ॥

अनुपसर्जनात् । ४ । १ । १४

अनुपसर्जनादित्यधिकारो वर्तते इह ।

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः । ४ । १ । १५

**सरलार्थः—**

अदन्तं प्रातिपदिकं यट्टिदाद्यन्तवद् भवेत् ।
अनुपसर्जनात् तस्मान् ङीप् प्रत्ययः स्त्रियां भवेत् ॥

**उदाहरणानि—**

टिदन्तत्वात् कुरुचरी कुरुषु चरतीति सा ।
सौपर्णेयी सुपर्णायाः कन्याऽपत्यार्थके भवेत् ॥
ऐन्द्री औत्सी पञ्चतयी लावणकी च यादृशी ।
उरुदघ्नी उरुमात्री देवी नदी च ङीप् कृते ॥
एवमन्यप्रयोगेऽपि ङीप् सदाऽनुपसर्जने ।
बहुकुरुचराऽत्र टाबेव यस्मादस्त्युपसर्जनम् ॥
अन्यपदार्थमुख्यत्वं बहुव्रीहावुदीरितम् ।

**फक्किका—**

यासुटष्टित्वमादाय उगितत्वात्तथैव च ।
वक्ष्यमाणप्रयोगेऽत्र ङीप् कथं नैव जायते ॥
लाश्रयमनुबन्धीयं कार्यं न जायते इह ।
आदेशानामिति तस्माज् ज्ञापकान्नैव ङीबिह ॥
श्नः शानचश्च शित्वेन क्वचिदनुबन्धकार्यके ।
अनल्विधाविति प्रायो निषेधो भवतीह वा ॥
उत्तरद्वयमत्रोक्तं दीक्षितेन मनीषिणा ॥

ताच्छीलिके णेऽपि । वा० ।

ताच्छीलिके प्रत्यये णे ज्ञापकान् ङीब् विधीयते ।
चुरा शीलमस्ति यस्याः सा चौरी कथ्यते जनैः ॥
तपः शीलमस्ति यस्याः सा भवेदिह तापसी ।

**अत्र फक्किका—**

कार्मस्ताच्छील्य इत्यस्य व्यर्थत्वं जायते यतः ।
नस्तद्धिते टिलोपत्वादेव कार्यं सुसेत्स्यति ॥

तदेव ज्ञापकं भूत्वा अण् कार्यं णेऽपि जायते ।
तस्माच्चौरी प्रयोगेऽत्र ङीप् कार्यं ज्ञापकादभूत् ॥
नञ्स्नञीकक्ख्युंस्तरुणतलुनानाञ्च ङीब् भवेत् ।
स्त्रैणी पौंस्नी शाक्तिकी स्यात् तरुणी तलुनी पुनः ॥

यञश्च । ४ । १ । १६

यञश्च सूत्रमस्त्यत्र यञन्तान् ङीब् विधीयते ।

हलस्तद्धितस्य । ६ । ४ । १५०

हलः परस्य लोपः स्याद् यस्य तद्धित ईति च ।
ततो यस्यात्र लोपेन गार्गी रूपं भवेदिह ॥
अनपत्याधिकारत्वाद् द्वैप्या द्वैप्याऽत्र टाब् भवेत् ।

प्राचां ष्फ तद्धितः । ४ । १ । १७

प्राचां ष्फ तद्धित इति यञन्तात् ष्फः स्त्रियां भवेत् ।
ष्फस्य आयन आदेशो गार्ग्यायणीति ङीप् कृते ॥

षः प्रत्ययस्य । १ । ३ । ६

आदिः षः प्रत्ययस्य सर्वदा इत्संज्ञकः ।

आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् । ७ । १ । २

प्रत्ययादेः फढखछस्यायनेयीनीयियः क्रमात् ।

सर्वत्र लोहितादिकतन्तेभ्यः । ४ । १ । १८

लोहितादिकतन्तेभ्यो यञन्तेभ्यश्च ष्फः सदा ।
तस्यायनश्च वृद्धिश्च ङीप् लौहित्यायनी भवेत् ॥

कौरव्यमाण्डूकाभ्याञ्च । ४ । १ । १९

कौरव्यमाण्डूकाभ्याञ्च सूत्रात् ष्फः प्रत्ययो यदा ।
कौरव्यायणी रूपं साध्यते माण्डूकायनी ॥
आसुरेरुपसंख्यानं ष्फस्तस्मादासुरायणी ॥ वा

वयसि प्रथमे ४ । १ । २०

वयसि प्रथमे सूत्रात् स्त्रियां वयसि ङीब् भवेत् ।
कुमारीयं चिरण्टीयं वधूटीत्यादि साध्यते ॥
वयस्यचरमे तस्माद् वधूटीति प्रदर्शितम् ।

साधनम्—

कुमार ङीप् ई अस्य लोपः कुमारी कन्या ।
कुः कुत्सितो मारः कामो यस्याः सा ॥
वधूट-ङीप् ई अस्य लोपः वधूटी ।
चिरण्ट ङीप् ई अस्य लोपः चिरण्टी ।
कन्यायाः कनिन् सूत्रात् कन्यापदं विशेषतः ।
ङीप् कार्यं नात्र जायेत कनी पदे तु जायते ॥

द्विगोः । ४ । १ । २१

द्विगोरदन्तान्ङीप् कार्यं त्रिलोकीत्यादि सिद्धयति ।
त्र्यनीका त्रिफलाशब्दे अजादित्वाच्च टाब् भवेत् ॥

अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ४ । १ । २२

अपरिमाणविस्ताचितकम्बल्येभ्यो न ङीब् विधिः ।
तद्धिते लुकि एवायं निषेधश्च प्रवर्तते ॥
पञ्चाश्वा द्विविस्ता च द्विकम्बल्या च द्व्याचिता ।
परिमाणे भवेद् रूपं द्व्याढकी ङीपि च कृते ॥

अत्र विशेषज्ञानम्—

गुञ्जा पञ्च तु माषः स्यात् ते सुवर्णस्तु षोडश ।
पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम् ॥
पलरूपं तु प्रथितं द्विगुणं कुडवं मतम् ।
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ॥
पञ्चाश्वी तद्धितलुकि ङीप् प्रत्ययोऽत्र जायते ।

काण्डान्तात् क्षेत्रे ४ । १ । २३

क्षेत्रे यः काण्डान्तोऽस्ति द्विगुस्तत्र न ङीब् भवेत् ।
द्विकाण्डा क्षेत्रभक्तिस्तु वाक्यमेवं प्रयुज्यते ॥
प्रमाणे द्वयसज्दघ्नच्-सूत्राद्विहितमात्रचः ।
प्रमाणे ल इति सूत्राल्लोपश्चात्र विधीयते ॥
क्षेत्राद्भिन्ने निषेधो न द्विकाण्डी रज्जुरिष्यते ।
षोडशहस्तप्रमाणो दण्डः काण्डमिहेप्सितम् ॥

पुरुषात्प्रमाणेऽन्यतरस्याम् । ४ । १ । २४

प्रमाणे पुरुषादत्र विकल्पेनैव ङीव् भवेत् ।
द्विपुरुषी द्विपुरुषा परिखेयं प्रयुज्यते ॥

ऊधसोऽनङ् । ५ । ४ । १३१

ऊधसोऽनङिति सूत्रात् ऊधोऽन्तबहुव्रीहेरनङ् ।

बहुव्रीहेरूधसो ङीष् । ४ । १ । २५

तत्पश्चान्ङीब्विधानेन कुण्डोघ्नी साध्यतां सदा ।

संख्याऽव्ययादेर्ङीप् । ४ । १ । २६

"संख्याऽव्ययादेर्ङीप्" कार्यं द्व्यूघ्नी च अन्यूघ्नी तथा ।

दामहायनान्ताच्च । ४ । १ । २७

दामहायनशब्दान्तात् संख्यापूर्वाद् बहुव्रीहेः ।
ङीप् प्रत्ययो विधीयेत द्विदाम्नी स्याद् द्विहायनी ॥

त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम् । वा० ।

त्रिचतुर्भ्यां हायनस्य णत्वं ङीपा सह भवेत् ।

वयोवाचकहायनस्य ङीप् णत्वं भवेदिह । वा ।

त्रिहायनी इयं कन्या चतुर्हायणी सा पुनः ॥

नित्यं संज्ञाछन्दसोः । ४ । १ । २९

नित्यं छन्दसि संज्ञायामन्नन्ताच्च बहुव्रीहेः ।
उपधालोपिनश्चात्र ङीप् स्त्रियां च विधीयते ॥
सुराज्ञी नाम नगरी शतमूर्ध्नी श्रुतौ भवेत् ।

केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च । ४ । १ । ३०

केवलमामकभागधेयपापापरादितः ।
एभ्यो नवभ्य इष्येत ङीप्संज्ञा छन्दसोरपि ॥
मामकी भागधेयी च आर्यकृती सुमङ्गली ।
समानी अपरी पापी भेषजी साध्यतां क्रमात् ॥

अन्तर्वत्पतिवतोर्नुक् । ४ । १ । ३२

अन्तर्वत्पतिवतोर्नुक् ऋन्नेभ्यो ङीबिति कृते ।
अन्तर्वत्नी पतिवत्नी अन्तरस्तीति विग्रहः ॥

पत्युर्नो यज्ञसंयोगे । ४ । १ । ३३

पत्युर्नो यज्ञसंयोगे मुनेः पत्नी प्रयुज्यते ।

विभाषा सपूर्वस्य । ४ । १ । ३४

सपूर्वस्य विभाषाङीप् गृहपत्नी दृढपतिः ।
शूद्रपत्नी वृषलपत्नी त्यादावपि विकल्पतः ॥

नित्यं सपत्न्यादिषु । ४ । १ । ३५

नित्यं ङीप् स्यात् सपत्न्यादौ एकपत्नी प्रयुज्यते ।
वीरपत्नी भ्रातृपत्नी पुत्रपत्नीति युज्यते ।

पूतक्रतोरै च । ४ । १ । ३६

पूतक्रतोर्भवेदै पूतक्रतायी भविष्यति ।
त्रिसूत्रीयं च पुंयोगे प्रवर्तते विशेषतः ।

वृषाकप्यग्निकुसितकुसिदानामुदात्तः । ४ । १ । ३७

ऐभवेन्ङीप्द्वयं तस्मात् वृषाकपायी सिद्ध्यति ।
अग्नायी च कुसितायी कुसिदायी प्रयुज्यपे ॥

मनोरौ वा । ४ । १ । ३८

मनोरौ वेति सूत्रेण मनो रौङीपिरैरपि ।
मनावी स्यात् मनायी च प्रक्षतो मनुरित्यपि ।
रूपत्रयं द्वि विकल्पे स्वयमेव च सिद्ध्यति ।
मनोः स्त्री विग्रहश्चात्र क्रियतां शब्दसाधने ॥

वर्णादनुदात्तात्तोपधात्तो नः । ४ । १ । ३९ ।

अनुदात्तान्ततोपधात् प्रातिपदिकाद् वर्णवाचिनः ।
ङीप् भवेत्तस्य नत्वं वा एनी एता च रोहिणी ॥
रोहितापि प्रयुज्येत स्याद्रोहिण्यां णत्वमपि ।

पिशङ्गादुपसंख्यानम् । वा०

पिशङ्गादुपसंख्यानं ङीपश्चात्र विकल्पतः ।
पिशङ्गी स्यात् पिशङ्गा च ङीप् प्रत्ययविकल्पनात् ॥

असित-पलितयोर्न । वा० ।

असित-पलितयोर्न ङीबादिः पलिताऽसिता ।

छन्दसि क्लमेके । वा०

असिक्नी स्यात् पलिक्नी च छन्दस्येवप्रयुज्यते ॥

अन्यतो ङीष् । ४ । १ । ४० ।

तोपधाद्भिन्नवर्णस्य वाचिनो नामतः पुनः ।
अनुदात्तान्तप्रातिपदिकान् ङीष् स्त्रियामिह ॥
कल्माषी च सारङ्गी रूपं तस्मात्प्रसिद्ध्यति ॥

षिद्गौरादिभ्यश्च । ४ । १ । ४१ ।

षिद्गौरादिसूत्रान्ङीष् गौरी हयी च नर्तकी ।
अनड्ही अनड्वाही रूपद्वयं प्रवर्तते ।
पिप्पल्यादय इत्यत्र साध्यन्तामाकृतिगणात् ॥

सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः । ६ ।४ ।१४९

सूर्यतिष्यागस्त्यमत्स्यानामुपधायाः यस्य लुक् ।

१. मत्स्यस्य ङ्याम् । यलोपः ।
२. सूर्यागस्त्ययोश्छे च ङ्यां च यलोपः ।
३. तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम् ।

इति विशेषो विज्ञेयः ॥

सूरी तिषी अगस्ती च मत्सीत्यादि स्त्रियां भवेत् ॥

जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु । ४।१।४२

जानपदादिसूत्रस्य स्पष्टार्थो निम्नरूपतः ।
जानपद-कुण्ड-गोणस्थलादिभ्यस्तु ङीष् भवेत् ।
विशेषमर्थमाश्रित्य साध्यन्ते विबुधैरिमे ॥

उदाहरणानि—

वृत्तिश्चेद्जानपदी अन्या जानपदा स्मृता ।
अमत्रार्थे भवेत् कुण्डी कुण्डाऽन्यत्र प्रयुज्यते ॥
आवपनेऽत्र गोणी स्याद् अन्यार्थे च गोणा भवेत् ।
स्थली अकृत्रिमा भूमिः कृत्रिमा तु स्थला भवेत्॥
भाजी श्राणा प्रसिद्धाऽत्र कालीवर्णे प्रसिद्ध्यति ।
स्थूलायां च भवेन्नागी नागाऽन्यार्थे प्रयुज्यते ।
अनाच्छादने तु नीली नीलाऽन्यत्र भवेत् पुनः ॥
रक्ता शाटी भवेत् नील्या नीली औषधि बोधने ।
नीली गौः प्राणिनि प्रोक्ता नीली नीला च नाम्नि ॥
कुशी अयोविकारे स्यात् कुशाऽन्यत्र प्रयुज्यते ।
कामुकी मैथुनेच्छायां कामुकान्या प्रयुज्यताम् ॥
कबरी केशबन्धे स्यात् कबराऽन्या चित्रार्थका ।

शोणात्प्राचाम् । ४ । १ । ४३

शोणात्प्राचामिति सूत्रात् ङीष् विकल्पेन जायते ।
शोणी शोणा द्वयं रूपम्—वाक्ये तस्यात्प्रयुज्यते ॥

वोतो गुणवचनात् । ४ । १ । ४४

उकारान्तगुणार्थान्ङीष् वा स्यात् मृद्वी मृदुस्ततः ।
संज्ञा-जाति-क्रियाशब्दान् हित्वाऽन्ये गुणवाचिनः ।
अथवा भाष्यकारेण दर्शितं गुणलक्षणम् ॥
सत्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥

खरु संयोगोपधान्न । वा

संयोगोपधात् खरोश्च ङीष्निषेधोऽस्ति वार्तिकात् ।
खरुः पतिंवरा कन्या पाण्डुरित्यत्र ङीब् नहिं ॥

बह्वादिभ्यश्च । ४ । १ । ४५

बह्वादिगणशब्देभ्योङीष् विकल्पेन जायते ।
बह्वी बहुः स्त्रियां रूपं वाक्ये क्वापि प्रयुज्यताम् ॥

कृदिकारादक्तिनः । ग०

क्तिन्-भिन्नादिकारान्तात् कृदन्तान्ङीष् विकल्पतः ।
रात्री रात्रिः प्रयोगोऽत्र स्वेच्छया क्रियतां सदा ॥

सर्वतोऽक्तिन्नर्थादित्येके । ग०

अक्तिन्नर्थात् सर्वतोङीष् शकटी शकटिश्च स्यात् ॥
पद्धती पद्धतिश्चापि बह्वादिगणपाठतः ॥

गणसूत्रविशेषोऽत्र—

शक्तिः शक्ती च शस्त्रार्थे सामर्थ्ये शक्तिरेव च ।
धमनी धमनिर्नाड्यां चन्द्रभागा नदी स्मृता ॥
चन्द्रभागी नदीभिन्नतात्पर्यें च प्रयुज्यते ।
यष्टी यष्टिरपि क्वापि बह्वादिगणपाठतः ॥

अत्र फक्किका—

सर्वतोङीष् कृदन्तात् स्यादक्तिन्नर्थात् किमुच्यते ? ।
नोच्यते चेदजननिरित्यत्र पूर्वतश्च ङीष् ॥
क्तिन्-भिन्नत्वहेतुत्वाद् भविष्यति कथं नहि ।
कृते तु ङीष्प्रत्ययस्य प्राप्तिरेव न जायते ॥
आक्रोशे नञ्यनिः सूत्रादनिर्भावे क्तिनोऽर्थके ।

पुंयोगादाख्यायाम् । ४ । १ । ४८

या पुमाख्या तु पुंयोगात् स्त्रियां भवति तत्र ङीष् ।
गोपस्य स्त्री भवेद् गोपी कैकयी देवकी तथा ॥

पालकान्तान्न । वा०

पालकान्तान्नङीष् कार्यं गोपालिकाऽश्वपालिका ।

सूर्याद्देवतायां चाब् वाच्यः । वा०

देवतायां भवेत् सूर्या सूरी कुन्ती नरी स्मृता ।

इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ४ । १ । ४९

एतेभ्यो ङीष् विधीयेत आनुगागम इत्यपि ।
इन्द्रवरुणादिसूत्रेण इन्द्राणी साध्यते बुधैः ॥
ङीषानुग् विधानेन वरुणानी पुनस्तथा ॥

हिमारण्ययोर्महत्वे । वा०

महद्धिमं हिमानी स्यादरण्यानी महद्वनम् ।

यवाद्दोषे । वा०

ङीषानुग्भ्यां यवानी स्यात् यवनानी लिपिर्भवेत् ॥
ङीषानुक् यवनादत्र यवनी यवनस्त्रियाम् ॥

मातुलोपाध्याययोरानुग् वा । वा०

मातुली मातुलानी च द्वयमेतत् प्रयुज्यते ।
उपाध्यायी गुरोः पत्नी उपाध्यायान्यपि भवेत् ॥

या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः । वा०

स्वयमध्यापिका नारी उपाध्यायाऽत्र कथ्यते ।

आचार्यादणत्वं च । वा

आचार्यानी गुरोः पत्नी णत्वाभावो निपातनात् ॥
व्याख्यात्री धर्मशास्त्रादेराचार्या सा च कीर्तिता ।

अर्यक्षत्रियाभ्यां वा स्वार्थे । वा०

अर्याणी अर्या शब्दो वैश्या वा स्वामिनी भवेत् ॥
क्षत्रिया क्षत्रियाणी च जात्यर्थे सुप्रयुज्यते ।
ब्रह्माणमानयत्यर्थे ब्रह्माणी शब्द इष्यते ॥
कर्मण्यणि कृते सिद्धिरानुङ् नात्र प्रवर्तते ।

क्रीतात्करणपूर्वात् । ४ । १ । ५०

क्रीतात्करणपूर्वात्तु अदन्तान् ङीष् प्रवर्तते ॥
वस्त्रक्रीती भवेत् किन्तु धनक्रीताऽत्र नैव ङीष् ।

क्तादल्पाख्यायाम् । ४ । १ । ५१

अल्पत्वे खलु तात्पर्ये करणादेस्तुक्तान्ततः ।
ङीष्प्रत्ययः स्त्रियां रूपमभ्रलिप्ती च चौरिह ॥

बहुव्रीहेश्चान्तोदात्तात् । ४ । १ । ५२

बहुव्रीहेश्चान्तोदात्तादन्तान् ङीष् प्रवर्तते ।
जातिपूर्वादिति प्रोक्त मुरुभिन्नीति सिद्ध्यति ॥
सह-नञ्-सु-काल-सुखादिपूर्वान्नैव ङीष् विधिः ।
बहुकृता सुखकृता सुखजातादि कथ्यताम् ॥

जातान्तान्न । वा०

जातशब्दान्ततोऽङीष् न दन्तजाता प्रयुज्यते ।
पाणिगृहीती भार्यायामन्यार्थे त्वत्र टाप् भवेत् ॥ वा

अस्वाङ्गपूर्वपदाद्वा । ४ । १ । ५३

अस्वाङ्गपूर्वपदाद्वा क्तान्तान्ङीष् क्रियते स्त्रियाम् ।
सुरापीतो सुरापीता मदोन्मत्ता नरी स्मृता ॥

स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् । ४ । १ । ५४

संयोगोपधभिन्नं यत् स्वाङ्गं स्यादुपसर्जनम् ।
तदन्तादेवादन्ताच्च शब्दान् ङीष् स्यात् विभाषया ॥
अतिकेशी अतिकेशा चन्द्रमुखी चन्द्रमुखा ।
संयोगोपधे सुगुल्फा रूपमेकं निगद्यते ॥

अत्र स्वाङ्गलक्षणम्—

अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथायुतम् ॥

क्रमशः प्रत्युदाहरणम्—

सुस्वेदायां द्रवत्वान्न ङीष् प्रत्ययो विधीयते ।
मूर्त्तभिन्नात्तु सुज्ञाना-शब्दे ङीष् नैव जायते ॥

इयं च सुमुखा शाला प्राणिभिन्नान्न ङीष् नहि ।
सुशोफा तु विकारेण जायते तेन ङीष् नहि ॥
सुकेशी च सुकेशा वा रथ्या वाक्यं प्रयुज्यते ।
अतत्स्थं तत्र दृष्टं च घटते नियमस्त्वयम् ॥

तेन चेत्तत्तथा युतम् ।

प्राणिवत्प्राणि सदृशे युक्तत्वात् सुस्तनी पुनः ।
सुस्तनाऽपि च पक्षे स्यात् प्रयोगं कुरु स्वेच्छया ॥

नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च । ४।१।५५

नासिकोदरशब्दान्तान् ङीष् विकल्पेन जायते ।
तुङ्गनासिकी पक्षे तु वक्तव्या तुङ्गनासिका ॥

अङ्गगात्रकण्ठेभ्यो वक्तव्यम् । वृत्तिः

अङ्गगात्रादिशब्दान्तान् ङीष् विकल्पेन जायते ।
स्वङ्गी स्वङ्गा सुगात्री च सुगात्रापि च कथ्यताम् ॥
केचिन्मतमिदं प्रायो मन्यन्ते नान्यकोविदाः ।

पुच्छाच्च । वा०

पुच्छान्ङीष् सुपुच्छीस्यात् सुपुच्छापि विकल्पनात् ।

कबरमणिविषशरेभ्यो नित्यम् । वा०

मणिपुच्छी विषपुच्छी कबरपुच्छी इत्यपि ।
नित्यमेवात्र ङीष् कार्यं शरपुच्छी ततो भवेत् ॥

उपमानात् पक्षाच्च पुच्छाच्च । वा०

उपमानात्पक्षादेवं पुच्छान् ङीष् जायते च वा ।
उलूकपक्षी शालेयमुलूकपुच्छी वा पुनः ॥

नक्रोडादिबह्वचः । ४।१।५६

क्रोडादेर्बह्वचश्च स्वाङ्गान् ङीष् न प्रवर्तते ।
वडवा कल्याणक्रोडा सुजघना सा च मञ्जुला ॥
मयूरी कल्याणक्रोडी कल्याणक्रोडाऽपि च भवेत् ।

**विशेषवस्तु—**

अत्र क्रोडादिगणवर्त्तमानात्
क्रोडान्तान् ङीप् न किन्त्वन्यार्थकात् ।
अन्यत्र स्थितात् क्रोडपदयुक्त
बहुव्रीहौ तु ङीप् विकल्पेन भवत्येव ॥

सहनञ्विद्यमानपूर्वाच्च । ४।१।५७

सहपूर्वाच्च नञ्पूर्वात् क्वापि ङीष् नैव जायते ।
विद्यमानशब्दपूर्वादपि ङीष् प्रत्ययो नहि ॥
सकेशा स्यादकेशा च इयं विद्यमाननासिका ।

नखमुखात् संज्ञायाम् । ४।१।५८

संज्ञायां नखमुखात् परान्नैवास्ति ङीष् विधिः ।
शूर्पणखा गौरमुखा विख्याता वर्तते इह ॥
संज्ञाभिन्ने इयं ताम्रमुखी कन्या प्रयुज्यते ।

पूर्वपदाच्च संज्ञायामिति सूत्रेण णो भवेत् ।

योगवृत्तिविवक्षायां न संज्ञा यदि ज्ञायते ।
शूर्पनखी प्रयोक्तव्या केचिन्मतमिदं न मे ॥

दिक्पूर्वपदान्ङीष् । ४।१।६०

दिग्वाचिशब्दपूर्वाच्च स्वाङ्गान्ताज्जायते च ङीष् ।
ङीबादेशश्च ङीषोऽत्र प्राङ्मुखी साध्यते बुधैः ॥

वाहः ।४।१।६१

वाहः सूत्रेण वाहन्तात् प्रातिपदिकान् ङीष् भवेत् ।
दित्यवाट् चमे-दित्यौही—शास्त्रे द्वयं प्रयुज्यते ॥

सख्यशिश्वीति भाषायाम् । ४।१।६२

सख्यशिश्वीति भाषायां छन्दस्यपि च कथ्यते ।
इयं सखी अशिश्वी मे वाक्यमेवं प्रयुज्यते ॥
वेदे ङीष् न स्यादत्र सखा सप्तपदी भव ।

जातेरस्त्रीविषयादयोपधात् । ४।१।६३

स्त्रियां यन्नियतं नास्ति जातिवाचि अयोपधम् ।
स्त्रियामित्यधिकारेऽत्र तस्मान् ङीष् प्रत्ययो भवेत् ॥

अत्र जातिनिर्णयः—

आकृतिग्रहणा जातिस्तस्मात् तटी प्रयुज्यते।
सकृदाख्यातनिर्ग्राह्या लिङ्गानां नहि सर्वभाक्॥
जातिलक्षणमुक्तं हि तेनात्र वृषलीभवेत्।

गोत्रश्च चरणैः सह।

अपत्यप्रत्ययान्तो यः शाखाध्येतुश्च बोधकः॥
जातिकार्यश्च तत्रापि औपगवी कठी स्थले॥
प्रादुर्भावविनाशाभ्यां सत्वस्य युगपद्गुणैः।
असर्व लिङ्गां बह्वर्थां तां जातिं कवयो विदुः॥ भाष्यम्:

योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानाम-
प्रतिषेधः। वा०

योपधस्यप्रतिषेधे हयगवयादि वार्यते।
हयी च गवयी चैव मुकयी आदि साध्यताम्॥
मत्सीत्यत्र च मत्स्यस्य ङ्यां यलोप इष्यते।

पाककर्णपर्णपुष्पफलमूलवालोत्तारपदाच्च ।४।१।६४

पाककर्णपुष्पफलमूलादि पूर्वकात्।
जातिवाचिनस्तु तस्मात् प्रत्ययो ङीष् स्त्रियां भवेत्॥
शङ्कुकर्णीं शालपर्णीं शङ्खपुष्पी तथैव च॥

इतो मनुष्यजातेः ४।१।६५

इतो मनुष्यजातेस्तु ङीष् प्रत्ययः स्त्रियां भवेत्।
दाक्षेर्भार्या भवेद् दाक्षी जातिस्तु गोत्रलक्षणा॥

ऊङुतः।४।१।६६

मनुष्यजातिमच्छब्दादुकारान्तादयोपधात्।
ऊङ् प्रत्ययः स्त्रियां तेन-पाठकैः साध्यते कुरूः॥
रज्ज्वादिभिन्यादप्राणि-जातेरपि च ऊङ् भवेत्। वा०
अलाबूस्याच्च कर्कन्धूः कृकवाकौ रज्जौ नहि॥

बाह्वन्तात्संज्ञायाम् । ४ । १ । ६७

बाह्वन्तशब्दात्संज्ञायां स्त्रियामूङ् प्रत्ययो भवेत् ।
भद्रबाहूः प्रयोगोऽयं साध्यते च विशेषतः ।
संज्ञातो यदि भिन्नोऽर्थश्चेत्तदा वृत्तबाहुरिति ॥

पङ्गोश्च । ४ । १ । ६८

पङ्गोः स्त्रियां भवेत्पङ्गूः पङ्गुशब्दादिहोङ् भवेत् ।

स्वशुरस्योकाराकार लोपश्च । वा

श्वशुरस्त्री भवेत् श्वश्रूः श्वशुरादूङत्र जायते ॥
अकारोकार लोपेन शब्दसिद्धिर्विधीयते ।

ऊरूत्तरपदादौपम्ये । ४ । १ । ६९

ऊरूत्तरपदादूङ् स्यादौपम्ये वर्त्तमानतः ।
करभोरूः प्रियाप्रायो भाग्यशालिन एव स्यात् ॥
करभः करिशुण्डोऽत्र करस्य करभो बहिः ।
करभ इव ऊरुर्यस्याः विग्रहोऽत्र प्रदर्श्यताम् ॥

संहितशफलक्षणवामादेश्च । ४ । १ । ७०

उपमायामिदं सूत्रं ङीब्विधौ न प्रवर्तते ।
संहितोरूः शफोरूश्च वामोरूरपि दृश्यते ॥

सहितसहाभ्याञ्चेति वक्तव्यम् । वा०

लक्षणोरूः सहोरूश्च सहितोरूरपि भवेत् ।

संज्ञायाम् । ४ । १ । ७२

कद्रूः कमण्डलूरत्र संज्ञायामूङ् विधीयते ।
कद्रुः नागस्य मातास्ति चतुष्पाच्च कमण्डलुः ॥
संज्ञायामसंज्ञायां छन्दस्यूङ् सर्वदा भवेत् ।
पात्रपर्यायवाची तु कमण्डलुर्न गृह्यते ॥
स्त्रीत्वं नैव यतस्तस्य रहस्यमिति बुध्यताम् ।

शार्ङ्गरवाद्यञो ङीन् । ४ । १ । ७३

शार्ङ्गरवाद्यञो ङीन् स्यात् शार्ङ्गरवी च सा स्मृता ।
श्रृङ्गरोर्यदपत्यं स्त्री सैव शार्ङ्गरवी इह ॥
विदस्यापत्यमित्यर्थे वैदी स्यादञि ङीनि च ।

नृनरयो र्वृद्धिश्च । ग० सू० ।

नृ-नरयोर्द्वयोर्ङीष् स्यात् वृद्धिरप्यत्र जायते ।
नारी-रूपं स्त्रियामत्र तस्मादेव प्रसाध्यते ॥
नरस्य स्त्री नरी प्रोक्ता पुंयोगलक्षणोऽत्र ङीप् ।
किञ्चिन्नरी किन्नरीति समासेनैव साध्यताम् ॥

यङश्चाप् । ४ । १ । ७४

यङश्चाबिति सूत्रेण यङन्ताच्चाप् स्त्रियां भवेत् ।
आम्बष्ठ्या कारीषगन्ध्या प्रयोगोऽयं प्रसिद्ध्यति ॥

षाद्यञश्चाब् वाच्यः । वा०

षाद्यञश्चाप् विधीयेत पौतिभाष्या ततो भवेत् ।
गर्गादिः पूतिमाषोऽस्ति तत एवात्र यञ् विधिः ॥

आवट्याच्च । ४ । १ । ७५

आवट्याच्चेति सूत्रेण अस्माच्चाप् प्रत्ययः स्त्रियाम् ।
अवटश्चात्र गर्गादिः आवट्या चापि च कृते ।

तद्धिताः । ४ । १ । ७६

पञ्चमाध्यायपर्यन्तं तद्धिता अत्र यान्ति वै ।
अधिकारोऽयमस्माद्धि दर्शितो विदुषा किल ॥

यूनस्तिः । ४ । १ । ७७

युवन्-शब्दात्तिप्रत्ययः स च तद्धितसंज्ञकः ।
युवतिरत एवात्र साध्यते नस्य लोपतः ॥
अनुपसर्जनत एव तिप्रत्ययोऽयं विधीयते ।
युवानो बहवो यस्यां समासे बहुयुवा ततः ॥
यौतेः शत्रन्ततो ङीपि युवती इत्यपि भवेत् ।
यौतिमिश्रीकरोतीति पत्या सहेति विग्रहः ॥

॥ इति स्त्रीप्रत्ययप्रकरणम् ॥



# अथ कारकप्रकरणम्



**प्रथमं कारकलक्षणम्—**

वाक्ये संज्ञा क्रियायाश्च संबन्धः कारकं भवेत् ।
क्रियाया जनकं नाम कारकं वा निगद्यते ॥
विग्रहः स्यात् करोतीति कारकस्य पदस्य च ।
तस्मात् क्रियायाः जनकं कारकं वस्तु कथ्यते ॥
ब्राह्मणस्य सुतं मार्गं पृच्छत्यत्र न ब्राह्मणः ।
कारकं जायते तस्मादिति कौस्तुभकृद्वचः ॥

**अत्र शङ्का—**

नन्वेवं हि सुते कस्मात् कारकत्वं भविष्यति ।
यतः प्रश्न क्रियायाश्च जनकत्वं सुतस्य न ? ॥

**उत्तरम्—**

तस्मादन्वयमात्रं स्यात् क्रियया कारकं पदम् ।
तेनैव सम्प्रदानादौ कारकत्वं प्रसिद्ध्यति ॥

**पुनश्शङ्का—**

नन्वेवं तर्हि वृक्षस्य पर्णं पतति वाऽपतत् ।
कारकत्वं तु वृक्षस्य स्यात् पर्णस्य विशेषणात् ॥
वृक्षात् पतन्ति पर्णानि वाक्यस्य अनुरोधतः ।
वृक्षे क्रियाऽन्वयस्तावत् कथं कथमपि स्थितः ॥
तस्मात् क्रियान्वयित्वं कारकस्य न लक्षणम् ।

**सिद्धान्तवाक्यम्—**

वस्तुतः कर्तृतेत्यादि षट्कं वस्त्वनवस्थितम् ।
कारकं कथितं प्राज्ञैः विशेषण-विशेष्यवत् ॥
पश्यताधः स्थितं वाक्यं सिद्धान्तग्रन्थ-दर्शितम् ।
वस्तुतस्तदनिर्देश्यं नहि वस्तुव्यवस्थितम् ।
स्थाल्या पचयत इत्येषा व्यवस्था दृश्यते यतः ॥

उपसंहारः—

अत एव घिटुभादीनां सदृशं कारकं पदम् ।
पारिभाषिकमेवेदमर्थसंज्ञा स्वरूपकम् ॥

सिद्धान्तवस्तु—

तस्मात् कारकशब्दस्य विग्रहः क्रियतां सदा ।
करोति कर्तृकर्मादि व्यपदेशान् तच्च कारकम् ॥

कारक-भेदाः—

कर्ता कर्म च करणं सम्प्रदानं ततः परम् ।
अपादानं ततः पश्चादधिकरणमित्यपि ॥

यथा च शाब्दिकाः पठन्ति—

क्रिया प्रकारीभूतोऽर्थः कारकं तच्च षड्विधम् ।
कर्तृकर्मादिभेदेन शेषः सम्बन्ध इष्यते ॥

न्यायसिद्धान्तरीत्या कारकलक्षणम्—

कारकेतरार्था च सुप् द्विधाऽत्र विभज्यते ।
धात्वर्थांशे प्रकारोयः सुबन्तः सोऽत्र कारकम् ॥ शब्दशक्ति प्र०

सारांशः—

धातूपस्थाप्य यादृशार्थेऽन्वयप्रकारीभूयभासते यः सुबर्थः
स तद्धातूपस्थाप्य तादृशक्रियायां कारकं भवति ॥

न्यायमतमाश्रित्य विवेचनम्—

क्रियानिमित्तमाख्यातं कारकं न्यायपण्डितैः ।
तदपि शोभनं नैव अतिव्याप्त्यादिदोषतः ॥
चैत्रस्य तण्डुलं सूदः पचतीत्यत्र दृश्यताम् ।
चैत्रस्यापि कथं नैव कारकत्वं तदा भवेत् ॥
अनुमत्यादि दानेन तण्डुलादेः प्रसाधनात् ।
संबन्धिनोऽपि पाकादि-क्रियानिमित्तमस्ति वै ॥
तस्मात् क्रियान्वितं सद् विभक्त्यर्थान्वितं च यत् ।
तदेव कारकं न्यायसिद्धान्ते समुदाहृतम् ॥
तच्च कर्तरि कर्मादौ क्रियान्विततिङा सह ।
सुपामर्थेन संबन्धो वर्तते एव सर्वथा ॥

एवमुदाहृते वाक्ये चैत्रः पदं न कारकम् ।
अत्रान्वयस्तण्डुलेन क्रियया नैव वर्तते ॥

**कर्तृकारक-लक्षणम्—**

क्रियते च क्रिया येन क्रिया वा यत्र वर्तते ।
कर्ता भवति स शब्दः कर्तरि प्रथमा ततः ॥
कर्तृभावं कथयितुं स्वार्थस्यात्र प्रदर्शने ।
प्रथमा जायते नाम्नः रामः कृष्णः फलं रमा ॥
सु औ जस् प्रथमा अस्ति तत्रेतौ उश्च जस्तथा ॥
यस्य कस्यापि कार्यस्य करणे यत्स्वतन्त्रता ।
दृश्यते स च कर्ताऽस्ति प्रथमा तत्र जायते ॥

**प्रथमा विभक्तिनियमः—**

प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ।२।३।४६

प्रातिपदिकार्थलिङ्गपरिमाणवचनेषु च ।
सु औ जस् प्रथमा कार्या संज्ञा सर्वनामशब्दतः ॥
एकं द्विकं त्रिकञ्चाथ चतुष्कं पञ्चकं तथा ।
प्रातिपदिकार्थशब्देन सर्वे पक्षा व्यवस्थिताः ॥

**सारांशः—**

स्वार्थस्य बोधने तस्मात् लिङ्गाधिक्यार्थबोधने ।
परिमाणवचनाधिक्ये नामतः प्रथमा भवेत् ॥
नाम मात्रेण वस्तूनां संकीर्त्तनं भवेद्यतः ।
उद्देश्यं कथ्यते तस्मात् विभक्तिः प्रथमा भवेत् ॥

**उदाहरणम्—**

रामः श्रीः ज्ञानं स्वार्थे लिङ्गाधिक्ये तटस्तटी ।
परिमाणे द्रोणो व्रीहिः एकः द्वौ वचनाधिके ॥
वस्तुधर्मः प्रवृत्तीनां निमित्तं स्वार्थ उच्यते ।
स एव प्रातिपदिकार्थ-शब्देन गृह्यते इह ॥
पुंस्त्वं स्त्रीत्वमित्यादि लिङ्गमत्र प्रदर्शयेत् ॥

परिमाणं तु वस्तूनां मानं येन तदेव हि।
वचनं नाम संख्यायाः प्रख्यातं वर्तते इह ॥
रामः श्रीः ज्ञानमित्यादि नीचैरुच्चैः पुनर्मुहुः।
सर्वत्र प्रातिपदिकार्थे प्रथमा च विधीयते ॥
स्वार्थमात्रस्य बोधोऽत्र जायते नाधिकः खलु ॥
स्वार्थादधिकलिङ्गस्य बोधेऽपि प्रथमा भवेत्।
तटः तटी तटं प्रोक्तमस्योदाहरणं बुधैः ॥
द्रोणो व्रीहिः परिमाणाऽधिक्योदाहरणे इह।

संबोधने च। २। ३। ४७

संबोधनविशेषार्थे प्रथमा नामतो भवेत्।
हे राम हे हरे विष्णो संबोधनपदं ततः ॥

कारके। १। ४। २३। इत्यधिकृत्य।

कर्तृत्वं कारकत्वञ्च समानं भवतीह यत्।
तस्मादत्राधिकारो हि प्रागितो नच दर्शितः ॥
सप्तमी प्रथमार्थेऽत्र सूत्रेऽस्ति ज्ञायतामिति।

**अथ कर्म-कारकम्—**

द्वितीयाविभक्तिप्रयोगज्ञानम्।

कर्तुरीप्सिततमं कर्म। १। ४। ४९

कर्तुरीप्सित तमं कर्म द्वितीया कर्मणि स्मृता।

कर्मणि द्वितीया। २। ३। २

**स्पष्टीकरणम्—**

कर्ता निजक्रियाद्वारा यत्प्राप्तुं यतते क्वचित्।
तदेव कर्म बोद्धव्यं द्वितीया कर्मणि सदा ॥

**उदाहरणम्—**

ग्रामं गच्छति स भृत्यः मालां ग्रथ्नाति बालिका।
केशान् बध्नाति सा कन्या द्वितीयाऽत्रास्ति कर्मणि ॥
अम् औट् शस् द्वितीयेयं जायते कर्मकारकात्।

अत्र श्रीजगदीशमतप्रदर्शनम्—

धातुभेदानुपादाय तदर्थे कर्मतादिकान् ।
बोधयन्त्यो द्वितीयाद्या निर्वक्तव्याः विभक्तयः ॥ श० प्र०

सारांशः—

तिङन्तपचादिधातूपस्थाप्य पाकादिधर्मिककर्मत्वानुभवानुकूल-सुप्सजातीयत्वं द्वितीया-लक्षणम् ॥

अनभिहिते । २ । ३ । १ । इत्यधिकृत्य ।

अत्र वस्तुविशेषः—

कर्मादिकारकाद्वाक्ये द्वितीयादि प्रवृत्तये ।
सर्वत्रानभिहितत्वं जानीयाद् वाक्ययोजने ॥
अभिहिते च कर्मादौ प्रथमैव क्रियते सदा ।
अभिधानं तु कर्मादेः तिङा कृता च तद्धितैः ॥
समासेन निपातेन सर्वमत्र प्रदर्श्यते ।
माधवः सेव्यते लक्ष्म्या विष्णुर्लक्ष्म्या च सेवितः ॥
शतेन क्रीतः शत्योऽश्वः प्राप्तानन्दस्तु शङ्करः ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥
क्रमेणाभिहितं कर्म माधवो विष्णुरश्वकः ।
शङ्करो विषवृक्षश्च द्वितीया नात्र जायते ॥
उक्ते कर्मणि प्रथमैव भवतीति विशेषता ॥
कर्तृवाक्यप्रयोगेषु द्वितीया कर्मकारकात् ।
कथां शृण्वन्ति ते भक्ताः वेदान् पठन्ति बालकाः ॥
क्रिया विशेषणे शब्दे द्वितीया जायते सदा ।
स्तोकं पाकः सविनयं विवक्षति सुरेश ज्ञा ॥

तथायुक्तं चानीप्सितम् । १ । ४ । ५०

इप्सिताच्च द्वितीयास्यात् कर्मणोऽनिप्सितादपि ।

स्पष्टीकरणम्—

क्रियया ईप्सितं कर्म तथैवानीप्सितं भवेत् ।
ओदनं दधि भुञ्जानो विषं भुङ्क्ते प्रयुज्यते ॥
ग्रामं गच्छन् जनः कोऽपि तृणं स्पृशति कथ्यते ॥

अकथितं च । १ । ४ । ५१

अकथितञ्चेति सूत्रेण अपादानादिकारकैः ।
अविवक्षितपदं कर्म द्वितीया स्यात् ततोऽपि च ॥
दुह याच पच दण्ड रुधि प्रछि चि ब्रू शासुजि मथ मुषाम् ।
कर्मयुक् स्यादकथितं तथा नीहृकृष्वहाम् ॥
षोडशानाञ्च धातूनां कर्मणा यद्धि युज्यते ।
तदेवाऽकथितं कर्म परिगणनमत्र वै ॥

उदाहरणानि—

गां पयो दोग्धि गोपालः गामत्राऽकथितं भवेत् ।
बलिं स याचते पृथ्वीं बलिमकथितं स्मृतम् ॥
तण्डुलानोदनं पक्त्वा गर्गान् शतमदण्डयत् ।
गां व्रजमवरुणद्धि पन्थानं पृच्छति वटुम् ॥
वृक्षमवचिनोदाम्रं धर्मं ब्रूतेऽथ शास्ति तम् ।
शतं जयति सौमित्रिं शतं मुष्णाति मां शठः ॥
अजां ग्रामं स नयति हरति कर्षतीति च ।
वहति वृषभं ग्रामं कर्माकथितमीक्षताम् ॥

अत्र विशेषः—

भाष्यप्रमाणाद् बहुमान्यविद्या-
वतां कवीनाञ्च प्रयोगतश्च ।
विज्ञायतामर्थनिबन्धनेयं
संज्ञा ततोऽन्यत्र प्रवर्तितास्ति ॥
गां भिक्षते पौरवमत्रविप्रो
भाषिष्यते धर्ममिमं सुतं सः ।
इत्यादि वाक्येऽर्थनिबन्धनत्वात्
जाता द्वितीयाऽकथितात्पदाच्च ॥

अन्येषामपि धातूनां बहूनामर्थयोगतः ।
उच्यतेऽकथितं कर्म काव्यशास्त्रानुसारतः ॥
अकथितञ्चेति सूत्रस्थात् चकारादन्यतोऽपि स्यात् ।
तारयति कपीनब्धिं ग्राहयति श्रुतिं वटुम् ॥
दीपयति च शास्त्रार्थं शिष्यानित्यादि ज्ञायताम् ।

अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् ।

अकर्मकक्रियायोगे देशकालपदस्य वै० ।
गन्तव्यस्य च मार्गस्य कर्मसंज्ञा विधीयते ।। वा०

उदाहरणम्—

कुरून् स्वपिति स गन्ता मासमास्ते च स इह ।
गोदोहमास्ते गोपालः क्रोशमास्ते गमी जनः ।।

प्रसङ्गादकर्मकधातुलक्षणम्—

लज्जा सत्ता स्थिति जागरणं वृद्धिक्षयभयजीवितमरणम् ।
शयनक्रीडारुचिदीप्त्यर्थं, धातुगणं तमकर्मकमाहुः ।।

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ. । १ । ४ । ५२

स्पष्टार्थः —

गतिबुद्धिभक्षणार्थ-धातूनां शब्दकर्मणाम् ।
अकर्मकाणां धातूनामणौ कर्तृपदं हि यत् ।।
प्रेरणार्थकप्रयोगे णिचि तत् कर्मसंज्ञकम् ।
तस्मादपि द्वितीयैव प्रधानकर्मवद्भवेत् ।।

उदाहरणानि—

शत्रूनगमयत्स्वर्गं वेदार्थं स्वानबोधयत् ।
आसयत् सलिले पृथ्वीं यःस मे श्रीहरिर्गतिः ।।

उपर्युक्तवाक्येषु क्रमशोऽण्यन्तावस्थायां शत्रवः, स्वे, पृथ्वीति कर्तृपदमस्ति तच्च प्रेरणार्थके कर्म भूत्वा द्वितीयान्तमभूत् ।

नीवह्योर्न । वा ।

नाययति वाहयति भारं भृत्येन भूमिपः ।
नीवह्योर्नेति निषेधात् न भृत्यमत्र कथ्यते ।।

नियन्तृ कर्तृकस्य बहेरनिषेधः । वा० ।

वाहयति रथं वाहान् सूतो नात्र निषिध्यते ।
तस्मात्कर्माभवत् वाहान् ध्यानमत्र प्रदीयताम् ।।

आदि खाद्यो र्न । वा० ।

आदि खाद्यो रणौ कर्ता न णौ स्यात् कर्मसंज्ञकः ।
वटुना खादयत्यन्न-मादयति प्रयुज्यते ॥

अहिंसार्थस्य भक्षेश्च कर्मसंज्ञा न जायते ।
वटुना भक्षयत्यन्नं प्रयुज्यते बुधैः सदा ॥

जल्पतिप्रभृतीनामुपसंख्यानम् । वा० ।

जल्पतिप्रभृतीनाञ्च अणौ कर्ता च यो भवेत् ।
स ण्यन्ते कर्मतां याति धर्मं पुत्रञ्च जल्पयति ॥

भक्षेरहिंसार्थस्य न । वा० ।

हिंसार्थे वृषभान् सस्यं भक्षयति प्रयुज्यते ः
क्षेत्रस्थानां यवादीनां प्राणवत्वं निगद्यते ॥

दृशेश्च । वा० ।

दृशेश्चापि भवेत्कर्ता अणौ यः स च कर्म णौ ।
दर्शयति हरिं भक्तान्–पूजागारिकनामवान् ॥

दृशिश्च ज्ञानसामान्यं न विशेषमिति स्थितिः ।
घ्रापयति देवदत्तेन धूपमिति प्रयुज्यताम् ॥

शब्दायतेर्न । वा० ।

शब्दायते र्न कर्तुः कर्मसंज्ञा विधीयते ।
देवदत्तेन शब्दाययति वाक्यं प्रयुज्यते ॥
अकर्मकपदेनात्र देशकालादिकर्मवान् ।
धातुरेव ग्रहीतव्यो देवंमासमासयनि ॥

अविवक्षितकर्मत्वाद् देवदत्तेन पाचयति ।
अत्र न देवदत्तस्य कर्म संज्ञा च णौ भवेत् ॥

हृक्रो रन्यतरस्याम् । १ । ४ । ५३

हृक्रो रणौ च यः कर्ता स णौ वा कर्मसंज्ञकः ।
हारयति कारयति भृत्यं भृत्येन वा कटम् ॥

अभिवादिदृशोरात्मनेपदे वेति वाच्यम् । वा० ।

अभिवादिदृशोर्धात्वोरात्मनेपदिनोरिह ।
अणौ कर्ता च णौ कर्मसंज्ञको वा विधीयते ॥

अभिवादयते देवं भक्तं भक्तेन वा भवेत् ।
चित्रं दर्शयते तत्र जनो जनेन कथ्यताम् ॥

अधिशीङ्स्थासां कर्म । १ । ४ । ४६

अधिपूर्वकशीङ्स्थासामाधारः कर्मसंज्ञकः ।
अधिशेतेऽधितिष्ठति अध्यास्ते वैकुण्ठं हरिः ॥

अभिनिविशश्च । १ । ४ । ४७

अभि नि पूर्व विश्धातोराधारः कर्मसंज्ञकः ।
सन्मार्गमभिनिविशते प्रयोगः क्रियते ततः ॥

अस्मिन् सूत्रेऽन्यतरस्यामनुवर्त्त्य व्यवस्थितम् ।
पापेऽभिनिवेशोऽत्र कर्मसंज्ञा ततो नहि ॥

उपान्वध्याङ्वसः । १ । ४ । ४८

उपान्वध्याङ्पूर्वकस्य आधारः कर्मसंज्ञकः ।
उपवसत्यनुवसति वैकुण्ठं हरिरुच्यते ॥
आवसत्यधिवसति कैलाशं हर उच्यताम् ।

अभुक्त्यर्थस्य न । वा ।

अभुक्त्यर्थोपवसतेः आधारः कर्म नैव स्यात् ।
वने उपवसति सः प्रयोगः क्रियते ततः ॥

अभिवादिदृशोरात्मनेपदे वेति वाच्यम् । वा ।

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।

द्वितीयाऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते । वा ।

उदाहरणम्

गोपाः कृष्णमुभयतः भक्ताः कृष्णञ्च सर्वतः ।
कृष्णाभक्तं धिगस्त्वत्र हरिर्लोकमुपर्यपरिः ॥
लोकमध्यधिजीवोऽस्ति अधोऽधो लोकमेति सः ॥

अभितः परितः समयानिकषाहाप्रतियोगेऽपि । वा ।

अभितः परितो योगे समया निकषान्विते ।
हा योगे प्रतियोगेऽपि द्वितीया जायते सदा ॥

उदाहरणम्—

अभितः परितः कृष्णं गोपा गावश्च सन्ति वै।
स ग्रामं समया याति त्वं लङ्कां निकषा व्रज ॥
हा कृष्णाभक्तं ब्रूयात् प्रतिभाति रमा च माम्।
प्रतिभाति बुभुक्षितं न किञ्चिदिति कथ्यते ॥

अन्तरान्तरेण युक्ते। २। ३। ४

युक्तेऽन्तराऽन्तरेण द्वितीया क्रियते सदा।
अन्तराऽस्ति हरिस्त्वां मां सुखं नैवान्तरेण तम् ॥

कर्मप्रवचनीयाः। १। ४। ८३ इत्यधिकृत्य
अथगत्युपसर्ग संज्ञाऽपवादभूता कर्मप्रवचनीयसंज्ञा—

अनुर्लक्षणे। १। ४। ८४

लक्ष्यलक्षणभावेऽनुः यत्रास्ति तत्र निश्चितम्।
कर्मप्रवचनीयत्वं द्वितीया तस्य योगतः ॥

कर्मप्रवचनीययुक्ते द्वितीयाः। २। ३। ८

कर्मप्रवचनीयस्य योगे सदेयमुच्यते।
जपमनु बह्ववर्षत् जपशब्देऽत्र लक्षणम् ॥
वर्षणं लक्ष्यमित्युक्तं द्वितीया लक्षणादिह ॥

तृतीयार्थे। १। ४। ८५

सूत्रमस्ति तृतीयार्थे तृतीयार्थस्य द्योतने।
अनुःकर्मप्रवचनीयं द्वितीया तस्य योगतः ॥
नदीमन्ववसिता सेनोदाहरणमुच्यताम् ॥

हीने। १। ४। ८६

हीने सूत्रेण हीनार्थे द्योत्येऽनुः कर्मपूर्ववत्।
देवा अनुहरिमत्र अनुदेवान् नराः स्मृताः ॥

उपोऽधिके च। १। ४। ८७

उपाव्ययस्य अधिके हीनेऽर्थे सति क्रियते।
कर्मप्रवचनीयत्वं द्वितीया तस्य योगतः ॥

सुराः नरा अनुहरिं विद्यार्थी उपगुरुं भवेत् ।
अधिके सप्तमी कार्या उपपरार्द्धे हरे गुणाः ॥

लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः । १ । ४ । ९०

लक्षणेत्थं भूताख्याने तथैव भागवीप्सयोः ।
प्रतिपर्यनवः सन्ति कर्मप्रवचनीयकाः ॥

तत्तद्योगे द्वितीयैव दर्श्यन्तेऽधःक्रमान्मया ।
वृक्षंप्रति पर्यनुवा विद्युद्विधोतते निशि ॥

द्योतनं वृक्षसम्बन्धि वाक्यार्थः क्रियतामिह ।
सम्बन्धो लक्ष्यलक्षणभावोऽत्र बुध्यतां सदा ॥

भक्तोविष्णुं प्रति परि अनु वा अस्ति वाक्यतः ।
भक्तोऽयं कञ्चित्प्रकारं प्राप्तस्तात्पर्यमस्य च ॥

विष्णोर्भक्तेश्च संबन्धो विषय-विषयीति वै ।
हरिं प्रति पर्यनु वा लक्ष्मीरिति प्रयोगतः ॥

अस्ति लक्ष्मीर्हरेर्भागस्तात्पर्यमस्य वर्ण्यताम् ।
स्वस्वामिभावसंबन्धो वर्तते इति बुध्यताम् ॥

वृक्षं वृक्षं प्रति हरि अनु वा सिञ्चति पदे ।
न षत्वमत्र संज्ञायाः प्रयोजनं प्रदर्शितम् ॥

अभिरभागे । १ । ४ । ९१ ।

सूत्रमभिरभागेऽस्ति लक्षणादेश्च द्योतने ।
अभिः कर्मप्रवघनीयः द्वितीया तस्य योगतः ॥

हरिमभिवर्तते सः भक्तोऽयञ्च हरिमभि ।
देवदेवमभिसिञ्चत्यस्योदाहरणं भवेत् ॥

अभिपरी अनर्थकौ । १ । ४ । ९३ ।

अधिपरी अनर्थकौ यदि स्तः तत्र पूर्ववत् ।
कर्मप्रवचनीयौ स्तः निघातं च निषेधितुम् ॥

कुतोऽध्यागच्छद् वास्ये पर्यागच्छत्कुतश्च सः ।
गतिसंज्ञा निषेधेन न निषेधः स्वरस्य च ॥

सुः पूजायाम् । १ । ४ । ९४ ।

सुः पूजायामिति सूत्रात् सुः कर्म प्रवचनीयकम् ।
सुसिक्तं सुस्तुतं शब्दे षत्वं तस्मान्न जायते ॥
पूजातो यदि भिन्नोऽर्थः सुषिक्तं तत्र उच्यते ॥

अतिरतिक्रमणे च । १ । ४ । ९५ ।

अतिरति क्रमणे च सूत्रेणातिक्रमेऽर्चने ।
कर्मप्रवचनीयोऽतिः द्वितीया तत्र जायते ॥

अतिदेवान् वासुदेवः वाक्यमेवमुदाहरेत् ।
अतिसिक्तमतिस्तुतमादौ षत्वं न स्यात्ततः ॥

अपिः पदार्थ संभावनाऽन्यवसर्गगर्हासमुच्चयेषु । १ । ४ । ९६

अपिः पदार्थे संभावनायां वाऽन्वव सर्गके ।
गर्हायां समुच्चये वा वर्तते यदि तत्र च ॥
कर्मप्रवचनीयत्वं द्वितीयाया विधायकम् ।

उदाहरणम्—

सर्पिषोऽपिस्यात्प्रयोगे पदार्थो विन्दुरस्ति वै ॥
तस्मिन्नर्थे अपेः कर्मप्रवचनीयमुच्यते ।
उपसर्गत्वमित्यत्र वर्तते नेति बुध्यताम् ।
तस्मात्षत्वं न जायेत स्यात्पदे अपितः परे ॥
अपि स्तुयाद्विष्णुमत्र शक्त्युत्कर्षबोधनम् ।
इयं संभावनाज्ञेया फलं स्तुयात् पदे न षः ॥
अपिस्तुहि हरिं, सिञ्च लतां वा वाक्ययोजने ।
अन्ववसर्ग आख्यातः कर्मप्रवचनीयम् ॥
स्तुहि सिञ्च पदे तस्मात् षत्वं नेति फलं स्मृतम् ।
अपि स्तुयाद्वृषतं सः गर्हायामपिरस्ति वै ॥
षत्वं नानुपसर्गत्वात् स्तुयात्पदे ततोऽभवत् ।
अपि स्तुहि सिञ्च वाक्ये समुच्चयस्तु वर्तते ॥
षत्वाभावः फलं पूर्ववदेवात्रापि बुध्यताम् ।

कालाऽध्वनोरत्यन्तसंयोगे । २ । ३ । ५

कालेन अध्वना यत्र संयोगः स्यान्निरन्तरः ।
द्वितीया तत्र कर्त्तव्या कालाध्वनोस्तु शब्दयोः ।।

उदाहरणम्—

मासं भवति कल्याणी मासं मिष्टान्नभोजनम् ।
नदीयं कुटिला क्रोशं क्रोशं गिरिश्च वर्तते ।।
यत्र नात्यन्तसंयोगस्तत्रषष्ठ्येवजायते ।
द्विरधीते स मासस्य मध्ये क्रोशस्य पर्वतः ।।

तृतीयाविभक्तिनियमः ।

कर्तरि करणे हेतौ तृतीया क्रियते यथा ।।
तत्सर्वं दर्श्यते सम्यक् सोदाहरणलक्षणम् ।

कर्तृलक्षणम्—

स्वतन्त्रः कर्ता । १ । ४ । ५४ ।

स्वतन्त्रः पुरुषः कर्ता वाक्ये क्रियासु कथ्यते ।
प्रधानीभूतधात्वर्थाश्रयत्वञ्च स्वतन्त्रता ।।
धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते ।
स्थाली पचति रूपं स्यात् स्थाल्या पच्यत इत्यपि ।।

साधकतमं करणम् । १ । ४ । ४२

साधकतमंकरणं सूत्रस्यार्थस्तु क्रियते ।
क्रियासिद्धौ प्रकृष्टोपकारकं करणं मतम् ।।

कर्तृकरणयोस्तृतीयाः । २ । ३ । १८

अनुक्ते कर्तृकरणे तृतीया क्रियते बुधैः ।
रामेण निहतो बाली बाणेन समुदाहृतम् ।।

रामेणेति तृतीयाऽत्रकर्तरि करणे शरात् ।

**करणलक्षणम्—**

क्रियायाः परिनिष्पत्तिर्यद् व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत् तदा भवेत् ॥
काष्ठैः पचति, चक्षुर्भ्यां पश्यति छिद्यतेऽसिना ।
वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम् ॥
स्थाल्या पच्यते इत्येषा विवक्षा दृश्यते यतः।

**अत्र फक्किका—**

पदं कारकं पूर्वतश्चानुवृत्तं
ततः साधकस्यार्थ आयाति एव ।
स्थितं साधकं स्यात् प्रकृष्टार्थदायि
तदर्थं तमप्सूत्रमध्ये किमर्थम् ? ॥

तदस्मात् प्रकारात् तमब्व्यर्थमेव-नवं न्यायमेकं समाविष्करोति ।
प्रकर्षो नचाश्रीयते शब्दगम्यः-क्वचित्कारकस्याधिकारे तथाहि ॥

भवेत् सप्तमी किञ्चिदाधाररूपे प्रयोगेऽथवा गौणरूपेऽत्र वाक्ये ।
अतः पूर्ण आधारवत्येव कार्या-विभक्तिः सदा सप्तमी तत्र वाच्यम् ॥

मुनेरस्य वासस्तटिन्यां सुराणां-महान् घोष एषोऽथवा नर्मदायाम् ।
भवेत् सप्तमी किन्तु गौणेऽथमुख्ये-न तैलं तिलेष्वादिवाक्येषु एव ॥

प्रकृत्यादिभ्य उपसंख्यानम् । वा०

प्रकृतिप्रायगोत्राद्यैस्तृतीया क्रियते सदा
अभेदान्वय इत्यत्र प्रकृत्या चारुरस्त्ययम् ।
अत्र षष्ठी विभक्तेर्हि प्राप्तिः साऽनेन बाध्यते ॥
प्रायेण[१] याज्ञिको विप्रः गोत्रेण[२] गार्ग्य आगतः ।

( गार्ग्योऽस्यगोत्रमित्यर्थः )

[३]समेनैति सुखेनैति आकृत्या गण्यतामिदम् ।
सुतीक्ष्याः केवलं नाम्ना दान्तस्तु चरितेन सः ॥

**अत्र विशेषः—**

करणत्वं भवेदत्र गम्यमानक्रियां प्रति ।
तदर्थमुपसंख्यानं प्रकृत्यादीनि नोचितम् ॥

## दिवः कर्म च । १ । ४ । ४३ ।

दिवः कर्म च सूत्रेण दिवः साधकतमेन च ।
कर्मसंज्ञा करणसंज्ञा अक्षैरक्षांश्च दीव्यति ॥

## अपवर्गे तृतीया । २ । ३ । ६

अपवर्गे तृतीयेति सूत्रस्यार्थविवेचनम् ।
अपवर्गो फलप्राप्ति र्यत्रास्ति वाक्ययोजने ॥
कालाध्वनोस्तृतीया स्यात् अह्नाऽधीता ऋचा मया ।
द्विक्रोशेनानुवाकोऽधीतः केनापि श्रूयते ॥
मासमधीतो नायातः अपवर्गो न विद्यते ।
तस्मादत्र द्वितीयैव कृता च प्रत्युदाहृतौ ॥

## सहयुक्तेऽप्रधाने । २ । ३ । १९

सहाद्यर्थकशब्देन युक्ते सत्यप्रधानतः ।
विभक्तिः स्यात्तृतीया सह पुत्रेण स गतः ॥
साकं सार्द्धं समंभ्राता बालकोऽयमिहागतः ।
वृद्धो यूनेतिं निर्देशात् क्वचिदर्थोपलक्षणे ॥
सहादीनामभावेऽपि तृतीया दृश्यते पुनः ॥

## येनाङ्गविचारः । २ । ३ । २०

सूत्रं येनाङ्ग विकारोऽस्यार्थः स्पष्टोऽत्र ईदृशः ।
येनाङ्गेन विकारोहि ज्ञायते क्वचिदङ्गिनः ॥
तद्वाचिनस्तृतीयास्यादक्ष्णा काणः स उच्यते ।
खञ्जः पादेन हस्तेन कुडिरेष जनोऽभवत् ॥

## इत्थंभूतलक्षणेः । २ । ३ २१

इत्थंभूत लक्षणेऽस्ति सूत्रं निम्नार्थबोधकम् ।
काचिद् बिशेषता प्राप्ता यस्मात् तन्नामतः सदा ।
तृतीया क्रियते वाक्ये जटाभिस्तापसोऽस्त्ययम् ॥

## संज्ञोऽन्यतरस्यां कर्मणि । २ । ३ । २२

संपूर्वस्य च जानातेस्तृतीयाकर्मणि स्मृता ।
पित्रा वा पितरं बालः संजानीते उदाहरेत् ।

हेतौ । २ । ३ । २३

हेतौ सूत्रेण हेत्वर्थे तृतीया क्रियते सदा ।

हेतु लक्षणम्—

फलस्य साधनीभूतः हेतुरित्यभिधीयते ॥
द्रव्यादि विषयो हेतुः कारकं नियतक्रियम् ।
अनाश्रिते तु व्यापारे निमित्तं हेतुरुच्यते ॥
द्रव्यं गुणं क्रियादिश्च जनयन् सक्रियोऽक्रियः ।
हेतुशब्देन ज्ञातव्यः करणादस्ति भेदवान् ॥
दण्डेनायं घटो जातः दण्डो हेतुर्घटस्य वै ।
साक्षात् क्रिया न दण्डेऽत्र तस्मान्न करणं स च ॥
हरिः पुण्येन दृष्टोऽत्र हेतुः पुण्यं हि दर्शने ।
व्यापारो नहि पुण्येऽत्र करणत्वं कुतस्तदा ॥
अध्ययनेन वसति हेतुरध्ययनं भवेत् ।
अध्ययने क्रिया नैव वर्तते करणं न तत् ॥
हेतु करणयो र्भेदं ज्ञात्वा वाक्यं विधीयताम् ।
गम्यमाना क्रिया क्वापि विभक्तीनां प्रयोजिका । वा
अलं श्रमेण वाक्येऽत्र करणं श्रम उच्यते ॥
अलं श्रमेण वाक्यस्य साध्यं नास्ति विवेचनम् ।
अत्र साधन क्रिया गम्या तत्रास्ति करणं श्रमः ॥
वत्सान् पाययति पयः द्विशतेन शतेन च ।
परिच्छेदेऽत्रगम्येऽर्थे शतं तु करणं भवेत् ॥

अशिष्ट व्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया । वा०

अशिष्ट व्यवहारेषु; दा दाने यदि कथ्यते ।
चतुर्थ्यर्थे तृतीयाऽत्र जायते सम्प्रदानता ॥

उदाहरणम्—

दास्या संयच्छते वित्तं कामुको व्यभिचारवान् ।
संयच्छति स भार्यायै भूषणं धर्म एव स्यात् ॥
कर्तु र्हेतोश्च करणस्य लक्षणं संविमर्शयन् ।
यथायोग्यं प्रयोगोऽत्र क्रियतां वाक्ययोजने ॥



# चतुर्थीविभक्तिनियमः

कर्मणायमभिप्रैति स सम्प्रदानम् । १ । ४ । ३२

कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञकः ।

चतुर्थी सम्प्रदाने । २ । ३ । १३

चतुर्थी सम्प्रदाने स्यात् विप्राय गां ददाति सः ॥
दाधातोः कर्मणा यस्य संबन्धः क्रियते यदा ।
तदा तत् सम्प्रदानं स्याच् चतुर्थी तत्र जायते ॥

अत्र विशेष विचारः—

सम्यक् प्रदीयते यस्मै तत्सम्प्रदानमुच्यते ।
अन्वर्थोयमस्ति संज्ञा वृत्तिकारादिरुक्तवान् ॥
रजकस्य वस्त्रदाने सम्प्रदानं न विद्यते ।
हनतः पृष्ठं ददात्यादौ चतुर्थी नाऽभवत् ततः ॥
भाक्तो ददातिर्यत्रास्ति सम्प्रदानं न तत्र स्यात् ।
स्व-स्वत्वश्च निवर्त्यैव परस्वत्वप्रयोजकम् ।
अपुनर्ग्रहणं दानं रजकादौ न तादृशम् ।
पुण्यस्य जनकं यत्र दानं तत्सम्प्रदानकम् ॥
चतुर्थी सम्प्रदानत्वाद्–वृत्तिकारमतं स्फुटम् ।
भाष्यकारमते चेयमन्वर्था संज्ञा नहि ।
दाधातोः कर्मणा यंहि अभिप्रैति तदर्थकात् ।
तस्मादेव हि शिष्याय चपेटां प्राददाद्गुरुः ॥
न शूद्राय मतिं दद्यात् भृत्याय वेतनं ददौ ।
दासाय भोजनं प्राददित्यादि वाक्यमुच्यते ॥
अस्मिन् मते तु प्राप्नोति रजकाय वस्त्रं ददौ ।
किन्तु शेषविवक्षायां षष्ठीभाष्यमतेऽपि स्यात् ।
एतादृशप्रयोगेषु शेषत्वस्य विवक्षया ।।
षष्ठ्येव कर्तुमुचिता —नटस्य–शृणुते यथा ।
ददाति वस्त्रं रजकस्य परिष्कार्यत्वमादि च ॥

सम्बन्धो वस्त्रभूषादावित्येवं ज्ञायतां रहः ।

तस्मात्—

अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।।
प्रेरणानुमतिभ्याञ्च—लभते सम्प्रदानताम् ।
ददात्यर्घ्यं स सूर्याय अनिराकरणंत्विह ।
विप्राय गां ददात्यत्र प्रेरकत्वं विलोक्यते ।।
गुरवे गां ददात्यत्र अनुमन्तृत्वमत्र वै ।।

सारांशः—

धात्वर्थाऽवच्छेदकीभूत स्वत्वाख्यफलवत्तया ।
धनादेर्दानकर्मत्वं विप्रादेः सम्प्रदानता ।।

यत्क्रियाकरणीभूतेन यत्क्रियाकर्मणा यं सम्बन्धी कर्तुमभिप्रैति तत्क्रिया तत्क्रियाजनकेच्छाऽन्यतरफलभागित्वेनोद्देश्यीकरोति कर्ता स सम्प्रदानमिति रहस्यम् ।

न्यायशास्त्रसंमतं सम्प्रदानत्वम्—

गत्यादि भिन्ने धात्वर्थे चतुर्थ्या विग्रहस्थया ।
यः स्वार्थो बोधनीयस्तत्सम्प्रदानमीरितम् ।। श. प्र. ।

स्पष्टता—

गत्यादि भिन्ने—यद्धातूपस्थाप्ये यादृशार्थे विग्रहस्थचतुर्थ्या यः स्वार्थो बोधयितुं शक्यते स तद्धातूपस्थाप्य तादृशक्रियायां सम्प्रदानत्वम् । ब्राह्मणाय दानं धनस्येत्यादौ सत्वजनकस्त्यागोऽर्थस्तन्निविष्टे च सत्वे ब्राह्मणादेः प्रतियोगित्वं चतुर्थ्या बोध्यते इति तदेव तत्र सम्प्रदानत्वम् ब्राह्मणप्रतियोगिकं यद्धनवृत्तिस्वत्वं तज्जनकस्त्याग इत्येवं तत्र बोधनात् ।।

अत्र वस्तु विशेषः—

प्रश्नः—तादर्थ्ये च चतुर्थी भविष्यति किमर्थं क्रियते सूत्रम् ?

उत्तरम्—

दानक्रियार्थमेतत् सम्प्रदानं भवितुमर्हिष्यति खलु ।
दान क्रियातदर्था-भवितुमर्हति नेति जानीहि ।।
क्रियार्थत्वं कारकस्य संभवति नतु दानक्रियायाः ।।

अथ प्रकृतम्—

क्रियया यमभिप्रैति सोऽपि सम्प्रदानम् । वा ।

यया कयापि क्रियया यमभिप्रैति कुत्रचित् ।
सोऽपि सम्प्रदानसंज्ञः पत्ये शेते प्रयुज्यताम् ॥

यजेः कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्म संज्ञा । वा ।

कर्मणः करण संज्ञा यज्धातोर्विधीयते ।
तृतीया तत्र कर्तव्या चतुर्थी सम्प्रदानतः ॥
पशुना यजते रुद्रं प्रयोगः क्रियते तदा ।
पशुं रुद्राय ददाति तात्पर्यमस्य जायते ॥

रुच्यर्थानां प्रीयमाणः । १ । ४ । ३३

रुच्यर्थानां प्रीयमाणः सूत्रस्यार्थस्तु जायते ।
रुच् धातोः प्रयोगेषु चतुर्थी प्रीयमाणतः ॥
हरये रोचते भक्तिः—खेलं बालाय रोचते ।
हरिबालपदस्यात्र-सम्प्रदानं विधीयते ॥

श्लाघ हुङ् स्थाशपां ज्ञीप्समानः । १ । ४ । ३४

श्लाघ हुङ् स्थाशपां ज्ञीप्समानः सूत्रं प्रसिद्ध्यति ।
चतुर्धातुप्रयोगेषु येषां बोधयितुमिच्छति ॥
विधाय सम्प्रदानं तं चतुर्थी क्रियते ततः ।
कृष्णाय श्लाघते गोपी तिष्ठते शपतेऽथवा ॥
एतस्मिन् सर्वप्रयोगे-चतुर्थी कृष्णतोऽभवत् ।

धारेरुत्तमर्णः । १ । ४ । ३५

सूत्रं धारेरुत्तमर्ण स्तात्पर्यमस्य ज्ञायताम् ।
धारिधातुप्रयोगे तु चतुर्थी उत्तमर्णतः ॥
उत्तमर्णो धनस्वामी यस्य धारयते ऋणी ।
सम्प्रदानमुत्तमर्णो मोक्षं भक्ताय धारयति ॥

स्पृहेरीप्सितः । १ । ४ । ३६

स्पृहयतेः प्रयोगेषु इष्टोऽर्थः सम्प्रदानकः ।
चतुर्थी तत्र कर्तव्या स पुष्पेभ्यः स्पृहयति ॥

इष्टमात्रे इयं संज्ञा-इष्टतमे तु कर्म स्यात् ।
पुष्पाणि स्पृहयत्यत्र द्वितीयैव प्रवर्तते ॥

क्रुध द्रुहेर्ष्याऽसूयार्थानां यं प्रति कोपः । १ । ४ । ३७

क्रुधद्रुदेष्यीऽसूवानां प्रयोगे सति यं प्रति ।
कोपो भवति तत्रैव चतुर्थी संप्रदानतः ॥

हरये क्रुध्यति रक्षः द्रुह्यतीर्ष्यत्यसूयति ।
हरिशब्दाच्चतुर्थीह कृताऽस्तीति विलोक्यताम् ॥

परस्परमेषामन्तरम्

क्रोधोऽमर्षस्तु ज्ञातव्यो द्रोहोऽपकृतिरुच्यते ।
अक्षमाकरणमीर्ष्या असूया गुणदूषणम् ॥

क्रुधद्रुहोरुपसृष्टयोः कर्म । १ । ४ । ३८

सोपसर्गक्रुधद्रुहोः प्रयोगः क्रियते यदि ।
क्रोधो यं प्रति तत्कर्म द्वितीया तत्र जायते ॥

क्रूरमभिक्रुध्यति सः अभिद्रुह्यति दुर्जनम् ।
क्रूरे दुर्जनशब्देऽत्र चतुर्थी न प्रवर्तते ॥

राधीक्ष्यो र्यस्य विप्रश्नः । १ । ४ । ३९

राधीक्ष्योश्च प्रयोगेषु शुभाशुभ निरीक्षणे ।
कारकं सम्प्रदानं स्यात् कृष्णाय राध्यतीक्षते ॥
पृष्टो गर्गमुनिस्तस्य शुभाशुभं निरीक्षते ॥

प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता । १ । ४ । ४०

प्रत्याङ् पूर्वंशृणोतेर्हि योगे पूर्वस्थिता च या
प्रवर्तनक्रिया तस्याः कर्तुः स्यात्संप्रदानता ।

चतुर्थी तत्र कर्तव्या विप्राय प्रति शृणोति गाम् ॥
विप्राय आश्रृणोत्येषः गामित्यादि प्रयोगके ।

मह्यं गां देहि हे राजन् इति विप्रेण प्रेरितः ।
राजा तत्प्रतिजानीते तात्पर्यमिदमूह्यते ॥

अनुप्रतिगृणश्च । १ । ४ । ४१

**अनुप्रतिगृणः सूत्रं गृणातेः कर्तृकारकात् ।**
**सम्प्रदानं विधायास्मात् चतुर्थीमेव कारयेत् ॥**
**अनुगृह्णाति होत्रे सः प्रतिगृह्णाति वा वदेत् ।**

परिक्रयणे सम्प्रदानमन्यतरस्याम् । १ । ४ । ४४

**किञ्चित्कालाय भृत्यादेः स्वीकारोऽस्ति परिक्रयः ।**
**परिक्रयणे च तस्मिन् सम्प्रदानं विकल्पतः ॥**
**साधकतमपदादेः चतुर्थी वा विधीयताम् ।**
**शताय वा शतेनायं परिक्रीतोऽस्ति मे गृहे ॥**

तादर्थ्ये चतुर्थी वाच्या । वा ।

**तादर्थ्ये चतुर्थी स्यात् हरिं भजति मुक्तये ।**
**तस्मै इदं तदर्थं स्यात् तादर्थ्यं तत्प्रयोजनम् ॥**

क्लृपि संपद्यमाने च । वा ।

**क्लृप्त्यर्थकधातुयोगे परिणमते यदात्मना ।**
**तस्माच्चतुर्थी कर्तव्या भक्तिर्ज्ञानाय कल्पते ॥**

उत्पातेन ज्ञापिते च । वा ।

**उत्पातज्ञापिते शब्दे चतुर्थी क्रियते सदा ।**
**वाताय कपिला विद्युदातपाय च लोहिनी ॥**
**पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥**

हितयोगे च । वा ।

**हितयोगे चतुर्थी स्यात् ब्राह्मणाय हितं वदेत् ।**

क्रियार्थोपपदस्य च कर्मणि स्थानिनः । २ । ३ । १४

**क्रियार्था च क्रिया यस्य उपपदं तस्य स्थानिनः ।**
**अप्रयुज्यमान तुमुनः कर्म स्यात् संप्रदानकम् ॥**
**क्रियार्थोपपदस्यात्र कर्मणि तुमुनः सदा ।**
**चतुर्थ्येव विभक्तिः स्यात् फलेभ्यो याति बालकः ॥**
**नमस्कुर्मो नृसिंहाय नमस्कृत्य स्वयंभुवे ।**
**सर्वत्रैव चतुर्थ्येव तुमुनः कर्मणि कृता ॥**

तुमर्थाच्चभाववचनात् । २ । ३ । १५

तुमर्थाद् भाववचनाद् चतुर्थी क्रियते पुनः ।
यागाय याति विप्रोऽत्र यष्टुं याति तदाशयः ॥

नमः स्वस्तिस्वाहा स्वधाऽलंवषड्योगाच्च । २ । ३ । १६

नमः स्वस्तिस्वधा स्वाहाऽलं वषट्शब्दयोगतः ।
चतुर्थी क्रियते वाक्ये यथा श्रीहरये नमः ॥

उपपदविभक्तेः कारकविभक्तिर्बलीयसी । वा ।

नमस्करोति देवान् सः द्वितीयैवात्र जायते ।
उपपदविभक्तेस्तु कर्मसंज्ञा बलीयसी ॥
प्रजाभ्यः स्वस्ति पितृभ्यः स्वधा स्वाहास्तु अग्नये ॥
दैत्येभ्यः समर्थोऽस्ति प्रभुरलं हरिर्मम ।
क्वचित्प्रभ्वादि योगे तु वाक्ये षष्ठ्यपि जायते ॥
त्रिभुवनस्य प्रभुर्विष्णुरादिवाक्यं प्रसिध्यति ।
तुभ्यं बृद्धिरादिवाक्ये चकारेण विधियतम् ॥

मन्यकर्मण्यनादरेविभाषाऽप्राणिषु । २ । ३ । १७

मन्यकर्मणि वा कार्या चतुर्थी हेयबोधने ।
मन्यामहे वयं नैव त्वां तृणाय तृणं शृणु ॥

नौकाकान्न शुकश्रृगाल वर्ज्येषु । वा ।

अत्राप्राणिपदस्थाने नौकाकान्न शुकादयः ।
न त्वां नावमन्नंवा-चतुर्थीनात्र जायते ॥

गत्यर्थकर्मणि द्वितीया चतुर्थ्यौ चेष्टायामनध्वनि । २ । ३ । १२

द्वितीया स्यात् चतुर्थी च गत्यर्थधातुकर्मणि ।
अध्वभिन्नं भवेत्कर्म तदैवेदं प्रवर्तते ॥
चेष्टायामपि वक्तव्यं ग्रामं ग्रामाय गच्छति ।
गन्त्राधिष्ठित मार्गेषु निषेधोऽस्तीति बुध्यताम् ।
उत्पथेन पथे गच्छ चतुर्थ्येव तदा भवेत् ॥

इति चतुर्थीविभक्तिप्रयोजकसंप्रदानकारकम्



## अथापादानकारकम्

ध्रुवमपायेऽपादानम् । १ । ४ । २४ ।

ध्रुवमपायेऽपादानं सूत्रमत्र विविच्यते ।
अपायार्थो विभागोऽस्ति—विभागस्यावधिर्ध्रुवम् ॥

अपादाने पञ्चमी । २ । ३ । २८ ।

यद्ध्रुवं तदपादानं तस्माद् भवति पञ्चमी ।
ग्रामादायाति मे भ्राता वृक्षात्पतति पत्रकम् ॥
विश्लेषो वर्तते ग्रामाद्-वृक्षात् तेनात्र पञ्चमी ॥

अत्र विश्लेषविचारविशेषः ।

परकीयक्रियाजन्यविभागाश्रयमेव हि ।
अपादानं भवेत्तेन स्वस्मात् पतति नैव स्यात् ॥
अकर्मकक्रियावाचि धातुयोगेऽत्र पञ्चमी ।
वृक्षाच्चलति कस्मान्न स्यन्दते वा भवेत्पदम् ॥
वृक्षादवैति इत्यत्र अवैतिः पतनार्थकः ।
अधःसंयोग एवेह पतेरर्थः प्रसिद्ध्यति ॥
गुरुत्वजन्यपतनत्वजात्यवच्छिन्नमेव वा ।
सकर्मकः पतिर्नैव विभागः स्वयमत्र वै ॥
पतनत्वात्समायाति तस्मादयमकर्मकः ।
तरोस्त्यजति नैव स्यात् त्यजिर्यतः सकर्मकः ।
तरुं त्यजति काकारि र्दुष्टं जहाति सज्जनः ॥
त्यजतेश्च जहातेश्च विभागोऽर्थः प्रसिद्ध्यति ।
कर्मसंज्ञा भवेत् तस्मात् नापादानं कथञ्चन ॥
खगो विभजते वृक्षात् इत्यत्रार्थोऽवधित्वमिति ।
धात्वर्थे चावधित्वं निरूपकत्वं बोध्यते ॥
अपसरिष्यतो मेषौ परस्परादिमाविह ।
गतिद्वयमुपादत्तो सृधातुरिति बुध्यताम् ॥

अपरस्यापसरणमेकनिष्ठां गतिं प्रति ।
एवमन्यत्र विज्ञेयं पञ्चम्या उपपादने ॥

एतस्यैव पुष्टिः सिद्धान्तग्रन्थेन—

मेषान्तरक्रियाऽपेक्षमवधित्वं पृथक् पृथक्

न्यायसंमतमपादानत्वम्—

क्रियाधर्मिणि यः स्वार्थः पञ्चम्या विग्रस्थया ।
अनुभाव्यः कारकन्तदपादानत्वसंज्ञकम् ॥ श० प्र०

सारांश—

यद्धातूपस्थाप्य याद‍ृशार्थे विग्रहवाक्यस्थ पञ्चम्या यः स्वार्थोऽनुभावयितुं शक्यः स तद्धातूपस्थाप्य ताद‍ृशक्रियायामपादानत्वं भवति ।

अपाये यदुदासीनं चलं वा यदि वाऽचलम् ।
ध्रुवमेवातदावेशात्तदपादानत्वमुच्यते ॥
पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ ।
तस्मादप्यश्वस्य पतने कुडयादि ध्रुवमिष्यते ॥
[१] निर्दिष्ट विषयं किञ्चिदुपात्त[२] विषयं तथा ।
अपेक्षित[३] क्रियञ्चेति त्रिधाऽपादानमिष्यते ॥
यत्र साक्षाद्गतिर्वाक्ये निर्दिश्यते तदादिमम् ।
अश्वात् पतति वृक्षाद्वा पततीत्यादि मन्यते ॥
सार्थाद्धीयत इत्यादि निर्दिष्टविषयं पुनः ।
यत्रस्वार्थं भवेद् धात्वन्तरार्थाङ्गं विशेषतः ॥
तद्द्वितीयमपादानं विद्योतते वलाहकात् ।
विद्यते निःसरणाङ्ग-विद्योतने इह द्युतिः ॥
अपेक्षितक्रियं ज्ञेयं तृतीयञ्च कुतो भवान् ? ।
ग्रामतो वा विदेशाद्वा चिन्तनीयं क्रमाद्बुधैः ॥
पतति पर्णं वृक्षस्य वृक्षः पर्णविशेषणम् ।
नत्वपायेन संबद्धस्तस्मादत्र न पञ्चमी ॥
नरकं पततीत्यत्र भोगावच्छिन्नमुच्यते ।
तात्पर्यं च पतेरत्र—पातित्यमेव बुध्यताम् ॥

जुगुप्साविराम प्रमादार्थानामुपसंख्यानम् । वा०

**यस्मादत्र जुगुप्सा स्याद् विरामो वा प्रमाद इति ।**
**तस्यापादानसंज्ञा स्यात् पञ्चमी क्रियते ततः ॥**
पापाज्जुगुप्सते साधुः व्यरमत्परपीडनात् ।
धर्मादिमे प्रमाद्यन्ति सर्वमेतद्विचारयेत् ॥

भीत्रार्थानां भयहेतुः । १ । ४ । २५ ।

**भयार्थानाञ्च धातूनां त्राणार्थानाञ्च योगतः ।**
**भयहेतुरपादानं पञ्चमी तत्र जायते ॥**
चौराद्विभेति धनवान् चौरेभ्यस्त्रायते नृपः ।
भयहेतोरभावे न वने बिभेति त्रायते ॥
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ।
अत्रान्वयस्य वैचित्र्याद् भयहेतु र्न किम्पदे ॥
अत्रान्वयः संयुगेऽस्ति कस्येत्यस्येति बुध्यताम् ।

पराजे रसोढः । १ । ४ । २६ ।

**पराजेस्तु प्रयोगेषु न सहनीयमस्ति यत् ।**
**तदसोढमपादानं तस्माद्भवति पञ्चमी ॥**
कक्षायां तीक्ष्णबुद्धीना मध्ययनात्पराजये ।
त्वं पराजयसे किन्न हे मन्त्रिन् स्वार्थसाधनात् ॥

वाराणार्थानामीप्सितः । १ । ४ । २७ ।

**वारणार्थकधातूनां प्रयोगे-पदमीप्सितम् ।**
**अपादानं भवति तद्—यवेभ्यो गां निवारय ॥**

अन्तर्धौ येनादर्शनमिच्छति । १ । ४ । २८ ।

**व्यवधाने सति यस्यात्र पुंसोऽदर्शनमिच्छति ।**
**तदपादानसंज्ञं स्यात्—कृष्णो मातु र्निलीयते ॥**
अभावे व्यवधानस्य चौरान्न स दिदृक्षते ।

आख्यातोपयोगे । १ । ४ । २९ ।

**नियमपूर्वकविद्यायाः पठने गुरुनामतः ।**
**पञ्चमी स्यादपादानादुपाध्यायादधीयते ॥**

जनिकर्तुः प्रकृतिः । १ । ४ । ३०

जनिकर्तुश्च प्रकृते रपादानं विधीयते ।
आनन्दो जायते पुत्रात् जायन्ते ब्रह्मणः प्रजाः ॥

भुवः प्रभवः । १ । ४ । ३१ ।

जनि कर्तुः प्रभवस्थान मपादानपदं भवेत् ।
गङ्गा नदी प्रभवति हिमालयात्प्रत्युज्यताम् ॥

जनिप्रभवयोर्भेदः—

प्रादुर्भावस्त्वभूतस्य जनिरित्यवगम्यताम् ।
प्रभवस्त्वन्यसिद्धस्य प्रथमं दर्शनं भवेत् ॥

ल्यब् लोपे कर्मण्यधिकरणे च । वा०

ल्यब् लोपे तु यत्कर्म अधिकरणमित्यपि ।
अपादानं भवत्येव प्रासादात्प्रेक्षते जनः ॥
आरुह्य किल प्रासादं प्रेक्षते इति बुध्यते ।
आसनात्प्रेक्षते विज्ञो जिह्रेति श्वशुराज्जनः ॥
आसने उपविश्येति श्वशुरं वीक्ष्य बुध्यते ।

गम्यमानापि क्रियाकारकविभक्तीनां निमित्तम् । वा ।

गम्यमाना क्रिया क्वापि निमित्तं कारके भवेत् ।
अपादानं पञ्चमी च कस्मात् त्वं नद्या इति ॥

यतश्चाध्वकालनिर्माणं तत्र पञ्चमी । वा०

तद्युक्तादध्वनः प्रथमासप्तम्यौ । वा०

कालात्सप्तमी च वक्तव्या । वा०

यस्माद्भवति निर्माणमध्वनः समयस्य वा ।
पञ्चमी तत्र वक्तव्या वनाद् ग्रामोऽस्तियोजनम् ।
सप्तम्यप्यध्वनो वाच्या वनाद् ग्रामोऽस्ति योजने ॥
कार्तिक्या आग्रहायणी मासे इति प्रयुज्यताम् ।
कालार्थकपदादत्र केवलं सप्तमी भवेत् ॥

अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहि
युक्ते । २ । ३ । २९

अन्यारादितरर्त्ते दिक् शब्दाञ्चूत्तरपदादिभिः ।
आजाहिभ्याञ्च योगेषु पञ्चमी क्रियते सदा ॥

उदाहरणानि–

अन्यो भिन्न इतरो वा कृष्णात्कोऽपि न मे प्रभुः ।
आराद् वनाद् वसाम्यत्र पायात्कृष्णादृते च कः ॥
घटः पटो नेति वाक्ये पञ्चमी नैव जायते ।
द्योतकत्वं निपातानां वाचकत्वं न विद्यते ॥
ततोऽन्यत्रापि कर्तव्या पञ्चमीति विचार्यते ।
चैत्रं यावद् भवेच्छीतमित्यादौ कर्म एव च ॥
पूर्वो ग्रामात् तथा पूर्वः चैत्रात्फाल्गुन उच्यते ।
कुटी प्राक् प्रत्यग् ग्रामादिति वाक्यं विलोकय ॥
दक्षिणाहि दक्षिणा ग्रामाद्–वाटिका शोभना तव ।
भवात्प्रभृति आरभ्य-सेव्यो हरिश्च साध्यताम् ॥
अप परि बहिः सूत्रज्ञापकत्वाद्बहिर्युते ।
अपादानं पञ्चमी च ग्रामाद्बहिः प्रयाति सः ॥

अपपरी वर्जने । १ । ४ । ८८ ।

अपपरी वर्जने स्यातां कर्मप्रवचनीयकौ ।

आङ् मर्यादावचने । १ । ४ । ८९ ।

आङ् मर्यादार्थकेकार्यः कर्मप्रवचनीयकः ॥

पञ्चम्यपाङ्परिभिः । २ । ३ । १०

एभिः कर्मप्रवचनीयैर्युक्तेन पञ्चमीभवेत् ।
अपहरेः परिहरेः आमुक्तेः संसार इति ॥

प्रतिः प्रतिनिधिप्रतिदानयोः । १ । ४ । ९२ ।

प्रतिनिधौ प्रतिदाने प्रतिः स्यादुक्तसंज्ञकः ।

प्रतिनिधिप्रतिदाने च यस्मात् । २ । ३ । ११

तद्योगे पञ्चमी प्रोक्ता प्रद्युम्नः कृष्णात्प्रति ॥

तिलेभ्यः प्रतियच्छन्ति माषान् ते इति कथ्यते।
कर्मप्रवचनीयस्य प्रते र्योगेऽत्र पञ्चमी॥

अकर्तर्यृणे पञ्चमी। २। ३। २४।

अकर्तरि ऋणे वाच्या पञ्चमी हेतुभूततः।
शताद्बद्धः प्रयोगः स्यात् शतेन बन्धितोऽन्यतः॥

विभाषागुणेऽस्त्रियाम्। २। ३। २५।

अस्त्रीलिङ्गे गुणे हेतौ विभाषा पञ्चमी भवेत्।
जाड्याज्जाड्येन वा बद्धः वाक्यमेतदुदाहृतम्॥

अत्र विशेषः—

विभाषा योग विभागाद्-अगुणे च स्त्रियां क्वचित्:
नास्ति घटोऽनुपलब्धेः धूमात्स गिरिरग्निमान्॥

पृथग् विनानानाभिस्तृतीयाऽन्यतरस्याम्।२।३।३२।

नाना विना पृथग् योगे तृतीया पञ्चमी तथा।
द्वितीयाऽपि च कर्तव्या प्रयोगं स्वेच्छया कुरु॥
पृथग् रामेण रामाद् वा रामं सुखं न वर्तते।
मात्रा विना मातरं वा नाना नारीं गृहं वनम्॥

करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्व-
वचनस्य। २। ३। ३३।

स्तोकाल्पकृच्छ्रशब्दानां करणे कतिपयस्य च।
एभ्योऽद्रव्यवाचिभ्यो तृतीया पञ्चमी तथा।
मुक्तः स्तोकेन स्तोकाद्वा-कृच्छ्रात्कृच्छ्रेण वा गतः॥
द्रव्यार्थे तु तृतीयैव स्तोकेन पयसार्चितः।

दूरान्तिकार्थेभ्यो द्वितीया च। २। ३। ३५।

दूरान्तिकार्थवाचिभ्यो विभक्तित्रयमिष्यते।
द्वितीयाऽथ तृतीया च पञ्चमी च यथेच्छया॥
तस्य ग्रामस्य दूरेण दूराद् दूरं पुरं मम।
अन्तिममन्तिकात्काश्याः विन्ध्याचलो विराजते॥

इत्यपादानकारकम्



## अथ षष्ठीविभक्तिनियमः

षष्ठी शेषे । २ । ३ । ५० ।

शेषो भवति सम्बन्धः तस्य भेदाः शताधिकाः ।
स्वस्वानी जन्यजनकः गुरुशिष्यादिनामतः ॥
योऽपि वा सोऽपि वा शेषस्तत्र षष्ठी विधीयते ।
राज्ञः पुरुष आयातः कैकेय्याः भरतः सुतः ॥
कर्मादिकारकादीनां सम्बन्धस्य विवक्षया ।
षष्ठ्येव जायते तत्र मातुः स्मर सतां गतम् ॥

षष्ठी हेतु प्रयोगे । २ । ३ । २६ ।

हेतु शब्द प्रयोगेषु श्रुते द्योत्ये तथैव च ।
षष्ठी तत्र च अन्नस्य हेतो र्वसति कथ्यते ।

सर्वनाम्नस्तृतीया च । २ । ३ । २७ ।

सर्वनाम्नस्तथा हेतुशब्दोक्तौ द्योतनेऽथवा ।
तृतीया स्यात् तथा षष्ठी वसति केन हेतुना ॥
कस्य हेतोः प्रयोगोऽपि क्रियतां स्वेच्छया त्वया ।

निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम् । वा० ।

निमित्तपर्याययोगे सर्वासां प्रायदर्शनम् ॥
किं निमित्तं वसत्यत्र निमित्तेनात्र केन वा ।
निमित्ताय गतः कस्मै निमित्तात्स कस्माद्गतः ॥
किं कारणं पश्यति सः केन वा कारणेन वा ।
किं प्रयोजनमायातः प्रयोजनेन केन वा ॥
कस्मै प्रयोजनायेति वक्तव्यं स्वेच्छया त्वया ।

षष्ठ्यतसर्थप्रत्ययेन । २ । ३ । ३० ।

अतसर्थप्रत्ययस्य योगे षष्ठी विधीयते ।

दक्षिणतो ग्रामस्यास्ति पुरस्तात्पुर एव वा।
उपरि उपरिष्टाच्च प्रासादस्य नभः स्थितिः ॥

एनपा द्वितीया । २ । ३ । ३१ ।

एनबन्तस्य योगे तु द्वितीया स्याच्च षष्ठ्यपि ।
दक्षिणेन निवासोऽस्ति ग्रामं ग्रामस्य वा मम ॥
भारतमुत्तरेणास्ति नेपालञ्च हिमालयः ।

दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् । २ । ३ । ३४ ।

दूरान्तिकार्थयोगेतु षष्ठी तथैव पञ्चमी।
ग्रामस्य निकटं दूरं ग्रामाद्वा क्षेत्रमस्ति मे ॥

ज्ञोऽविदर्थस्य करणे । २ । ३ । ५१ ।

अज्ञानार्थकज्ञाधातोः षष्ठी स्यात् करणे खलु ।
सर्पिषो ज्ञानमित्यस्य सर्पिषा च प्रवर्तते ॥

अधीगर्थदयेशां कर्मणि । २ । ३ । ५२ ।

अधीगर्थ दयेशानां षष्ठी कर्मणि जायते ।
मातुः स्मरण मुच्चार्य सर्पिषो दयनं वदेत् ॥
मातुः स्मरणमत्र स्यात् षष्ठी मातरि कर्मणि ।
सर्पिष ईशनं रूपमित्येवं खलु जायते ॥

कृञः प्रतियत्ने । २ । ३ । ५३ ।

कृञः कर्मणि षष्ठी स्याद् गुणाधानेषु केवलम् ।
अत्र एधोदकस्य उपस्करणमुच्यते ।

रुजार्थानां भाववचनानामज्वरेः । २ । ३ । ५४ ।

ज्वरिवर्जितरुजार्थ धातूनां भाववाचिनाम् ।
षष्ठी कर्मणि शेषे स्याद् रुजा चौरस्य कथ्यते ॥

अज्वरि सन्ताप्योरिति वाच्यम् । वा० ।

सन्तापेरपि निषेधोऽस्ति षष्ठ्यास्तु ज्वरिवत् खलु।
रोगस्य चौरसन्तापः चौरज्वरो वा विद्यते ॥

आशिषि नाथः । २ । ३ । ५५ ।

शेषेकर्मणि षष्ठी स्याद्—आशीरर्थस्य नाथतेः ।
सर्पिषो नाथनं वाक्ये आशासनं प्रतीयते ।।

जासिनिप्रहणनाटक्राथपिषां हिंसायाम् । २।३।५६ ।

एषां कर्मणि षष्ठी स्मात् हिंसार्थस्य समुद्भवे ।।
निहननं प्रहणनम् प्रणिहननं तथैव च ।
चौरस्य निप्रहणं सर्वं वक्तुं सुशक्नुयात् ।।
चोरस्योन्नाटनमेवं चौरस्य क्राथनं वदेत् ।
पेषणं वृषलस्यापि धानाशेषणमत्र न ।।

व्यवहृपणोः समर्थयोः । २ । ३ । ५७ ।

व्यवपूर्वकहृधातोः पणधातोश्च कर्मणि ।
षष्ठी भवति वाक्येषु व्यवहारार्थयोरिह ।।
शतस्य व्यवहरणं पणनं वा प्रयुज्यते ।
नेदं ब्राह्मणपणने शलाकाव्यवहारके ।।

दिवस्तदर्थस्य । २ । ३ । ५८ ।

दिवः कर्मणि षष्ठी स्यात् द्यूतार्थे क्रय-विक्रये ।
शतस्य दीव्यति कोऽपि सहस्रस्यापि दीव्यति ।।

विभाषोपसर्गे । २ । ३ । ५९ ।

सोपसर्गकदिव्धातोः षष्ठी कर्मणि वा भवेत् ।
प्रतिदीव्यति शतं सः शतस्य प्रतिदीव्यति ।।

प्रेष्यब्रुवोर्हविषो देवता सम्प्रदाने । २ । ३ । ६१ ।

प्रेषब्रुवोस्तु हविषो देवतासम्प्रदानके ।
षष्ठी स्यात कर्मणस्तत्र हविर्विशेषवाचकात् ।
अग्नये छागस्य वपायाः भेदसः प्रेष्य उच्यते ।

कृत्वोऽर्थ प्रयोगे कालेऽधिकरणे । २ । ३ । ६४ ।

कृत्वोऽर्थानां प्रयोगेषु-कालेऽधिकरणे सदा ।
शेषे षष्ठी विधातव्या द्विरह्नो भोजनं सुखम् ।।
पञ्चकृत्वो दिवसस्य भोजनं न शुभप्रदम् ।।

कर्तृकर्मणोः कृति । २ । ३ । ६५ ।

कृत्प्रत्ययस्य योगेषु षष्ठी स्यात् कर्तृकर्मणोः ।
कृष्णस्य कृति रेषास्ति सृष्टेः कर्ता विधिः स्मृतः ॥

अत्र विशेषः—

क्रियाविशेषणं कर्म तत्र षष्ठी न युज्यते ।
दारुणाध्यापकः शब्दो मस्य लोपेन साध्यते ॥

गुणकर्मणि वेष्यते । वा० ।

गोणे कर्मणि वा षष्ठी कृद्योगे क्रियते बुधैः ।
नेताऽश्वस्य स्रुघ्नस्य स्रुघ्नं वात्र प्रयुज्यताम् ॥

अत्र फक्किका—

कृति किम् ? कृतपूर्वी कटम् ।
कर्तृकर्मद्वयेनात्र क्रियाऽऽक्षेपो भविष्यति ।
तद्वाची धातु रे व स्यात् धातुभ्यः स्युस्तिङः कृतः ॥
तिङ्योगे च विषेधोऽस्ति परिशेषात्कृति भवेत् ।
कृति किं क्रियते सूत्रे ? प्रश्नोऽयं समुपस्थितः ॥
कृतपूर्वी कटं वाक्ये तद्धितप्रत्ययाधिके ।
षष्ठी माभूत् कटादत्र तस्मात्सूत्रे कृति पदम् ॥
केवलञ्च कृतां योगे षष्ठी स्यादिति कृत्पदम् ।

उभयप्राप्तौ कर्मणि । २ । ३ । ६६ ।

यस्मिन् कृत्युभयोरेव प्राप्तिर्भवति तत्स्थले ।
षष्ठी कर्मणि कर्तव्या प्रयोगो दृश्यतामधः ॥
आश्चर्यो गवांदोहः गोपभिन्नजनेन वै ।
पाकश्चैत्रेण ओदनस्य प्रयोगश्च विधीयते ॥

स्त्री प्रत्यययोरकाकारयोर्नायं नियमः ।

अकाकारयोः प्रयोगे स्त्रीप्रत्ययस्थले तथा ।
न निषेधप्रवृत्तिः स्यात् तदुदाहरणं शृणु ॥
भेदिका वा बिभित्सा वा रुद्रस्य जगतः खलु ।
छिदा दात्रस्य वृक्षाणां सक्तूनां भोजिका मम ॥
शायिका तव रात्रीणां हानिरर्थस्य दण्डिनः ।

## शेषे विभाषा । वा०

षष्ठी शेषे विभाषा स्यात् विचित्रा जगतः कृतिः ॥
हरे र्वा हरिणा वाक्यं यथेच्छं संप्रयुज्यताम् ।
अविशेषेण केचिद् वै षष्ठीमिच्छिन्ति पण्डिताः ।
शब्दानामनुशासनमाचार्येणाचार्यस्य वा ॥

## क्तस्य च वर्तमाने । २ । ३ । ६७ ।

वर्तमाने प्रयुक्तस्य क्तस्य योगे तु कर्तरि ।
षष्ठी भवति लोकानां मतः बुद्धोऽथ पूजितः ॥

## अधिकरणवाचिनश्च । २ । ३ । ६८ ।

षष्ठी विधीयते योगे क्तस्याधिकरणवाचिनः ।
इदमेषां गतं भुक्तमासितं वा प्रयुज्यते ॥

## न लोकाव्ययनिष्ठाखलर्थतृनाम् । २ । ३ । ६९ ।

लादेशस्योप्रत्ययस्य उकप्रत्यययोगतः ।
अव्ययस्य च निष्ठायाः योगे खलर्थतृनामपि ॥
षष्ठी नैव विधातव्या पश्योदाहरणान्यधः ।
कुर्वाणः कुर्वन् सृष्टिं हरिरिति प्रयुज्यते ॥
हरिमलं कर्रिष्णुः सः दिदृक्षु र्वा प्रयुज्यताम् ।
श्री हरि र्घातुको दैत्यान् प्रयोगाः विविधाः स्मृताः ॥
प्रत्याहारोऽस्ति तृन्नत्र तस्मादन्यत्र च भवेत् ।

## कमेरनिषेधः । वा० ।

अकान्तस्य कमेर्नैव निषेधः क्रियते खलु ।
कामुकोऽपि हरिर्लक्ष्म्या अत्र षष्ठी विधीयताम् ॥
जगत्सृष्ट्दा सुखं कर्तुं षष्ठी नात्र विधीयते ।
विष्णुना च हता दैत्याः दैत्यान् स हतवान् हरिः ॥
निष्ठा योगे नियेधोऽयं षष्ठ्या भवति ज्ञायताम् ।
ईषत्करः प्रपञ्चोऽस्ति हरिणाऽत्र खलर्थकः ॥
पवमानः सोमदेवं मण्डयमानः स्वं जनः ।
कर्ता लोकान् तथा वेदमधीयन्निति दर्शयेत् ॥

द्विषः शतु र्वा । वा० ।

द्विषः शतुर्विकल्पेन षष्ठी स्यात् कर्मणि पदे ।
द्विषन् हरि मु`रस्यासीत् मुरं वा वाक्यमुच्यते ॥
प्रतिषेधस्तु सर्वोऽयं कारकषष्ठ्या एव स्यात् ।
शेषे षष्ठी भवत्येव-नरकस्य जिष्णुर्यथा ॥

अकेनोर्भविष्यदाधमर्ण्ययोः । २ । ३ । ७० ।

भविष्याधमर्ण्यार्थे च अकेनोः प्रत्यययो रिह
योगे षष्ठी न कर्तव्या पालकोऽवातरत्सतः ।
व्रजं गामी शतं दायी षष्ठीत्यत्र न जायते ॥

कृत्यानां कर्तरि वा । २ । ३ । ७१ ।

कृत्यप्रत्यययोगेषु षष्ठी कर्तरि वा भवेत् ।
हरि देवो मया सेव्यः मम वा सेव्य उच्यते ॥
कर्तव्यः करणीयो वा कृत्यः कार्यः प्रदेय इति ।
पटश्चैत्रस्य चैत्रेण वाक्यं वद विचार्य वै ॥

कृत्यानाम् । कर्तरि वा इति योगविभागश्चात्र ।

कृत्यान्तधातोरर्थेतु बोधश्चेत्कर्तृकर्मणोः ।
द्वयो रपि न षष्ठी स्यात् पश्योदाहरणं ददे ॥
नेतव्या प्रापणीया वा ग्रामं गौ र्गोपमानवैः ।

तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् । २ । ३ । ७२

तुलोपमानभिन्नस्य तुल्यार्थकस्य योगतः ।
तृतीया स्याद्विकल्पेन पक्षे षष्ठी विधीयते ॥
तुल्यः कृष्णस्य कृष्णेन सदृशः सम एव सः ।

चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थ हितैः । २ । ३ । ७३

आशिष्यामुष्य मद्र-भद्र कुशल शब्दस्य योगतः ।
सुखार्थकस्य संयोगे चतुर्थी स्याद् विकल्पतः ॥
हित योगे चतुर्थी स्यात् षष्ठी तथैव पूर्ववत् ।
चिरञ्जीवितमायुष्यं भूयात् कृष्णाय कथ्यताम् ॥
मद्रं भद्रं सुखं भूयात् कृष्णाय कृष्णस्य वा ।
मम मह्यं हितं पथ्यं कुशलञ्च निरामयम् ॥

॥ इति सम्बन्ध विभक्ति निरूपणम् ॥

# अधिकरणकारकम्

आधारोऽधिकरणम् । १ । ४ । ४५

सप्तम्यधिकरणे च । २ । ३ । ३६

क्रियाश्रयवतः कर्तुः कर्मणो वा भवेदिह ।
आधारः सोऽभिकरणं सप्तमी तत्र जायते ।
भूतले तरवः सन्ति कटे आस्ते मठे मुनिः ।
साक्षात्क्रियाश्रयत्वं न भूतलेऽथ कटे मठे ॥
परम्पराश्रयत्वं हि अधिकरणकारके ।
आधार स्त्रिविधः प्रोक्तः प्रथम औपश्लेषिकः ॥
वैषमिको द्वितीयोऽस्ति तृतीयस्त्वभिव्यापकः ।
प्रथमस्तु कटे आस्ते मोक्षे इच्छा द्वितीयकः ॥
तिले तैलं जने आत्मा अभिव्यापकनामकः ।
दूरान्तिकार्थके नाम्नि सप्तमी स्याद्विभाषया ।
प्रथमापि द्वितीयापि क्रियते पञ्चमी पुनः ॥
दूरे ग्रामस्य दूरञ्च दूरेण च दूरादिति ।
प्रातिपदिकार्थमात्रन्तु सर्वस्यार्थो भविष्यति ॥

क्तस्येन् विषयस्य कर्मण्युपसंख्यानम् । वा० ।

क्तस्येन् विषयस्यात्र कर्मणि सप्तमी भवेत् ।
अधीती शब्दशास्त्रे सः न्यायवेदान्तयोरहम् ॥

साध्वसाधुप्रयोगे च । वा०

साध्वसाधु प्रयोगेषु तद्योगे सप्तमीं कुरु ।
असाधु मातुले कृष्णः साधु भर्तरि सज्जने ॥

निमित्तात्कर्मयोगे । वा०

हन् धातोः कर्म योगे निमित्तात् सप्तमी भवेत् ।
योगश्चात्र संयोगः समवायोऽथवा भवेत् ॥

उदाहरणम्—

[१]चर्मणि द्वीपितं हन्ति दन्तयो[२]र्हन्नि कुञ्जरम् ।
केशेषु चमरीं हन्ति सोम्नि पुष्कलको हतः ॥
अन्ययोगे तृतीयैव व्रीहीन् लुनाति वैतनैः ।
सम्बन्धश्च [१]समवायः [२]संयोगः हरिणं हन्तीति न प्रयोगः ।
त्वक्पर्यन्तत्वाच्छरीरस्य तस्यशरीरावयत्वाभावात् नात्र संयोगः समवायो वा

मुक्ता फलाय करिणं हरिणं पलाय-
सिंहं निहन्ति भुजविक्रमदर्शनाय ।
का नाम नीति रियती रघुवंशवीर
शाखा मृगे जरति यस्तव बाणमोक्षः ॥

अत्र ल्यबन्तपदमध्याहृत्य चतुर्थी-यथा-मुक्ताफलं प्राप्तुमित्यर्थः ।

यस्य च भावेन भावलक्षणम् । २ । ३ । ३७ ।

लक्ष्यते येन भावेन भावान्तरमिति स्थितौ ।
सप्तमी तत्र कर्तव्या दुह्यमानासु गोष्वगात् ॥

अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च ॥ वा०

अर्हाणां यत्र कर्तृत्वं अनर्हाणामकर्तृकम् ।
सप्तमी क्रियते तत्र वैपरीत्येऽपि सप्तमी ॥

उदाहरणम्—

सत्सु तरत्सु तिष्ठन्ति असन्तो दुष्टमानवाः ।
सन्तस्तरन्त्यसत्सु च तिष्ठत्सु तच्च सुन्दरम् ॥
सत्सु तिष्ठत्स्वसन्तः सन्तोऽसत्सु तरत्सुच ।
नियमस्यास्य वैपरीत्ये सप्तमी क्रियतामिह ॥

षष्ठी चानादरे । २ । ३ । ३८ ।

अधिकानादरे षष्ठी सप्तम्यौ भावलक्षणे ।
रुदति रुदतः प्राव्राजीत् सच संन्यस्तवान् यदा ॥

स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च । २।३।३९ ।

स्वामीश्वराधिपतीनां दायादस्य च साक्षिणः ।
प्रतिभुवः प्रसूतस्य योगे षष्ठी च सप्तमी ॥

उदाहरणम्—

गवां स्वामी प्रसूतो वा गोषुस्वामी प्रसूतकः।
ईश्वरोऽस्ति स लोकानां लोकेषु वा प्रयुज्यताम् ॥

आयुक्तकुशलाभ्यां चासेवायाम् । २ । ३ । ४० ।

आयुक्त कुशलाभ्याञ्च योगे षष्ठी च सप्तमी ।
आयुक्तः कुशलो विप्रः पूजनस्य च पूजने ॥

यतश्च निर्धारणम् । २ । ३ । ४१ ।

यतो निर्धारणं कार्यं तत्र षष्ठी च सप्तमी ।
श्रेष्ठो विप्रो नृणां नृषु-कृष्णा गोषु गवां शुभा ॥

पञ्चमी विभक्ते: । २ । ३ । ४२ ।

यत्र निर्धारणे भेदः पञ्चम्येव तु तत्र स्यात् ।
आढ्यतराश्च माथुराः पाटलिपुत्रकेभ्य इति ॥

साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः । २।३।४३ ।

अर्चायां साधुनिपुणाभ्यां योगे च सप्तमो भवेत् ।
बालोऽयं निपुणः साधुर्मातरि स्वगुरावपि ॥
प्रतिपर्यनुयोगे तु द्वितीयैव विधीयताम् ।
साधु र्वा निपुणः कृष्णः मातरं प्रति पर्यनु ॥

प्रसितोत्सुकाभ्यां तृतीया च । २ । ३ । ४४ ।

प्रसितोत्सुकशब्दाभ्यां योगे सति विधीयते ।
तृतीया सप्तमी चापि-प्रसितो हरिणा हरौ ॥

नक्षत्रे च लुपि । २ । ३ । ४५ ।

नक्षत्रे लुपि तृतीया सप्तमी चापि जायते ।
मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् ॥
देवीमावाहयेन्मूले श्रवणे वा प्रयुज्यताम् ।

सप्तमीपञ्चम्यौ कारकमध्ये । २ । ३ । ७ ।

शक्तिद्वयस्य मध्ये यौ-कालाध्वानौ ततः सदा ।
सप्तमी पञ्चमी कार्या-तस्योदाहरणं ददे ॥

अद्यभुक्त्वा द्व्यहे भोक्ता द्व्यहाद्वा मुनिरास्तिकः ।
लक्ष्यं विध्येदिहस्थोऽयं क्रोशे क्रोशात् मृगादिकम् ॥

अत्र विशेषः—

शक्तिः कारकमित्यत्र क्रियाभेदाच्च भिद्यते ।
कारकत्वद्वयं तस्मादेकस्मिन्नेव कल्प्यते ॥

अधिरीश्वरे । १ । ४ । ९७ ।

यस्मादधिकं यस्यचेश्वरवचनं तत्र । २ । ३ । ९ ।

यद्वस्तु यस्मादधिकं यत्रेश्वरस्य भावना ।
सप्तमी तत्र कर्तव्या उपपरार्द्धे हरे र्गुणाः ॥
पर्यायेण च ऐश्वर्यं सप्तमी जायते यथा ।
अधिभुवि च रामोऽस्ति अधिरामे च भूरिह ॥

विभाषा कृञि । १ । ४ । ९९ ।

विभाषा कृञि सूत्रेण अधिः प्राक्संज्ञकस्तु वा ।
सप्तमी स्यादीश्वरेऽर्थे यदत्र मामधि कुरु ॥

प्रदर्शितं कारकमत्र सर्वं
विभक्तिरायाति कथञ्च नाम्नः ।
विमर्शयन् संस्कृत शुद्धवाक्यं—
छात्रो विदध्यादिति निश्चयो मे ॥

इति श्री सुरेशझा शर्मकृतकारकप्रकरणंसमाप्तम् ॥

# अथ समासप्रकरणम् ।

## प्रथममव्ययीभावनिरूपणम्

समर्थः पदविधिः । २ । १ । १

यो विधिः पदसंवन्धी स समर्थाश्रितो भवेत् ।
सामर्थ्ये सति वाक्येषु समासः क्रियते सदा ॥
सामर्थ्यं द्विविधं प्रोक्तं व्यपेक्षा प्रथमं तयोः ।
पदानां पृथगर्थानामाकाङ्क्षादिवशादिह ॥
यः परस्परसंबन्धः सा व्यपेक्षाऽस्ति बुध्यताम् ॥
राज्ञः पुरुष इत्यत्र यो यः सन्निहितो भवेत् ।
तेन तेनास्य संबन्धो व्यपेक्षायां विधीयते ॥
ऋद्धस्य राज्ञः पुरुषः, इति वक्तुं सुशक्नुयात् ।
राज्ञः पुरुषः, इच्छा च इत्थमपि प्रयुज्यताम् ॥
तस्मान्नात्र व्ययेक्षायां समासः क्रियते क्वचित् ॥
विशिष्टैकार्थकत्वेन रूपेण बोधनं यदा ।
एकार्थीभावरूपेऽत्र सामर्थ्यं स्यात् समास इति ॥
एकार्थीभावबद्धानां पदानां नान्वयोऽन्यतः ।
ऋद्धस्य राज पुरुषः प्रयोगो नैव जायते ॥
नित्याकाङ्क्षतया क्वापि सापेक्षोऽपि समस्यते ।
यथा वै देवदत्तस्य गुरुकुलं प्रसिद्ध्यति ॥

समासलक्षणम्—

समसनं समासः स्यादनेकस्यैकतात्र वै ।
द्वे पदे राज्ञः पुरुषः एकन्तु राजपूरुषः ॥

अथवा—

एकार्थीभावरूपेण अनेकं पदमाहृतम् ।
एकं पदं कृतं यत्र समासः स सदा भवेत् ॥

विग्रहः—

समस्तपदलभ्यार्थं बोधयति च यत्पदम् ।
तस्यैव नाम विज्ञेन विग्रहः कथ्यते इह ।।

अथवा—

वृत्त्यर्थबोधकं वाक्यं दृश्यते यत्स्फुटं पृथक् ।
स एव विग्रहः प्रोक्तो हरिकृपा हरेः कृपा ।।
समासे सति सर्वत्र कृत्ताद्धितसमासतः ।
जायते प्रातिपदिकसंज्ञा तस्मात्ततः परम् ।।
अन्तर्वर्तिविभक्तीनां लोपो भवति निश्चयात् ।
समुदायात्समायाति विभक्तिः प्रथमादिका ।।
भेदाः सन्ति समासस्य षडेव विग्रहादिना ।
प्रथमस्त्वव्ययीभावस्तत्पुरुषो द्वितीयकः ।।
कर्मधारयनामास्ति तृतीयः सरलस्त्वयम् ।
द्विगुश्चतुर्थ आख्यातो बहुव्रीहिस्तु पञ्चमः ।।
षष्ठो द्वन्द्व इति ख्यातः सर्वेऽत्र वर्णिताः क्रमात् ।
सर्वेषां लक्षणं तेषां व्यभिचारो विशेषतः ।।
सर्वसमासशेषस्य मध्यभागे निरूपितः ।

अत्रापि किञ्चिद्विचारः—

सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा ।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ।।

क्रमश उदाहरणम्—

राजपुरुषः पर्यभूषत् कुम्भकारः कटप्रुवः ।
पिवतखादता पश्चात्-जहिजोडश्च दृश्यताम् ।।

अथाव्ययीभावः—

अव्ययस्य समासः स्यात् समासे सति योऽव्ययः ।
पूर्वं पदं प्रधानं चेदव्ययीभाव इष्यते ।।

अयं प्रायस्त्रिविधो भवति—

क्वचिदव्ययपूर्वोऽयं क्वचिदुत्तराव्ययोऽपि च ।
क्रियाव्यतिहाररूपश्च प्रयोगेण विविच्यते ।।

उप[1]कुम्भं शाक[2]प्रति केशा[3]केशि क्रमेण वै ॥
उदाहरणमेतेषां दीयतां यदि रोचते ॥

प्राक्कडारात्समासः । २ । १ । ३

प्राक्कडारात्समासोऽयमधिकारस्तु वर्तते ।

सह सुपा । २ । १ । ४

सूत्रं सह सुपा अस्ति सहयोगो विभज्यते ।
सुबन्तं तु समर्थेन येन केन समस्यते ॥
पर्यभूषदनुव्यचल दित्याद्यनेन साध्यते ।
सुपेति अन्य योगस्य तात्पर्यमिदमस्ति वै ॥
सुबन्तश्च सुबन्तेन समस्यते स्वभावतः ॥

सुपो धातुप्रातिपदिकयोः । २ । ४ । ७१ ।

पूर्वं भूतो भूतपूर्वस्तत्साधनक्रमो यथा ।
समासे सति संपूर्णं प्रातिपदिकसंज्ञकम् ॥
मध्यवर्तिसुपां लोपो धातुप्रातिपदिकयोः ।

प्रथमानिर्दिष्टं समास उपसर्जनम् । १ । २ ४३ ।

समाससूत्रे प्रथमा निर्दिष्टमुपसर्जनम् ॥

उपसर्जनस्य पूर्वम् । २ । २ । ३० ।

उपसर्जनस्य पूर्वं प्रयोगो जायते सदा ।
किन्त्वत्र पूर्वशब्दस्य प्राक् प्रयोगो न जायते ।
भूतपूर्वेचरट् सूत्रनिर्देशस्यानुरोधतः ॥

इवेन समासो विभक्त्यलोपश्च । वा० ।

इव शब्देन समासो विभक्तिलोपमन्तरा ।
जीमूतस्येव स श्यामः वागर्थाविव तौ नुमः ॥
अन्तर्वर्त्तिसुपां लोपो न स्यादत्र पदेषु वै ।
समासाज्जायमानाया लुग्भवेदव्ययादिति ॥

अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्यया-संप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसा-कल्यान्तवचनेषु । २ । १ । ६ ।

अव्ययं विभक्ति सामीप्य समृद्धीत्यादि सूत्रके ।
अव्ययमपरो योग विभागः क्रियते बुधैः ।।
अव्ययञ्च समर्थेन समस्यते इति स्थितौ ।
सोऽव्ययीभावनामा समासो ज्ञायतां सदा ।।

गोस्त्रियो रुपसर्जनस्य । १ । २ । ४८ ।

गोः स्त्रियोरुपसर्जनत्वं समासे सति जायते ।
तदा तत्र तदन्तस्य ह्रस्वो भवति निश्चयात् ।।

नाव्ययीभावादतोऽम् त्वपञ्चम्याः । २ । ४ । ८३ ।

अदन्तादव्ययीभावात् सुपो लुङ् नैव जायते ।
अमादेशो भवेत्तत्र वर्जयित्वा च पञ्चमीम् ।।

तृतीयासप्तम्योर्बहुलम् । २ । ४ । ८४ ।

तृतीयायाश्च पञ्चम्याः बहुलमम् विधीयते ।
अपदिशमपदिशमपदिशं प्रथभादिषु ।
अपदिशमयदिशेन अपदिशादयदिशे ।
अमादेशनिपेधेन प्रयोगोऽन्यो विधीयते ।।
विभक्तीत्यादि योगस्य तात्पर्यमवधार्यताम् ।
विभक्त्यर्थादिष्वव्ययं सुबन्तेन समस्यते ।।
सप्तम्यर्थे हरौ इति अधिहरि सुसिद्ध्यति ।

अत्र विशेषतोध्यानयोग्यं वस्तु—

यदव्ययं यदा यस्या विभक्तेरर्थबोधकम् ।
तद्विभक्त्यन्तशब्दस्य समासस्तत्पदाव्ययात् ।।

अव्ययीभावश्च । २ । ४ । १८ ।

सूत्रमत्राव्ययीभावो नपुंसकविधायकम् ।
तस्मादत्र भवेद ह्रस्वः पश्यताधःस्थले यथा ।।

गोपायतीति गोपाः तस्मिन्नधीति विग्रहे ।
अधिगोपं प्रयोगः स्यादधिविश्वमपिजायते ।
श्रीकृष्णस्य समीप उपश्रीकृष्णमुच्यते ।
मद्राणाञ्च समृद्धिः सुमद्रमिति जायते ॥
यवनानां व्युद्धिरिति दुर्यवनं प्रयुज्यते ।
निद्रा न युज्यते उक्त्वा अतिनिद्रं प्रयुज्यताम् ॥
हरि शब्दस्य प्रकाश इति हरि प्रयुज्यते ।
विष्णोः पश्चाद् विग्रहे अनुविष्णु पदं भवेत् ॥
यथार्थे तु समासेन अनुरूपं प्रत्यर्थमिति ।
रूपस्य योग्यमित्येवम् अर्थमर्थञ्च विग्रहः ॥
शक्तिमनतिक्रम्येति यथाशक्ति पदं भवेत् ।
हरेः सादृश्यमित्यर्थे सहरि पदमिष्यते ॥
ज्येष्ठस्यानुपूर्व्येण अनुज्येष्ठं प्रयुज्यताम् ।

अव्ययीभावे चाकाले । ६ । ३ । ८१ ।

कालभिन्ने सहस्य स्यात् सादेशोऽत्रसमासके ।
चक्रेण युगपदुक्त्वा सचक्रं साध्यतां पुनः ॥
सह पूर्वाह्णमित्येवं कात्वेऽर्थे जायते पदम् ।
सख्याः सदृश इत्यर्थे ससखि पदमुच्यते ।

अत्र फक्किका—

यथार्थघटकेनैव सादृश्येनेष्ट सिद्धयः ।
पुनः कस्मात् कृतं सूत्रे सादृश्यमिति कथ्यताम् ? ॥
क्वचिद्गौणेऽपि सादृश्ये समासोऽत्र यथा भवेत् ।
तदर्थं क्रियते भूयः सादृशमिति उत्तरम् ॥
सखि निरूपित सादृश्यवानित्यर्थस्य बोधने ।
गौणं भवति सादृश्यमेतादृशि यथा भवेत् ॥
यथार्थमध्य सादृश्यं प्रधानमेव गृह्यते ।
सहरीति पदे पूर्वं सादृश्यं मुख्यमेव हि ॥
हरेः सादृश्यमित्येवं विग्रहे . तत्स्फुटं स्वयम् ॥
क्षत्राणाञ्च सम्पत्तिः सक्षत्रमिति कथ्यते ।
अपरित्यज्य तृणानि सतृणमत्ति स जनः ॥

अग्नि ग्रन्थपर्यन्तमधीते साग्नि ब्राह्मणः ।
विग्रहेण समं सर्वमुदाहरणमुद्धृतम् ॥

## यथाऽसादृश्ये । २ । १ । ७

असादृश्ये क्वचिद् वाक्ये यथा शब्दः समस्यते ।
तस्मादत्र समासो न यथा हरिस्तथा हरः ॥
अत्र सादृश्यमेवार्थः प्रदर्श्यते यथा पदात् ।
यथाशक्ति प्रयोगे तु सादृश्यं नैव वर्तते ॥
किन्तु शक्तिसमं कार्यं कुर्वाणेष्विदमुच्यते ।

## यावदवधारणे । २ । १ । ८

यावच्छब्दः समर्थेन समस्यतेऽवधारणे ।
यावच्छ्लोकं प्रणामा मे समभूवन् शिवार्चने ।
यावद्विद्यालयं नैव संस्कृतं पाठ्यतेऽधुना ॥

## सुप् प्रतिना मात्रार्थे । २ । १ । ९

प्रति शब्देन सुबन्तं मात्रार्थे च समस्यते ।
शाकस्य लेश इत्यर्थे शाकप्रति च भोजनम् ॥

## अक्ष शलाकासंख्याः परिणा । २ । १ । १०

अक्षस्य च शलाकायाः संख्यायाः परिणा सह ।
द्यूते पराजये वाच्ये समासः क्रियते सदा ॥
अक्षेण च विपरीतं शलाकापरि एकपरि ।

## विभाषा । २ । १ । ११

इतः परं समासाः ये ते भवन्ति विभाषया ।
इतः पूर्वं नित्यमेव सुप् सुपेति विभाषया ॥

## अवपरि वहिरञ्चवः पञ्चम्या । २ । १ । १२

पञ्चम्या वा समस्यन्ते अपपरिबहिरञ्चवः ।
अपविष्णु अपविष्णोः परिविष्णु वहिर्वनम् ॥
प्राग्वनं प्राग्वनादादिप्रयोगः साध्यतां क्रमात् ।

## आङ् मर्यादाऽभिविध्योः । २ । १ । १३

मर्यादाऽभिविध्योराङ् पञ्चम्या च समस्यते ।
आमुक्ति संसारोऽयम् आमुक्तेर्वा प्रयुज्यताम् ॥
आबालं हरिभक्तिस्ते आबालेभ्यश्च वा भवेत् ।

## लक्षणेनाभिप्रती आभिमुख्ये । २ । १ १४

अभिप्रती समस्येते क्वापि लक्षणवाचिना ।
आभिमुख्यं भवेदर्थः प्रयोगोऽस्त्यग्नि अग्निमभि ॥
प्रत्यग्नि शलभाः यान्ति अग्निप्रति च कथ्यताम् ॥

## अनुर्यत्समया । २ । १ १५

समया द्योतमानेन लक्षणेन सदैव हि ।
अनुशब्दस्य समासोऽनुवनमशनिर्गतः ॥

## यस्य चायामः । २ । १ । १६

अनुना द्योत्यते यस्य दैर्घ्यं तल्लक्षणेन वा ।
अनु शब्दस्य समासः-प्रयोगो दृश्यतामधः ॥
अनु गङ्गं वाराणसी गङ्गाया अनु वाऽस्ति सा ।
गङ्गा दैर्घ्यं समानास्ति वाराणसीति बुध्यताम् ॥

## तिष्ठद्गुप्रभृतीनि च । २ । १ । १७

विशेषार्थे निपात्यन्ते तिष्ठद्गु प्रभृतीनि च ।
गावः तिष्ठन्ति यस्मिन् सः तिष्ठद्गु समयो भवेत ॥
आयान्त्यो गावो यस्मिन् स काल आयतीगवम् ।

## पारे मध्ये षष्ठ्या वा । २ । १ । १८

पारमध्यौ समस्येते षष्ठ्यन्तेन विभाषया ।
निपातनीयमेदन्तं पारे गङ्गात्समागतः ॥
मध्ये गङ्गं वर्त्तते सः मध्ये गङ्गात् पराङ्मुखः ।

## संख्या वंश्येन । २ । १ । १९

वंश बोधकशब्देन संख्यावाची समस्यते ॥
द्विमुनि द्वौमुनी वंश्यौ व्याकरणस्य त्रिमुनि ॥

विद्यया वंश इत्यत्र जन्मनाऽन्यत्र दृश्यताम् ।
एकविंशतिस्ते सन्ति भारद्वाज वंश्या इति ॥
विग्रहे भारद्वाजं वै एकविंशतिः कथ्यते ।
जन्मनात्र भवेद्वंश एवमन्यत् प्रयुज्यते ॥
वंशः सन्तान आख्यातः स द्विधा परिकीर्तितता ।
विद्यया जन्मना द्वेधा वंशश्चलति संसृतौ ॥

नदीभिश्च । २ । १ । २०

नदीभिः सह संख्यानां समासः क्रियते सदा ।
समाहारो भवेदर्थः सप्तगङ्गं त्रिगङ्गमिति ॥

अन्यपदार्थे च संज्ञायाम् । २ । १ । २१

संज्ञायामन्यपदार्थे वर्त्तमानं सुबन्तकम् ।
नदीवाचकशब्देन नित्यमेव समस्यते ॥
लोहितगङ्गमुन्मत्तगङ्गं देशः प्रसिद्ध्यति ॥

समासान्ताः । ५ । ४ । ६८ इत्यधिकृत्य ।

समासान्ताः सूत्रमेतदितः परमधिकृतम् ।

अव्ययीभावेशरत्प्रभृतिभ्यः । ५ । ४ । १०७

शरत्प्रभृति शब्देभ्यः समासान्तात्तु टच् भवेत् ॥
समासेत्वव्ययीभावे शरदादिगणः स्मृतः ।
जरायाश्च समीप उपज सं प्रसिद्ध्यति ॥
जराया जरस् च । ग.
जरायाः जरसादेशः वार्तिकेनात्र जायते ।
प्रतिपर समनुभ्यः परस्याक्षणस्तु टच् भवेत् ।
अक्षणोः प्रति च प्रत्यक्षं परोक्षमन्वक्षमिति ॥
परोक्षा सा क्रियेत्यादि अर्श आद्यचि प्रत्यये ।
अक्षणोः परं परोक्षन्तु-समासान्तटचा भवेत् ॥

अनश्च । ५ । ४ । १०८

अन्नन्तादव्ययीभावात् टच्प्रत्ययस्तु जायते ।

नस्तद्धिते । ६ । ४ । १४४

नान्तस्य भस्य टेर्लोपस्तद्धिते च परे सदा ॥
अध्यात्ममुपराजञ्च प्रयोगः साध्यते ततः ।
आत्मनीति तथा राज्ञः समीप इति विग्रहः ः।

नपुंसकादन्यतरस्याम् । ५ । ४ । १०९

टच् प्रत्ययोऽन्यरतस्यामन्नन्ताच्च नपुंसकात् ।
समासे त्वव्ययीभावे उपचर्ममुपचर्मं च ॥

नदी पौर्णमास्याग्रहायणीभ्यः । ५ । ४ । ११०

नदी च पौर्णमासी च तथैव आग्रहायणी ।
समासेत्वव्ययीभावे एभ्यष्टज् वा विधीयते ।
नद्याः समीप इत्यर्थे उपनदं प्रयुज्यताम् ॥
उपनदि च वक्तव्यं प्रत्ययस्य विकल्पनात् ।
पौर्णमास्याः समीपेऽर्थे उपपौर्णमासं भवेत् ॥
उपपौर्णमासि पक्षे ह्रस्वे कृते च सिद्ध्यति ।
उपाग्रहायणमिति उपाग्रहांयणि पुनः ॥

झयः । ५ । ४ । १११

झन्नन्तादव्ययीभावात् टज् वा भवति प्रत्ययः ।
उपसमिधमुपसमित् प्रयोगोऽयं प्रसिद्ध्यति ॥

गिरेश्च सेनकस्य । ५ । ४ । ११२ ।

गिरेश्च सेनकस्येति गिर्यन्ताट् टज् विकल्पतः ॥
अव्ययीभाव इत्येव भवेत् नान्यसमासके ॥

॥ इत्यव्ययीभावसमासः ॥



# अथ तत्पुरुषसमासः प्रारभ्यते

**तत्पुरुषस्य सिद्धान्त लक्षणम्—**

तत्पुरुषः । २ । १ । २२ ।

**"तत्पुरुषो"ऽधिकारोऽयं यत्र यत्र प्रवर्तते ।**
**तत्कृतस्य समासस्य-नाम तत्पुरुषो भवेत् ॥**

**विशेष वस्तु—**

**समासे यत्र जायेत प्रधानं पदमन्तिमम् ।**
**तत्पुरुषः समासः स लक्षणं दर्शितं क्वचित् ॥**
**लक्षणं व्यभिचारीदं तत्रैव कथितं पुनः ॥**

द्विगुश्च । २ । १ । २३ ।

**समासो द्विगुनामा यः सोऽपि तत्पुरुषो भवेत् ।**
**कर्मधारयनामापि-तत्पुरुषैक भेदवान् ॥**
**प्रथमादि विभक्तीनां भेदेन सप्त भेदवान् ।**
**तत्पुरुषश्च प्रख्यातो नञ् समासोऽष्टमो मतः ॥**

**कर्मतत्पुरुषः—**

द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः । २।१।२४

**श्रिताऽतीतेन शब्देन पतितेन गतेन च ।**
**अत्यस्तापन्न प्राप्तैश्च द्वितीयान्तं समस्यते ॥**

**उदाहरणम्—**

**कृष्णं श्रितः कृष्णश्रितः दुःखातीतश्च स भवेत् ।**
**पापी स्यात् कूपपतितः भृत्यो ग्रामगतोऽभवत् ॥**
**फाल्गुने तुहिनात्यस्तः सुखप्राप्तस्तदा जनः ।**
**दुःखापन्नो न कोऽप्यासीद्रामराज्ये इति श्रुतिः ॥**
**सर्वत्रैव द्वितीयान्त-पदेनैतेषु विग्रहः ।**

गम्यादीनामुपसंख्यानम् । वा० ।

गम्यादिनापि समासः द्वितीयान्तस्य जायते ।
ग्रामं गमी ग्रामगमी एवमत्रबुभुक्षवः ॥

स्वयं क्तेन । २ । १ । २५ ।

समस्यति स्वयं क्तेन स्वयंकृतस्तदाऽभवत् ।
तस्यापत्यमित्यर्थे स्वायंकृतिस्तु सिद्धयति ॥

खट्वाऽपेक्षे । २ । १ । २६

खट्वामिति द्वितीयान्तं क्तान्तप्रकृतिकेन वै ।
समासानन्तरं निन्द्यः खट्वारूढः प्रयुज्यते ॥

सामि । २ । १ । २७

अर्द्धवाची स्नामिशब्दः क्तान्तप्रकृतिकेन वै ।
समस्यते सुबन्तेन सामिकृतमिति भवेत् ॥

कालाः । २ । १ २८ ।

कालवाचि द्वितीयान्तं किञ्चित्संयोग बोधने ।
समस्यति सुबन्तेन क्तान्तेनैवेति निश्चयः ॥
मासप्रमित शब्दोऽयं प्रतिपच्चन्द्र बोधकः ।
मासं छेत्तु मुदितोऽस्ति तात्पर्यमस्य वर्णितम् ॥

अत्यन्त संयोगे च । २ । १ २९

अत्यन्ते खलु संयोगे कालवाची समस्यते ।
अक्तान्तेन सुबन्तेन क्षणं सुखं क्षणसुखम् ॥

अथ तृतीयातत्पुरुषः—

तृतीया तत्कृतार्थेन गुणवचनेन । २ । १ । ३०

तृतीयान्तं तदन्तार्थं कृतैस्तु गुणवाचिभिः ।
समस्यतेऽर्थशब्देन शङ्कुलाखण्ड उच्यताम् ॥
धान्येनार्थस्तु धानार्थः तत्प्रयोजनवान् जनः ।
तत्कृतस्य अभावेन अक्षणा काणोऽत्र स्यान्नहि ॥

पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः २ । १ । ३१

पूर्वं सदृश समोनार्थैः कलहेन निपुणेन च ।
मिश्रश्लक्ष्णद्वयेनापि तृतीयान्तं समस्यते ॥
माषोनं माषविकलं वाक्कलहो मातृसद्दशः ।
मासपूर्वः पितृसमः आचार निपुणस्तथा
गुणमिश्रो गुणसंमिश्रः आचारश्लक्ष्ण ऊह्यताम् ।
सर्वत्रैव तृतीयान्तं पदं दत्त्वास्ति विग्रहः ॥

अवरस्योपसंख्यानम् । वा० ।

अवरस्योपसंख्यानं तेन मासावरोऽपि स्यात् ।

कर्तृकरणे कृता बहुलम् । २ । १ । ३२

कर्तरि करणे जाता तृतीया बहुलं कृता ।
समस्यते हरित्रातो नखभिन्न उदाहृतः ॥
कृद्ग्रहणेन गतिकारकग्रहोऽपि जायते । वा.
नखनिर्भिन्न इत्यादि तस्मादेव प्रयुज्यते ॥
बहुलग्रहणेनेदं व्यभिचरति क्वापि वै ।
अप्राप्तावपि जायेत ततश्च पादहारकः ॥
प्राप्तावपि न कुत्रापि दात्रेण लूनवानिह ।
गले चोपक इत्यादौ समासो बहुलं भवेत् ॥

कृत्यैरधिकार्थवचने । २ । १ । ३३

कृत्यैः सह समासः स्यात् तृतीयान्तस्य निश्चयात्
स्तुति निन्दार्थयोरेव वातच्छेद्यमिदं तृणम् ॥
काकपेया नदी वाक्ये स्तुतिनिन्दे उभे स्मृते ।
पूर्णतोया स्तुति ज्ञेया निन्दास्ति निम्नतोयतः ॥

अन्नेन व्यञ्जनम् । २ । १ ३४

अन्नेन व्यञ्जनं प्रायः तृतीयान्तं ममस्यति ।
दध्योदनो घृतभक्तं कस्मै न रोचते बहु ॥

भक्ष्येण मिश्रीकरणम् । २ । १ । ३४ ।

मिश्रीकरणमर्थश्चेत् तृतीयान्तं समस्यति ।
भक्ष्येणेति नियमः गुडधानाः गुडतण्डुलाः ॥

अथ चतुर्थीतत्पुरुषः—

चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः । २ । १ । ३६

चतुर्थ्यन्तं तदर्थार्थ बलि हित सुख रक्षितैः ।
समस्यते ततोरूपं यूपदारुः प्रसिद्ध्यति ॥
तदर्थेनात्र विज्ञेयं प्रकृते विकृतिर्यदि ।
तस्मान्न रन्धनाय स्थाली वाक्ये प्रवर्तितम् ॥
षष्ठी समासमाश्रित्य अश्वघासादयः स्मृताः ।
एवं रन्धनाय स्थालीति सम्बन्धार्थे भविष्यति ॥

अर्थेन नित्यसमासो विशेष्यलिङ्गता च । वा० ।

अर्थेन नित्य समासो लिङ्गमत्र विशेष्यतः ।
द्विजार्थः स्यात् द्विजार्था च द्विजार्थं पय इत्यपि ॥
भूताय बलिरित्यत्र भूतवलिः प्रसिद्ध्यति ।
गोहितं गोसुखं चैवं गोरक्षितमादि स्यात् ॥

पञ्चमी तत्पुरुषः—

पञ्चमी भयेन । २ । १ । ३७

भयशब्देन कुत्रापि पञ्चम्यन्तं समस्यति ।
चोराद्भयं चोरभयं वृकभीतो वृकभीतयः ॥
वृकभीरपि जायेत वार्तिकेन विशेषतः ।

अपेतापोढ़ मुक्तपतितापत्रस्तैरल्पशः । २ । १ । ३८

अपेतापोढ़मुक्तेन पतितेन शब्देन च ।
अपत्रस्तेन पञ्चम्याः समासः क्रियतेऽल्पशः ॥
सुखापेतश्चक्रमुक्तः कल्पनापोढ इत्यपि ॥
स्वर्गपतित आदि स्यात् प्रासादात्पतिते नहि ॥
सुखादपेत इत्यादि विग्रहः क्रियतामिह ।

स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन । २ । १ । ३९

स्तोकान्तिकदूरार्थानां कृच्छ्रशब्दस्य च पुनः ॥
समासः क्तान्तशब्देन पञ्चम्यास्तत्र लुङ् नहि ।
स्तोकान्मुक्तो रणे वीरः अल्पान्मुक्तोऽस्ति वृश्चिकात् ॥

अन्तिकादागतः किम्बा दूरादागत एव सः ।
कृच्छ्रादागत इत्यादि साध्यते शास्त्र चिन्तकैः ॥

षष्ठी तत्पुरुषः—

षष्ठी । २ । २ । ८ ।

षष्ठ्यन्तस्य समासः स्यात् सुबन्तेन पदेन वै ।
राज्ञः पुरुष इत्यत्र समासे राजपूरुषः ॥

याजकादिभिश्च । २ । २ । ९ ।

षष्ठ्यन्तस्य समासस्तु क्रियते याजकादिभिः ।
पूजको ब्राह्मणस्यात्र ब्राह्मणपूजक उच्यते ॥
देवस्य पूजकः सर्वः देवपूजक उच्यते ।

गुणात्तरेण तर लोपश्चेति वक्तव्यम् । वा० ।

षष्ट्यन्तस्य समासः स्यात् तरबन्तगुणादिना ।
तरप् प्रत्यय लोपोऽपि क्रियतेऽनेन सर्वथा ॥
सर्वेषां श्वेततरो हि सर्वश्वेतः प्रकीर्तितः ।
सर्वेषां महत्तरश्च सर्वमहांश्च उच्यते ।

कृद्योगा षष्ठी समस्यते इति वक्तव्यम् । वा० ।

कृद्योगा षष्ठी क्वापि समस्यते विलोक्यताम् ॥
इदमस्य व्रश्चनः शस्त्रमिध्मव्रश्चन उच्यते ।

षष्ठी समास निषेधः—

न निर्धारणे । २ । २ । १०

निर्धारणे च या षष्ठी वाक्ये सा न समस्यते ।
नृणां द्विजः गवां कृष्णा श्रेष्ठा स्यादित्थमेवहि ॥

प्रतिपदविधाना षष्ठी न समस्यते इति वाच्यम् । वा० ।

प्रतिपदविधानापि षष्ठी नैव समस्यते ।
सर्पिषो ज्ञानमित्येव प्रयोगः क्रियते बुधैः ॥

पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन । २।२।११

षष्ठ्यन्तस्य समासो न भवति दृश्यतामधः ।
सतां षष्ठश्चतुर्थो वा काकस्य कार्ष्ण्यमुच्यते ।।
सुब्राह्मणस्य शुक्लाः प्रयोगा एवमेव स्युः ।
संज्ञा प्रमाण निर्देशात् समासो गुणवाचिना ।।
न निषिध्यति तेनार्थ गौरवं बुद्धिमान्द्यमिति ।
द्विजन् कुर्वन् कुर्वाणः होतुः कृत्वा गतः स हि ।।
सु ब्राह्मणस्य कर्तव्यं तक्षकस्य अहेरिति ।
गति बुद्धीति सूत्रेण पूजायां विहितेन च ।।

क्तेन च पूजायाम् । २ । २ । १२

क्त प्रत्ययान्त शब्देन षष्ठ्यन्तं न समस्यते ।
राज्ञां मतः पूजितो वा बुद्धः स्यादेवमेव हि ।
राज पूजित इत्यादौ तृतीयान्तं समस्यते ।।

अधिकरणवाचिना च । २ । २ । १३

अधिकरणार्थ क्तान्तेन षष्ठी नैव समस्येते ।
इदमेषामासितञ्च गतं भुक्तं प्रयुज्यताम् ।।

कर्मणि च । २ । २ । १४

कर्मण्युभयप्राप्तौ या सा षष्ठी न समस्यते ।
गवां दोहः अगोपेन आश्चर्यं मन्यते जनः ।।

तृजकाभ्यां कर्त्तरि । २ ।२ । १५

कर्तरि तृजकाभ्याञ्च षष्ठ्यन्तं न समस्यते ।
अपां स्रष्टा ओदनस्य पाचकः संप्रयुज्यते ।।

अत्र समास विधानम्—

पत्यर्थ भर्तृ शब्दस्य समासो याजकादिभिः ।
भूभर्ता कथ्यते तस्मात् अन्यत्राप्यन्यरीतितः ।।
शेष षष्ठ्या समासोऽस्ति त्रिभुवन विधातरि ।
कैयटेनैव निर्दिष्टं तृन्नन्तमपरेण च ।।

**अत्र निषेधः—**

कर्तरि च २ । २ । १६

तस्या नाऽकेन समासः या षष्ठी कर्तरि कृता ।
भवतः शायिका वाक्यमेवमेव प्रयुज्यते ।।

**विशेषरूपेण समासविधानम्—**

नित्यं क्रीडा जीविकयोः । २ । २ । १७ ।

क्रीडा जीविकयोर्यत्र अक प्रत्ययस्तु जायते ।
नित्यं समस्यते षष्ठ्युद्दालक पुष्पभञ्जिका ।।
दन्त लेखक इत्यत्र समासोऽनेन क्रियते ।
निषेधे पूर्व सूत्रेण सति प्रतिप्रसूयते ।।

पूर्वापराधोत्तारमेकदेशिनैकाधिकरणे । २ । २ । १ ।

पूर्वापराधरोत्तराणां समास एकदेशिना ।
अवयवी यदि संयुक्तो भवेदेकत्वसंख्यया ।।
पूर्वं कायस्य विग्रहे पूर्वकायः सुसिद्ध्यति ।
अपरकाय उत्तर कायोऽधरकाय इति ।।

सर्वोऽप्येकदेशोह्ना समस्यते ।

सर्वोऽप्येक देशोऽह्ना समस्यते च ज्ञापकात् ।
संख्या विसाय सूत्रस्य, मध्याह्नः सायाह्न इति ।।

केचित्तु सर्वोऽप्येकदेशः कालेन समस्यते तत्वह्नैव इति वदन्ति ।

ज्ञापकस्य समानत्वात् कालेनापि समस्यते ।
मध्यरात्रः प्रयोगस्तु सिद्ध्यत्यन्योऽपि कुत्रचित् ।।

अर्द्धं नपुंसकम् । २ । २ । २ ।

अर्धं नपुंसकं नित्यं पूर्ववदेकवाचिना ।
समस्यतेऽवयविना प्रयोगस्त्वर्द्धपिप्पली ।।

एकविभक्तावषष्ठयन्तवचनम् । वा०

पञ्च खट्वी-ततोरूपं सिद्ध्यतीति विभावयेत् ।

द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् । २ । २ । ३

द्वितीयश्च तृतीयश्च चतुर्थस्तुर्य्यमपि यथा ।
समस्यते विकल्पेन पूर्ववदेकदेशिना ॥
द्वितीयं भिक्षणस्यात्र द्वितीयभिक्षणं भवेत् ।
द्वितीयं वा तृतीयं वा भिक्षाया इति विग्रहे ॥
द्वितीयभिक्षा तृतीयभिक्षेत्यादि प्रयुज्यताम् ।

प्राप्तापन्ने च द्वितीयया । २ । २ । ४

प्राप्ताऽपन्ने समस्येते तेन हि प्राप्तजीविकः ।
द्वितीयाश्रितेति पक्षे जीविकाप्राप्त इत्यपि ॥
पक्षे तु जीविकापन्नोः द्वितीयाश्रितेति सूत्रतः ।

कालाः परिमाणिना । २ । २ । ५

कालवाचिपदानां वै समासः परिमाणिना ।
मासो जातस्य यस्येति मासजात उदाहृतः ॥
द्व्यह्नजातस्त्र्यह्नजातः सर्वमेतत् सुसाध्यताम् ।

उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसंख्यानम् । वा० ।

बहूनामपि तत्पुरुषो द्विगुसमाससिद्धये ।
द्व्यह्नजातोऽत्र विग्रहो द्वे अहनी जातस्य सः ॥

अथ सप्तमीतत्पुरुषः—

सप्तमी शौण्डैः । २ । १ । ४०

सप्तम्यन्तं पदं वाक्ये शौण्डादिभिः समस्यते ।
अक्षेषु शौण्ड इत्यत्र अक्षशौण्ड उदाहृतः ॥
क्रिया आसक्तिरूपाऽत्र वृत्तावन्तर्भविष्यति ।
तद्द्वारकं सामर्थ्यमाश्रित्यैव समास इति ॥

अत्र शौण्डादिगणः—

शौण्डो धूर्तश्च कितवो व्याजसंवीत पण्डिताः ।
प्रवीणश्चान्तरधी चपलो निपुणः पटुः ॥
कुशलश्चापि विज्ञेयः शब्दाः सन्ति त्रयोदश ॥

श्लो० सि० पू० १७

सिद्धशुष्कपक्वबन्धैश्च । २ । १ । ४१

सिद्धशुष्केन पक्वेन बन्धेनापि विभाषया ।
सप्तम्यन्तं समस्येत सांकाश्यसिद्ध ऊह्यताम् ॥
स्थालीपक्वश्चक्रबन्ध आतपशुष्क इष्यते ।

ध्वाङ्क्षेण क्षेपे । २ । १ । ४२

सप्तम्यन्तं विशेषेण निन्दायां ध्वांक्षवाचिना ।
समस्यते तेन रूपं तीर्थध्वांक्षः प्रसिद्ध्यति ॥

कृत्यैर्ऋणे । २ । १ । ४३

कृत्यैः ऋणे सूत्रमत्र समासस्य विधायकम् ।
कृत्यप्रत्ययवच्छब्दैः सप्तम्यन्तं समस्यते ॥
मासे देयं च पूर्वाह्णे गेयं सामात्र लुङ् नहि ।

संज्ञायाम् । २ । १ । ४४

संज्ञायामिति सूत्रेण सप्तम्यन्तं समस्यते ।
प्रथमान्तेन शब्देन संज्ञार्थः प्रतिभाति चेत् ॥
अरण्येतिलका एवं वनेकसेरुका इति ।
हलदन्ताच्च सप्तम्या लुग् नैवात्र जायते ॥

क्तेनाहोरात्रावयवाः । २ । १ । ४५

क्तप्रत्ययान्तशब्देन अहोरात्रावयवकाः ।
सप्तम्यन्ताः समस्यन्ते पूर्वाह्णकृतमीक्ष्यताम् ॥
एवमेवापररात्रकृतमिति सुसाध्यताम् ।
अवयवग्रहणेनाह्निदृष्टं नात्र समस्यते ॥

तत्र । २ । १ । ४६

तत्रेत्येतत् सप्तम्यन्तं क्तान्तेन च समस्यते ।
तत्रभुक्तं तत्रदृष्टमादिरूपं सुसाधयेत् ॥

क्षेपे । २ । १ । ४७

क्षेपेऽर्थे क्तान्तशब्देन सप्तम्यन्तं समस्यते ।
अलुग्विधानतः पश्चादवतप्ते नकुलस्थितम् ॥

पात्रे समितादयश्च । २ । १ । ४८ ।

निन्दायां पात्रे समिताः समस्ताः स्युर्निपातनात् ।
गेहेशूरस्तथा गेहेनर्दी आदि प्रयुज्यताम् ॥

पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन । २ । १ । ४९

पूर्वकालैकसर्वजरत्पुराण केवलाः ।
समानाधिकरणे समस्यन्ते विभाषया ॥
स्नातान्तरमनुलिप्तः स्नातानुलिप्त उच्यते ।
एकनाथः प्रयोगोऽयं सर्वयाज्ञिक ईदृशः ॥
जरन्नैयायिकाश्चैवं भवन्ति नवपाठकाः ।

दिक्संख्ये संज्ञायाम् । २ । १ । ५०

संज्ञायामिह दिक्संख्ये समस्येते नियन्त्रिते ।
पूर्वेषुकाममीति सप्तर्षयः इति पुनः ॥
त्रिकटु स्यात् त्रिभुवनं चतुर्वर्गश्चतुर्युगम् ।
पञ्चामृतमष्टनागः पञ्चगव्यं नवग्रहाः ॥
षड्रसः षट्पदार्थोः द्विगुर्नैतेषु जायते ।
संज्ञायां तत्पुरुषोऽत्र ज्ञातव्यः पाठकैः सदा ॥

अथ द्विगुसमासः—

तद्धितार्थोत्तरपदसमाहारे च । २ । १ । ५१

तद्धितार्थोत्तरपद समाहारार्थदर्शने ।
दिक्संख्ये समस्येते तदुदाहरणं यथा ॥
पूर्वस्यामिह शालायां भवः पौर्वशाल इति ।
आपरशालः पूर्वशालाप्रियः प्रयोग ऊह्यताम् ॥
सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इहेष्यते ।
संख्यायास्तद्धितार्थे उदाहरणमत्र वै ॥
अपत्यमिह मातृणां षण्णां स षाण्मातुरो द्विगुः ॥

द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् । वा० ।

पञ्च गावो धनं यस्य स द्विगुः पञ्चगवधनः ॥
गोरतद्धितलुकीति टच्प्रत्ययैश्च जायते ॥

संख्यापूर्वो द्विगुः । २ । १ । ५१

संख्यापूर्वो द्विगुर्ज्ञेयस्तद्धितार्थोत्तरसूत्रके ।

द्विगुरेकवचनम् । २ । १ । ४१

समाहारस्तु द्विग्वर्थः क्लीवेस्यादेकबोधकः ।
समाहारस्तु पञ्चानां गवां पञ्चगवं भवेत् ॥
टच् प्रत्ययो विशेषेण गोशब्दात् परो भवेत् ।
त्रिविधतद्धितार्थस्य उदाहरणमीक्ष्यताम् ॥
द्वाभ्यां मुद्राभ्यां क्रीतस्तु द्विमुद्रो वृष एषकः ।
द्वाभ्यां गुञ्जाभ्यां क्रीतमिति द्विगुञ्जं स्वर्णमुच्यते ॥
पञ्चसु च कपालेषु संस्कृत इति विग्रहे ।
पञ्चकपालशब्दस्तु पुरोडाशे प्रकीर्तितः ॥

अत्र विशेषविचारः—

त्रिविधस्तु द्विगुः प्रोक्तः स भेदः क्रमशो यथा ।
समाहारस्तु प्रथमः त्रिलोकी पञ्चराजमिति ॥
द्वितीयस्तद्धितद्विगुः पञ्चकपाल ओदनः ।
द्विगोर्लुगनपत्येषु इति तद्धितलुग् भवेत् ॥
तृतीयश्चोत्तरपदद्विगुः पञ्चगवधनः ।

अत्र न्यायसंमतं द्विगुलक्षणम्—

संख्याशब्दयुतं नाम तदलंक्ष्यार्थबोधकम् ।
अभेदैकत्वबोधार्थे स द्विगुस्त्रिविधो मतः ॥

कुत्सितानि कुत्सनैः । २ । १ । ५३

समस्यन्ते कुत्सितानि कुत्सितैः सह सर्वदा ।
प्रश्नं विस्मारयितुं यः खं सूचयति पण्डितः ॥
वैयाकरण खसूचिः स एव कुत्सितो बुधः ।
मीमांसकदुर्दुरूढोः मीमांसकस्तु नास्तिकः ॥
व्यतिक्रमं विशेष्यस्य कर्तुमेत् प्रवर्तते ।
विशेषपूर्वकश्चायं कर्मधारय एव हि ॥

पापाणके कुत्सितैः । २ । १ । ५४

पापाणके कुत्सितैस्तु समस्येते हि गर्हणे ।
नापनापित श्चाणककुलालः साध्यतां पुनः ॥
पूर्वसूत्रेण सिद्धेऽत्र पूर्वनिपात इष्यते ॥

उपमानानि सामान्यवचनैः । २ । १ । ५५

उपमानानि सामान्यवचनैः सह विग्रहे ।
समस्यन्ते तेन शब्दा घनश्यामः प्रसिद्ध्यति ॥

उपमितं व्याघ्रादिभिः सामान्याप्रयोगे । २ । १ । ५६

सामान्यधर्माप्रयोगे व्याघ्रादिभिरुपमितम् ।
समस्यते ततो रूपमधस्तनं प्रसिद्ध्यति ॥
नृसोमः पुरुषव्याघ्रोः नृसिंहादिश्च सिद्ध्यति ।
विशेष्यशब्दस्य पूर्वनिपातार्थमिदं पुनः ॥

अथ कर्मधारयसमासः—

विशेषणं विशेष्येण बहुलम् । २ । १ । ५७

विशेषणं विशेष्येण बहुलञ्च समस्यते ।
नीलञ्च तदुत्पलञ्च नीलोत्पलमिति स्मृतम् ॥

अत्र विशेषलक्षणम्—

विशेषणं सच्च पदेन संयुतं
समस्यते यत्र विशेष्यवाचिना ।
स साऽथवा तत्पदमस्ति विग्रहे
विभिन्नरूपः किल कर्मधारयः ॥

नन्दनञ्च तद्वनञ्च तन्नदन्नवनं स्मृतम् ।
शोभनश्च स आचारः शोभनाचार उच्यताम् ॥
महांश्च स प्रसादश्च महाप्रसाद इष्यते ।

अयं कर्मधारयः सप्तविधोऽस्ति—

१. विशेषणपूर्वपदको यथा—विनीतशिष्यः, नीलकमलमादि ।
२. विशेष्यपूर्वपदकः यथा—वैयाकरणखसूचीत्यादि ।

३. विशेषणोभयपूर्वपदकः—शीतोष्णम्, कृताकृतमादि ।
४. उपमानपूर्वपदकः—चन्द्रमुखम्, शस्त्रीश्यामादि ।
५. उपमानोत्तरपूर्वपदकः—पुरुषव्याघ्रः, मुखपद्मादि ।
६. संभावनापूर्वपदकः—हित इति बुद्धिः हितबुद्धिः ।
७. अवधारणपूर्वपदकः—ज्ञानमेव धनं ज्ञानधनम् अज्ञानतम आदि ।

न्यायसंमतं कर्मधारयलक्षणम्—

यन्नामयुगमेकार्थेऽन्यार्थस्य च बोधकम् ।
तादात्म्येन भवेदेष समासः कर्मधारयः ।। श० प्र० ।।

पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यम-
वीराश्च । २ । १ । ५८

पुर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमा वीराः ।
पूर्वनिपातनियमार्थमिमे विशेष्येण समस्यन्ते ।।
पूर्ववैयाकरणोऽयम् अपराध्यापकः स च ।

अपरस्यार्धे पश्चभावो वक्तव्यः । वा० ।

अपरश्च असावर्द्धश्च सपरार्द्ध इति स्मृतः ।
अत्रापरस्य शब्दस्य पश्चादेशोऽस्ति वार्त्तिकात् ।।

अत्र शङ्का—कथमेकवीर इति-अनेन समासे सति वीरैक इति भवेत् । तत्रोत्तरम्—अत्र सप्तमीसमासः ।

एकवीरस्तु शब्दोऽयम् एकेषु वीरः विग्रहे ।
बहुलग्रहणाद्वापि सिद्धयतीति प्रयोजनात् ।।

श्रेण्यादयः कृतादिभिः । २ । १ । ५९

श्रेण्यादयः कृतादिभिः समस्यन्ते हि च्व्यर्थके ।
'अश्रेणयश्च श्रेणयः कृताः श्रेणीकृता इमे ।।

क्तेन नञ्विशिष्टेनानञ् । २ । १ । ६०

नञ्विशिष्टेन क्तान्तेन अनञ् क्तान्तं समस्यते ।
कृतश्च तदकृतश्च कृताकृतं सुसिद्धयति ।।

शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् । वा० ।

शाकपार्थिवादिशब्दानां येन केन प्रकारतः ।
समासेनात्र सिद्धिस्तु क्रियते पदलोपतः ॥

शाकप्रियः पार्थिवोऽयं शाकपार्थिव उच्यते ।
देवस्य च पूजको यो ब्राह्मणो देवपूजकः ॥

सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः । २ । १ । ६१

पूज्यमानैः समस्यन्ते सन्महत्परमोत्तमाः ।
सन् वैद्यः सद्वैद्यः स्यान्महावैयाकरण इति ॥
पूज्यार्थस्य अभावे तु उत्कृष्टो गौरित्येव हि ॥

वृन्दारकनागकुञ्जरैः पूज्यमानम् । २ । १ । ६२

वृन्दारकनागकुन्जरैः पूज्यमानं समस्यते ।
गोवृन्दारक इत्यादिप्रयोगः साध्यतामिह ॥

कतरकतमौ जातिपरिप्रश्ने । २ । १ । ६३

कतरः कतमश्चैतौ जातेः प्रश्ने विशेषतः ।
समस्येते कतरकठः कतमकपाल ऊह्यताम् ॥

किं क्षेपे । २ १ । ६४

किं क्षेपे इति सूत्रेण निन्दायां किं समस्यते ।
किंराजा किंसखा किंगौः प्रयोगाः प्रभवन्त्यमी ॥

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बस्कयणी प्रवक्तृश्रोत्रियाध्यापकधूर्त्तैर्जातिः । २ । १ । ६५

पोटायुवतिस्तोकैश्च कतिपयगृष्टिधेनुभिः ।
वशावेहद्बण्कयणीप्रवक्तृश्रोत्रियैस्तथा ॥

अध्यापकेन धूर्त्तेन जातिशब्दः समस्यते ।
उदाहरणमप्र ऽस्य सपद्यं प्रदर्श्यते ॥

पुनः कर्मधारयविधिः—

तत्पुरुषः समानाधिकरणः कर्मधारयः । १।२।४२

तत्पुरुषः समानाधिकरणः कर्मधारयः ।
तद्भेदप्रकारोऽयं दर्शितो दर्श्यते पुनः ॥

पुंवत्कर्मधारयजातीयदेशीयेषु । ६ । ३ । ४२

कर्मधारये जातीय - देशीय - परयोः सदा ।
पुंवद्भावो यस्य कस्य ऊङ्भावस्य जायते ॥
महाप्रिया महानवमी तथा कृष्णचतुर्दशी ।
पाचकस्त्री दत्तभार्या स्रौघ्नभार्यादि साध्यताम् ॥
सा स्त्री पाचक जातीया-देशीया वा प्रदर्श्यताम् ।
दत्तपञ्चमदेशीयेत्यादौ पुंवद् विधीयते ॥
दत्ताप्रकारवती दत्तजातीया प्रकारे जातीयर् ।

पञ्चमजातीया, स्रौघ्नजातीया, सुकेशजातीया, ब्राह्मणजातीया । एवमेव दत्तदेशीया, पञ्चमदेशीया, स्रौघ्नदेशीयादिप्रयोगाः साध्यन्ताम् ।

इभपोटेभयुवतिः गोगृष्टिरग्निस्तोकका ।
गोधेनुर्गोवशा चैवं गोवेहद् गोबष्कयणी ॥
पुंवद्भावे कृते सिद्धिरर्थविशेष ऊह्यताम् ।
कठश्रोत्रिय इत्यस्य कठाध्यापकपदस्य च ।
कठधूर्त्तस्य संसिद्धिः कर्मधारयतो भवेत् ॥

प्रशंसावचनैश्च । २ । १ । ६६

प्रशंसावचनैरेतैर्जातिशब्दः समस्यते ।
गोप्रकाण्डं गवोष्ठश्च गोतल्लज मतल्लिका ॥
प्रशस्ता गौरितीहार्थः कथ्यतां पाठकादिना ।

युवा खलतिपलितवलिनजरतीभिः । २।१।६७

समस्यते युवा शब्दः खलतिपलितादिभिः ।
युवा खलतिर्लोको हि युवखलतिर्निगद्यते ॥

युवतिः खलतीत्यादि युवखलती भविष्यति ।
युवपलितः प्रयोगो युववलिनोऽपि दृश्यते ॥
वृद्धेव युवतिर्लोके युवजरती न शोभते ।

कृत्यतुल्याख्या अजात्या । २ । १ । ६८

अजात्या कृत्यतुल्याख्या समस्यते विकल्पतः ।
भोज्योष्णं तुल्यश्वेतश्च सदृशश्वेत इत्यपि ।
जात्या सह निषेधात्तु उच्यते भोज्य ओदनः ॥

वर्णो वर्णेन । २ । १ । ६९

समानाधिकरणे वर्णेन वर्णबोधकः ।
समस्यते प्रयोगस्तु कृष्णसारङ्ग उच्यते ॥
सारङ्गश्चित्रपर्यायो गुणोपसर्जनार्थकः ।

कडाराः कर्मधारये । २ । २ । ३८

पुनरत्र समस्यन्ते कडाराः कर्मधारये ।
स्यात् प्रयोगः कडारस्य पूर्वमत्र विशेषतः ॥
कडारजैमिनिः पक्षे जैमिनिकडार इति ।
तथा गडुल शाण्डिल्यः शाण्डिल्यगडुलोऽपि च ॥

कुमारः श्रमणादिभिः । २ । १ । ७०

समस्यते विकल्पेन कुमारः श्रमणादिभिः ।
कुमारी श्रमणा सैव कुमारश्रमणा भवेत् ॥

चतुष्पादो गर्भिण्या । २ । १ । ७१

गर्भिण्या विग्रहं कृत्वा चतुष्पादः समस्यते ।
गौर्गर्भिणी गोगर्भिणी ब्राह्मणी गर्भिणी नहि ॥
विशेषणसमासस्तु प्रत्युदाहरणेऽपि स्यात् ।

मयूरव्यंसकादयश्च । २ । १ । ७२

निपातनात् प्रसिद्ध्यन्ति मयूरव्यंसकादयः ।
मयूरो व्यंसको व्यासे—समासे मयूरव्यंसकः ॥

व्यंसको धूर्त्त आख्यातः मयूरव्यंसकश्च सः ।
निश्चितश्च प्रचितश्च निश्चप्रचमुदाहृतम् ॥
सिद्ध्यत्येवं निपातेन उच्चावचमकिञ्चनः ।
उदक् च अवाक् चेति—उच्चावचोऽस्ति विग्रहः ॥
नास्ति किञ्चन यस्यात्र सोऽकिञ्चनोऽस्ति निर्धनः ।

आख्यातमाख्यातेन क्रियासातत्ये ।

क्रियायाः खलु सातत्ये आख्यातमाख्याततः ।
समस्यतेऽश्नीतपिबता—पचतभृज्जतादयः ॥

एहीडादयोऽन्यपदार्थे ।

अन्यपदार्थतात्पर्ये एहीडादिकमिष्यते ।
यस्मिन् कर्मणि एहीडे तदेहीडमिति भवेत् ॥
आदिशब्दादेहिपचमुद्धमविधमादयः ।
आदेशादिकमेतेषु शब्दसिद्ध्यर्थमूह्यताम् ॥

जहि कर्मणा बहुलमाभीक्ष्णे कर्तारं चाभिदधाति ।

जहीति कर्मणा साकं बहुलं च समस्यते ।
आभीक्ष्णार्थे गम्यमाने कर्ता चेदभिधीयते ॥
जहिजोडो जहिस्तम्बः चिन्मात्रमकुतोभयः ।
राजान्तग्मादिरूपं मयूरव्यंसकादितः ॥

ईषदकृता । २ । २ । ७

समस्यतेऽकृता ईषद् ईषत्पीङ्गल उच्यते ।
ईषद्गुणवचनेन ईषद्रक्तं पदं वद ॥

नञ्समासः—

नञ् । २ । २ । ६

सुबन्तेन समर्थेन नञ्शब्दः समस्यते ।

नलोपो नञः । ६ । ३ । ७३

नञो नस्य भवेल्लोपो न ब्राह्मणोऽब्राह्मणः ।

तस्मान्नुडचि । ६ । ३ । ७४

तस्मान्नुडचि सूत्रेण—अजादेस्तु नुडागमः ।
न अश्वः अनश्वः स्याद् न ईश्वरः अनीश्वरः ॥
रक्षोहागमसन्देहाः प्रयोजनमिति बलात् ।
अर्थाभावेऽव्ययीभावैः सहायं तु विकल्पते ॥
असंहितमसंदेहोऽनुपलब्धिरविघ्नमिति ।

नञो नलोपस्तिङि क्षेपे । वा० ।

नञस्तिङा समासः स्यात् क्षेपे नलोप इष्यते ।
जाल्म ! अपचसि धूर्त्त प्रयोगः क्रियते ततः ॥
नैकधेत्यादिशब्दस्तु नशब्देन समासतः ।
साध्यते सह सुपा सूत्रेणेति विमृश्यताम् ॥
नञ्शब्देन समासे तु प्रयोगः स्यादननेकधा ॥

नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्र-
नक्रनाकेषु प्रकृत्या । ६ । ३ । ७५

नभ्राणनपान्नवेदाश्च नासत्यानमुचिर्नखः ।
नपुंसकश्च नकुलनक्र नक्षत्र नाक इति ।
नञ्शब्देन समस्ताः सन्तः सर्वे निपातिताः ।

नगोऽप्राणिष्वन्यतरस्याम् । ६ । ३ । ७७

नगोऽप्राणिष्वन्यतरस्यां नलोपस्तेन स्यान्नगः ।
न गच्छतीति विग्रहः प्राणिनि त्वग एव स्यात् ॥
तस्मादगोऽयं वृषलः शीतेनेति प्रदर्शितम् ।

गतिसमासः—

कुगतिप्रादयः । २ । २ । १८ ।

कुगतिप्रादयः शब्दाः समस्यन्ते समर्थतः ।
कुत्सितः पुरुषो लोके कुपुरुषश्च कथ्यते ॥

ऊर्यादिच्विडाचश्च । १ । ४ । ६१

ऊर्यादीनां च्विडाचश्च गतिसंज्ञा क्रियाऽन्वये ।
ततो गतिसमासेन ऊरीकृत्यादिकं भवेत् ॥
शुक्लीकृत्य पटपटाकृत्य गतिसमासतः ।

कारिकाशब्दस्योपसंख्यानम् । वा० ।

गतिसंज्ञां विधायैव कारिकाया विशेषतः ।
समासः कारिकाकृत्य शब्दसिद्धिर्विभाव्यताम् ॥

अनुकरणं चानितिपरम् । १ । ४ । ६२ ।

इति भिन्नानुकरणं समर्थेन समस्यते ।
खाट् कृत्य च हुंकृत्य समासे सति ल्यब् भवेत् ॥

आदरानादरयोः सदसती । १ । ४ । ६३

सदसती समस्येते आदरेऽनादरे क्रमात् ।
सत्कृत्य तमसत्कृत्य प्रयोगः साध्यतां सदा ॥

भूषणेऽलम् । १ । ४ । ६४ ।

भूषणेऽलं कृञा नित्यं समस्यते विशेष्यतः ।
अलंकृत्येति समासं कृत्वा सिद्ध्यति ल्यप्कृते ॥

अन्तरपरिग्रहे । १ । ४ । ६५

परिग्रहेण भिन्नेऽर्थे नित्यमन्तः समस्यते ।
मध्ये हत्वेति तात्पर्यं सिद्धत्यन्तर्हत्य इति ॥

कणेमनसी श्रद्धाप्रतीघाते । १ । ४ । ६६

कणेहत्य मनोहत्य पिपासुः स पयोऽपिबत् ।
अस्तंकृत्य पुरस्कृत्य गतिसंज्ञां विधाय स्यात् ।

पुरोऽव्ययम् । १ । ४ । ६७

पुरोऽव्ययमिति सूत्रात् पुरस्कृत्य पदं भवेत् ।

अस्तं च । १ । ४ । ६८

अस्तमिति पदं मान्तं गतिसंज्ञकमिष्यते ।
अस्तंगत्य पदं तस्यात् साध्यते तत् पाठकैरिह ॥

अच्छगत्यर्थवदेषु । १ । ४ । ६९

अच्छगत्यर्थवदेषु अच्छगत्य वच्छोद्य च ।

## अदोऽनुपदेशे । १ । ४ । ७०

उपदेशार्थभिन्नेऽत्र अदः शब्दः समस्यते ।
अदःकृत्य स्वयं पर्यालोचनें च प्रयुज्यते ।
परं प्रत्युपदेशे तु–अदः कृत्वा प्रयुज्यताम् ॥

## तिरोऽन्तर्धौ । १ । ४ । ७१

तिरोऽन्तर्धौ समासेन तिरोभूय प्रयुज्यताम् ।

## विभाषाकृञि । १ । ४ । ७२

विभाषा स्यात् कृञो योगे तिरःकृत्य कृत्वाऽथवा ॥

## उपाजेऽन्वाजे । १ । ४ । ७३

उपाजे किल अन्वाजे कृञि वा गतिसंज्ञकौ ।
उपाजेकृत्यकृत्वा वा–अन्वाजेकृत्य उच्यताम् ॥
दुर्बलस्य बलं दत्त्वा कृतमेतत्प्रतीयते ॥

## साक्षात्प्रभृतीनि च । १ । ४ । ७४

साक्षात्प्रभृतिशब्दा ये कृञि वा गतिसंज्ञकाः ।
च्व्यर्थं एवेति नियमः साक्षात्कृत्य प्रयुज्यते ॥
लवणं कृत्य कृत्वा वा मन्तव्यं च निपातनात् ।
मिथ्या आम् अद्धालवणमुष्णं शीतमार्द्रमिति ॥
उदकं नम आविश्च साक्षात्प्रभृतीनि स्युः ।

## अनत्याधाने उरसिमनसी । १ । ४ । ७५

अनत्याधानतात्पर्ये समस्येते विकल्पतः ।
उरसिमनसी तस्मादुरसिकृत्य सिद्ध्यति ॥
उरसि कृत्वा पक्षे स्यादभ्युपगम्य बोधनम् ।
मनसिकृत्य कृत्वाऽस्य निश्चित्येति प्रदर्शितम् ॥
अत्याधान मुपश्लेषस्तस्मिन्नर्थे न जायते ।
उरसि कृत्वा पाणिं सः शेते ल्यप् नात्र जायते ॥

मध्ये पदे निवचने च । १ । ४ । ७६

मध्ये पदे निवचने–कृञि वा गतिसंज्ञकाः ।
मध्येपदेनिवचने कृत्य कृत्वा द्वयं भवेत् ।
वाचं नियम्य तात्पर्यमेषां भवति प्रायशः ॥

नित्यं हस्ते पाणावुपयमने । १ । ४ । ७७

हस्ते पाणौ नित्यमेव विवाहार्थे समस्यते ।
क्रियायोगे समासेऽत्र एत्वमौत्वं क्रमेण स्यात् ॥
हस्तेकृत्य पाणौकृत्य उपयस्यार्थ उच्यताम् ।
गतिसमासमुक्त्वाऽतः प्रादिसमास उच्यते ॥

प्राध्वं बन्धने । १ । ४ । ७८

प्राध्वमव्ययशब्दस्य समासो बन्धने भवेत् ।
प्राध्वं कृत्य–निगणय्य रज्ज्वादिना नियंत्रितः ॥

जीविकोपनिषदावौपम्ये । १ । ४ । ७९

जीविकोपनिषच्छब्दावुपमायां प्रदर्शितौ ।
समस्येते तेन रूपं जीविकाकृत्य सिद्ध्यति ॥
जीविकामिव कृत्वेति–विग्रहोऽत्र प्रदर्श्यताम् ।
उपनिषदमिव कृत्वोपनिषत्कृत्य उच्यताम् ॥

अथ प्रादिसमासः—

प्रादयो गताद्यर्थे प्रथमया । वा० ।

शोभनः पुरुषो यो हि स सुपुरुष उच्यते ।
प्रादि समास एषोऽयं गतिसमास भिन्नकः ॥
प्रादिशब्दो गताद्यर्थे प्रथमया समस्यते ।
यो हि प्रगत आचार्यः स प्राचार्यो महागुरुः ॥
प्रपितामहश्च प्रख्यातः प्रगतो यः पितामहः ॥

अत्यादयः क्रान्ताद्यर्थे द्वितीयया । वा० ।

अत्यादयः समस्यन्ते क्रान्ताद्यर्थे द्वितीयया ।
अतिक्रान्तो मालामिति सोऽतिमालः प्रयुज्यते ॥

अवादयः क्रुष्टाद्यर्थे तृतीयया । वा० ।

अवादयः समस्यन्ते क्रुष्णाद्यर्थे तृतीयया ।
अवक्रुष्टः कोकिलया अवकोकिल उच्यते ॥
कोकिलाभिः समाहूते जनेऽयं च प्रयुज्यते ।

पर्यादयो ग्लानाद्यर्थे चतुर्थ्या । वा० ।

पर्यादयः समस्यन्ते ग्लानाद्यर्थेषु तुर्य्यया ।
परिग्लानोऽध्ययनाय पर्यध्ययन उच्यते ॥
अध्येतुं यः परिश्रान्तस्तत्रेदमुच्यते ।

निरादयः क्रान्ताद्यर्थे पञ्चम्या । वा० ।

पञ्चम्या च समस्यन्ते क्रान्ताद्यर्थे निरादयः ।
निष्क्रान्तश्च कौशाम्ब्याः निष्कौशाम्बिरुच्यते ॥

कर्मप्रवचनीयानां प्रतिषेधः । वा० ।

कर्मप्रवचनीयानां समासो न विधीयते ।
वृक्षं प्रति अपि स्तुतमुदाहरणमत्र तत् ॥

**अथ उपपदसमासः—**

तत्रोपपदं सप्तमीस्थम् । ३ । १ । ९२

सप्तम्यन्तपदबोध्यं कर्मण्यणादिषु स्थितम् ।
तदुपपदसंज्ञं स्यात् तस्मिन् सत्येव प्रत्ययः ॥

उपपदमतिङ् । २ । २ । १९

उपपदसुबन्तं तु समर्थेन समस्यते ।
अतिङन्तसमासोऽयं मा भवान् भूदत्र न ॥
माङि लुङिति सूत्रे च सप्तम्यन्तमाङुपपदम् ।
कुम्भं करोति तात्पर्ये कुम्भकारः पदं भवेत् ॥

गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः ।

गतिकारकोपपदानां समासस्तु कृता भवेत् ।
सुबुत्पत्तेः पूर्वमेव व्याघ्री सिद्ध्यति कच्छपी ॥

**स्पष्टीकरणम्** –

आतश्चोपसर्गे कः व्याघ्री अत्र विधीयते।
व्याङो गतिसमासोऽत्र तस्मान्ङीप् प्रत्ययोऽभवत्॥
अश्वेन क्रीता तात्पर्ये तृतीया क्तान्त क्रीततः।
स्वाद्युत्पत्तेः पूर्वमेव अश्वक्रीती समासतः॥
ङीपं विधाय वक्तव्या कच्छपी साध्यतां तथा॥

अमैवाव्ययेन । २ । २ । २०

अमैवातुल्यविधानं यदुपपदं तस्य च।
अव्ययेन समासः स्यात् स्वादुङ्कारं पदं ततः॥

तृतीयाप्रभृतीन्यन्यतरस्याम् । २ । २ । २१

तृतीयाप्रभृतीनि वा अमन्तेनाव्ययेन च।
समस्यन्ते ततो मूलकोपदंशं स खादति।
मूलकेनोपदंशं च भुङ्क्ते पक्षे प्रयुज्यते॥

क्त्वा च । २ । २ । २२

तृतीयाद्युपपदानि समस्यन्ते च क्त्वान्ततः।
उच्चैःकृत्य उच्चैः कृत्वा खलु कृत्वाऽत्र न भवेत्॥

तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः । ५ । ४ । ८६

संख्याऽव्ययादिपूर्वस्य तत्पुरुषाङ्गुलिशब्दतः।
अङ्गुल्यन्तस्य पश्चात् समासान्तोऽच् विधीयते॥
यस्येति चेति लोपेन द्व्यङ्गुलं दारु सिद्ध्यति।

**अत्र**—

द्वे अङ्गुल्यौ प्रमाणं तत्-तद्धितार्थः प्रवर्तते।
द्विगोर्नित्यमिति सूत्रेण मात्रचो लोप इष्यते॥
निर्गतमङ्गुलिभ्यो यत् तन्निरङ्गुलमुच्यते।

अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः । ५ । ४ । ८७

अहः सर्वैकदेशाच्च संख्यातात्पुण्यादपि।
संख्याऽव्ययात् पराद्रात्रिशब्दादच् प्रत्ययो भवेत्॥

अहर्ग्रहणं द्वन्द्वार्थम् ।

अहर्ग्रहणं द्वन्द्वार्थं तत्पुरुषस्यासंभवात् ।
अहश्च रात्रिश्च उक्त्वा अहोरात्रः सुसिद्ध्यति ॥
सर्वा रात्रिः सर्वरात्रः पूर्वरात्रेस्तु विग्रहे ।
पूर्वरात्रः प्रयोगः स्यादेवमन्योऽपि ज्ञायताम् ॥
संख्याता रात्रिरत्र संख्यातरात्र उच्यते ॥
पुण्या रात्रिः पुण्यरात्रः समाहारो द्विरात्रमिह ॥
अतिक्रान्तो रात्रिमत्र अतिरात्रः सुसाध्यते ।

राजाहःसखिभ्यष्टच् । ५ । ४ । ९१

राजाहःसखिभ्यष्टच्च तत्पुरुषे विशेषतः ।
परमराजोऽतिराजी कृष्णसखो न सीदति ॥

अह्नष्टखोरेव । ६ । ४ । १४५

अह्नष्टखोष्टिलोपः स्यादुत्तमाहः सुसिद्ध्यति ।
द्वे अहनी भृतो यत्र द्व्यहीनः क्रतुरिष्यते ॥

अह्नोऽह्न एतेभ्यः । ५ । ४ । ८८

तद्धितार्थे द्विगुं कृत्वा द्विगुर्वेति च खो भवेत् ।
पश्चादह्नोऽह्न आदेशः सर्वादिभ्यः परस्य वै ॥

अह्नोऽदन्तात् । ८ । ४ । ७

समासान्ते परे एव अह्नोऽदन्तात् णत्वमपि ।
सर्वाह्णः किल पूर्वाह्णः संख्याताह्नो द्व्यह्नः इति ।
द्व्यह्ना द्व्यह्नप्रियोऽत्यह्नः यथायथं सु साध्यताम् ॥

क्षुभ्नादिषु च । ८ । ४ । ३९

क्षुभ्नादिगणदृष्टानां णत्वं नैव विधीयते ।
दीर्घाह्नी प्रावृट् ज्ञेया यतो दीर्घाण्यहानि स्युः ॥

न संख्यादेः समाहारे । ५ । ४ । ८९

न संख्यादेः समाहारे अह्नादेशो विधीयते ।
द्वयोरह्नोः समाहारः द्व्यहस्तथा त्र्यहो भवेत् ॥

श्लो० सि० पू० १८

उत्तमैकाभ्याञ्च । ५ । ४ । ९०

पुण्यैकाभ्यां परादह्नो नाह्नादेशो विधीयते ।
पुण्याहं सुदिनाहम् एकाहमिति साध्यताम् ॥

अग्राख्यायामुरसः । ५ । ४ । ९३

अग्राख्यायाञ्च उरसः टच् प्रत्ययो विधीयते ।
अश्वोरसञ्च मुख्योऽश्वः अश्वानामुरस्तु विग्रहः ॥

अनोऽश्मायः सरसां जातिसंज्ञयोः । ५ । ४ । ९४

अनोश्मायस्सरोभ्यश्च टच् भवेद् जातिसंज्ञयोः ।
उपानसममृताश्मः कलायसं महानसम् ॥
पिण्डाश्मः लोहितायसं जलसरसमित्यपि ।

ग्रामकौटाभ्यां च तक्ष्णः । ५ । ४ । ९५

ग्राम-कौटपरात् तक्ष्णः टच् प्रत्ययो विधीयते ।
ग्रामतक्षः साधारणः कौटतक्षः स्वतन्त्रकः ॥

अतेः शुनः । ५ । ४ । ९६

अतेः शुनः प्रत्ययष्टच् वराहोऽतिश्व उच्यते ।
अतिश्वी कथिता सेवा नीचतायां बुधैरिह ॥

उपमानादप्राणिषु । ५ । ४ । ९७

उपमानादप्राणिषु शुनष्टच् प्रत्ययो भवेत् ।
आकर्षः श्वेव विग्रहे आकर्षश्वः प्रयुज्यते ॥
आकृष्यते कुसूलादि गतधान्यमनेन वै ।
आकर्षः स उच्येत पश्चाङ्गुलश्च काष्ठजः ॥

उत्तरमृगपूर्वाच्च सक्थ्नः ५ । ४ । ९८

उत्तरमृगपूर्वाच्च सक्थ्नष्टजुपमानतः ।
उत्तरसक्थ्नं मृगसक्थ्नं पूर्वसक्थ्नमादि स्यात् ॥
फलकमिव च सक्थि फलकसक्थमिति भवेत् ।

## नावो द्विगोः । ५ । ४ । ९९

नावो द्विगोः सूत्रमस्ति नौशब्दान्ताद् द्विगोस्तु टच् ।
तद्धितस्यालुक्येवेह द्विनावरूप्य इष्यते ॥
द्विनावश्च त्रिनावश्च पञ्चनावप्रियस्तथा ।

## अर्द्धाच्च । ५ । ४ । १००

अर्धाच्च इति सूत्रेण अर्धान्नावस्तु टच् भवेत् ।
अर्धनावं प्रयोगस्तु क्लीबत्वमत्र लोकतः ॥

## खार्याः प्राचाम् । ५ । ४ । १०१

द्विगोरर्धाच्च खार्याष्टच् प्रत्ययस्तु विकल्पते ।
अर्धखारमर्धखारि द्विखारं च द्विखारि च ॥
चतुर्द्रोणप्रमाणस्य खारी नाम बुधां मते ॥

## द्वित्रिभ्यामञ्जलेः । ५ । ४ । १०२

द्वित्रिश्यामञ्जलेस्तु टच् वा द्विगुसमासके ।
द्व्यञ्जलं द्व्यञ्जलि रूपं समाहारे कृते द्वयम् ॥

## ब्रह्मणो जानपदाख्यायाम् । ५ । ४ । १०४

ब्रह्मान्तात् तत्पुरुषात् टच् प्रत्ययस्तु जायते ।
समासाज्जानपदत्वमर्थो निस्त्रियते यदा ॥
सुराष्ट्रे ब्रह्मा विग्रहात् सुराष्ट्रब्रह्म उच्यते ।

## कुमहद्भ्यामन्यतरस्याम् । ५ । ४ । १०५

ब्रह्मणष्टज् विकल्पेन कुमहद्भ्यां पराविह ।
कुब्रह्मश्च कुब्रह्मा च कुत्सितो ब्राह्मणः स्मृतः ॥

## आन्महतः समानाधिकरणजातीययोः । ६ । ३ । ४६

आन्महतः समानाधिकरणे जातीयप्रत्यये ।
महाब्रह्मो महादेवः महाजातीय इष्यते ॥
आदिति योगविभागस्तेन एकादशादयः ।

महदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च । वा० ।

घासकरविशिष्टेषु महदात्वं विशेषतः ।
असामानाधिकरण्ये महाघासः महाकरः ॥
महाविशिष्ट इत्यादि रत्वे कृतेऽत्र सिद्ध्यति ।

अष्टनः कपाले हविषि । वा० ।

आत्वं स्यादष्टनो नित्यं कपालः परतो यदि ।
हविरर्थो भवति चेद् अष्टाकपाल इष्यते ॥

गवि च युक्ते । वा० ।

युक्तेऽर्थे वर्तमाने गोशब्दश्चेत् परो भवेत् ।
तदाप्यष्टन आत्वं स्याद् अष्टागवं सुसिद्ध्यति ॥
शकटं तद्विजानीयादष्टाभिर्गोभिरुह्यते ।

द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः । ६ । ३ । ४७

द्व्यष्टनस्तु भवेदात्वं संख्यायामिह सर्वदा ।
अबहुव्रीह्यशीत्योश्च द्वौ च दश च द्वादश ॥

प्राक्शतादिति वक्तव्यम् । वा० ।

द्व्यधिका विंशतिरेव द्वाविंशतिरुच्यते ।
अष्टौ च विंशतिश्च अष्टाविंशतिरुच्यताम् ॥
अष्टात्रिंशत्तथान्यापि संख्याऽष्टादशादि खलु ।
द्वित्राः द्व्यशीतिरित्यादौ निषेधान्नात्वमिष्यते ।
प्राक्शतादिति वक्तव्यं तस्मान्न द्विशतादिके ॥

त्रेस्त्रयः । ६ । ३ । ४८

त्रेः त्रयः क्रियतेऽबहुव्रीह्यशीत्योस्तु पूर्ववत् ।
संख्यायाश्च त्रयादेशात् त्रयोविंशतिरादि स्यात् ॥
त्रिर्दश त्रिदशा एवं त्रिशतं त्रिसहस्रकम् ।
प्रयुज्यते त्रयादेशं विनैव तु निषेधतः ॥

विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् । ६ । ३ । ४९

चत्वारिंशदादिपरे द्व्यष्टनोरात्वमस्ति वा ।
त्रयादेशोऽपि पक्षे स्यात् प्रयोगो दृश्यतामधः ॥
द्विचत्वारिंशदुच्येत द्वाचत्वारिंशदपि चेत् ।
अष्टचत्वारिंशदिति अष्टाचत्वारिंशदपि ॥
त्रिचत्वारिंशदिति चेत् त्रयश्चत्वारिंशदपि ।
एवमग्रेऽपि बोधव्यं द्व्यष्टनोरात्वमेव हि ॥

एकादिश्चैकस्य चादुक् । ६ । ३ । ७६

एकादिश्चैकस्य चादुक् स्याद्विकल्पानुनासिकः ।
एकान्नविंशतिरेवमेकाद् न विंशतिरिति ॥
एकेन न विंशतिस्तु विग्रहोऽत्र प्रदर्श्यताम् ।

षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च धासु वेति वाच्यम् । वा० ।

षष उत्वं दतृदशधासूत्तरपदस्य च ।
ष्टुत्वं चापि विधीयेत धाप्रत्यये विकल्पतः ॥
षड्दन्ता अस्य षोडन् सः षोढा षड्धा च षोडश ।

परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः । २ । ४ । २६

द्वन्द्वे तत्पुरुषे कार्यं परवल्लिङ्गमेव च ।
इमे कुक्कुटमयूर्यौ मयूरीकुक्कुटाविमौ ॥
पिप्पल्या अर्द्धमित्यत्र उच्यतामर्धपिप्पली ।

द्विगुप्राप्तापन्नालं पूर्वगतिसमासेषु प्रतिषेधो वाच्यः । वा० ।

प्रतिषेधोऽस्य वक्तव्यः प्राप्तापन्नयुतस्थले ।
अलंयुक्ते गतिसमासे द्विगावपि निषिध्यते ॥
प्राप्तजीविक आपन्न-जीविकोऽलंकुमारिरिति ।
निष्कौशाम्बिः पुरोडाशः तस्माल्लिङ्गं यथायथम् ॥

पूर्ववदश्ववडवौ । २ । ४ । २७ ।

पूर्ववदश्ववडवौ पुंस्येव च प्रयुज्यते ।
अत्रातन्त्रं द्विवचनमश्ववडवानपि भवेत् ॥

## रात्राह्नाहाः पुंसि । २ । ४ । २९

रात्राह्नाहाः पुंसि एव द्वन्द्वे तत्पुरुषे तथा ।
अहोरात्रः पूर्वरात्रः पूर्वाह्णश्च द्व्यहः पुनः ॥

## संख्यापूर्वं रात्रं क्लीबम् । लि० ।

संख्यापूर्वकरात्रं क्लीबमेव प्रयुज्यते ।
द्विरात्रमथ त्रिरात्रं गणरात्रं ततो भवेत् ॥
गणानां बहूनामिति समाहारोऽत्र विग्रहः ॥

## अपथं नपुंसकम् । २ । ४ । ३०

तत्पुरुषसमासे तु अपथं स्यान्नपुंसकम् ।
अन्यत्र अपथो देशो बहुव्रीहाविति स्थितिः ॥
समासान्तो न यत्रास्ति तत्राऽपन्थाः प्रयुज्यते ।

## अर्धर्चाः पुंसि च । २ । ४ । ३१

अर्धर्चाः पुंसि क्लीबे च प्रयुज्यते यथेच्छया ।

**अर्धर्चादिगणः—**

अर्धर्चो ध्वजस्तीर्थः शरीरः कलशोऽङ्कुशः ।
मण्डो देहश्च पीयूषः पुंसि क्लीबेऽपि युज्यते ॥

## जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् १।२।५८

जात्याख्यायां विकल्पेन बहुवचनं प्रयुज्यते ॥
एकस्मिन्नपि वक्तव्ये विप्राः पूज्या इति यथा ॥
पक्षे तु ब्राह्मणः पूज्यः यथेच्छं वक्तुमर्हति ।

## अस्मदो द्वयोश्च । १ । २ । ५९

एकत्वे खलु द्वित्वेऽपि बहुवचनमस्मदः ।
वयं ब्रूमोऽथवा पक्षे ब्रवीमि स्वेच्छया ह्यहम् ॥
आवां ब्रूव इत्यपि वा वक्तुमर्हति बालकः ।
सविशेषणवाक्ये तु पटुरहं ब्रवीमि स्यात् ॥
एकत्वे बहुवचनमेतादृशि स्थले नहि ।

फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे । १ । २ । ६०

फल्गुनीप्रोष्ठपदानां नक्षत्रार्थे विभाषया ।
द्वित्वे बहुत्वमुच्येत पूर्वाः प्रोष्ठपदा इति ॥
एवं पूर्वाश्च फल्गुन्यः पूर्वे फल्गुन्याविति ।

तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् । १ । २ । ६३

नक्षत्रवाचितिष्यस्य पुनर्वस्वोर्यदि भवेत् ।
द्वन्द्वं तदा बहुत्वार्थे द्विवचनं विधीयते ॥
तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू वदेत् ।
अत्र-तिष्यः काचिदेकतरा पुनर्वसू च द्वे स्मृते ॥

स नपुंसकम् । २ । ४ । १७

स नपुंसकमित्येवं नियमं विदधाति वै ।
समाहारे द्विगुर्द्वन्द्वः नपुंसके प्रयुज्यताम् ॥
पञ्चगवञ्च दन्तोष्ठं साध्यतां द्विगुद्वन्द्वतः ।
अकारान्तोत्तरपदो द्विगुः स्त्रियां प्रयुज्यते । वा० ।
पञ्चमूली त्रिलोकी च समाहारसमासतः ।

आबन्तो वा । वा० ।

आबन्तो वा पञ्चखट्वी पञ्चखट्वमपि भवेत् ।

अनो नलोपश्च वा द्विगुस्त्रियाम् । वा० ।

द्विगोरनो नलोपस्तु विकल्पेन स्त्रियामपि ॥
पञ्चतक्षी पञ्चतक्षं स्त्रीनपुंसकयोर्द्वयोः ॥

पात्राद्यन्तस्य न । वा० ।

पात्राद्यन्तसमाहारः स्त्रियां नैव प्रयुज्यते ।
पञ्चपात्रं त्रिभुवनं चतुर्युगमिति तथा ॥
अस्याकृतिगणत्वेन सिद्ध्यत्यन्यदपि पदम् ।

पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा । वा० ।

पुण्यसुदिनादह्नस्तु प्रयोगः स्यान्नपुंसके ।
पुण्याहं सुदिनाहञ्च पुण्यमहस्तु विग्रहः ॥

पथः संख्याऽव्ययादेः । वा० ।

संख्यादिरव्ययादिश्च समासान्तपथो यदा ।
नपुंसकं भवेत् तत्र त्रिपथं विपथं यथा ॥

त्रयाणां पन्थाः इति, विरूपः पन्थाः इति च विग्रहोऽत्र दर्शनीयः ।

सुपन्था अतिपन्थाश्च नपुंसकं विनैव स्यात् ।
प्रत्ययः कोऽपि यस्मान्न समासान्तोऽत्र जायते ॥

सामान्ये नपुंसकम् । वा० ।

लिङ्गं न नियतं यस्य सामान्यमिति तद्भवेत् ।
नपुंसकञ्च सामान्ये मृदु पचति तत्तटम् ॥

तत्पुरुषोऽनञ्कर्मधारयः । २ । ४ । १९

नञ्कर्मधारयभिन्नः तत्पुरुषोऽधिक्रियते ।
परवल्लिङ्गं यावत् तत्राधः कार्यमुच्यते ॥

संज्ञायां कन्थोशीनरेषु । २ । ४ । २०

कन्थान्तस्तु तत्पुरुषः संज्ञायां क्लीबलिङ्गकः ।
सौशमिकन्थमित्येवं नाम कस्यापि विद्यते ॥

उपज्ञोपक्रमं तदाद्याचिख्यासायाम् २ । ४ । २१

उपज्ञोपक्रमान्तोऽयं तत्पुरुषो नपुंसके ।
पाणिन्युपज्ञमस्तीदं व्याकरणं बुधां मते ॥
नन्दस्योपक्रम इति नन्दोपक्रममिष्यते ।

छाया बाहुल्ये । २ । ४ । २२

छायान्तस्तत्पुरुषो नपुंसके प्रयुज्यते ।
इक्षुच्छायं विग्रहोऽत्र इक्षूणां छाया भवेत् ॥

सभा राजाऽमनुष्यपूर्वा । २ । ४ । २३

सभान्तस्तत्पुरुषो राजाऽमनुष्यपूर्वकः ।
नपुंसके प्रयुज्येत इनसभमीश्वरसभम् ॥

पर्यायस्यैवेष्यते । वा० ।

राजाऽमनुष्यपूर्वोऽत्र पर्यायग्रहणं भवेत् ।
राजसभा चन्द्रगुप्तसभा इति स्त्रियां वदेत् ॥
रूढ्याऽमनुष्यशब्देऽत्र रक्षः–पिशाचबोधकः ।
रक्षःसभं पिशाचसभं द्वयं क्लीबे प्रयुज्यते ॥

अशाला च । २ । ४ । २४

अशाला चेति सूत्रेण संघातार्था सभा हि या ।
तदन्ततत्पुरुषस्य नपुंसकं विधीयते ॥
स्त्रीणां सभा स्त्रीसभं स्यात् स्त्रीसंघातार्थबोधने ।
शालार्थे धर्मशाला स्यात् नपुंसकं न स्यादिह ॥

विभाषा सेनासुराच्छायाशालानिशानाम् । २ । ४ । २५

सेना सुराच्छाया शाला निशान्तस्तत्पुरुषस्तु यः ।
नपुंसके विकल्पेन प्रयुज्यते बुधैर्जनैः ॥
ब्राह्मणसेनमिति वा ब्राह्मणसेना उच्यताम् ।
यवसुरं यवसुराः कुण्डच्छायश्च श्वनिशम् ॥
गोशालमथ गोशाला कुण्डच्छाया च श्वनिशा ।

तत्पुरुषसमाससारः—

प्रथमादिका विभक्तिस्तत्पुरुषे पूर्वपदेऽत्र सर्वाऽपि ।
किन्तु परस्मिन् भागे प्रथमैव जायते नियमात् ॥
तस्मात् सप्तविधोऽयं तत्पुरुषो विभक्तिभेदेन भवति ।
प्रादिसमासप्रभेदो नञ्तत्पुरुषोऽपि गण्यतामपरः ॥
विग्रहः शोभनो राजा सुराजा प्रथमोऽस्त्ययम् ।
धर्मं श्रितो धर्मश्रितः कर्मतत्पुरुषः स्मृतः ॥
नखभिन्नो नखैर्भिन्नस्तृतीयान्तः स्मृतः स च ।
गोभ्यो हितं चतुर्थ्यन्तस्तत्पुरुषस्तु गोहितम् ॥
वृकाद् भयं वृकभयं पञ्चम्यन्त उदाहृतः ।
षष्ठ्यन्तो राजपुरुषस्तत्पुरुषः प्रसिद्ध्यति ॥
ग्रामे सिंहो ग्रामसिंहः स्थालीपाकश्च सप्तमी ।
सर्वत्र प्रथमान्तं वै प्रधानं पदमन्तिमम् ॥

उत्तरपदे च प्रथमा विभक्तिरिति नियमो न संघटतेऽत्र ।
प्रादिसमासप्रकरणे दृश्यतां तदुपरि प्रदर्शितं सर्वम् ॥
अतिखट्वे द्वितीयास्ति तृतीया ह्यवकोकिले ।
चतुर्थी पर्यध्ययने निष्कौशाम्बौ च पञ्चमी ॥
अन्तर्ग्रामेऽत्र षष्ठीति केवलं सप्तमी नहि ।
उत्तरपदे समायाति सारं संक्षेपमीक्षताम् ॥
सुरेशझाकृत श्लोक-सिद्धान्तकौमुदी नवा ।
तत्पुरुषः समासोऽस्यां साङ्गोपाङ्गो निरूपितः ॥

॥ इति तत्पुरुषसमासप्रकरणम् ॥



# अथ बहुव्रीहिसमासप्रकरणम्

## शेषो बहुव्रीहिः २ । २ । २३

द्वितीयादिविभक्तीनां समासः परिकीर्तितः ।
शेषस्तु प्रथमा तत्र तदन्तस्य बहुव्रीहिः ॥
बहुव्रीहिसमासे तु मुख्योऽन्यः पुरुषो भवेत् ।
विभक्तिः प्रथमा तत्र कुत्रापि सप्तमी पुनः ॥

## अनेकमन्यपदार्थे । २ । २ । २४

अप्रथमाविभक्त्यर्थे समानाधिकरणे सति ।
अनेकमन्यपदार्थे समस्यते बहुव्रीहिः ॥
प्रायो बहुव्रीहिरयं समासो गुणिगुणैरन्यपदार्थमुख्ये ।
समस्यते वै प्रथमान्तशब्दो विलोक्यतामत्र प्रदर्श्यते सः ॥

सर्वेषां क्रमश उदाहरणम्—

यं ग्राममुदकं प्राप्तं स च प्राप्तोदकः स्मृतः ।
ऊढो रथो येन स च ऊढरथो वृषो मतः ॥
उपहृतः पशुर्यस्मै उपहृतपशुः शिवः ।
उद्धृत ओदनो यस्या सा स्थाली उद्धृतौदना ॥
पीतमम्बरं यस्य पीताम्बरो हरिः स्मृतः ।
वीराश्च पुरुषा यस्मिन् स ग्रामो वीरपुरुषः ॥
प्रथमार्थेऽन्यपदार्थे बहुव्रीहिर्न जायते ।
वृष्टे देवे गतो भृत्यः समासो न ततो भवेत् ॥
व्यधिकरणपदानामपि स्यान्न बहुव्रीहिः ।
पञ्चभिर्भुक्तमस्येति वाक्यमेव ततोऽभवत् ॥
प्रमाणे सति कुत्रापि व्यधिकरण इष्यते ।
चक्रं पाणौ भवेद्यस्य चक्रपाणिस्तु स हरिः ॥

प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः । वा० ।

प्रादिभ्यो धातुजस्य बहुव्रीहिः पदान्तरैः ।
उत्तरपदलोपोऽत्र प्रपर्णः साध्यताभिह ॥
प्रपतितः पर्ण इत्येवं विग्रहोऽत्र प्रदर्श्यते ।
समासे सति पतितं पदं लुप्यत्यनेन वै ॥

नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः । वा० ।

नञः परमस्त्यर्थकं पदान्तरैः समस्यते ।
अस्त्यर्थकस्य लोपश्च अनेनैव विधीयते ॥
अविद्यमानः पुत्रोऽस्ति यस्य सोऽपुत्र उच्यते ।

स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु । ६ । ३ । ३४

भाषितपुंस्कशब्दानां स्त्रीणां पुंवद् बहुव्रीहौ ।
स्यात् समानाधिकरणे स्त्रीलिङ्गोत्तरपदवति ॥
ऊङभावस्यैव पुंवन्न पूरणी-प्रियादिषु ।
चित्रा गौर्यस्य स विग्रश्चित्रगुः कथ्यते जनैः ॥
भार्या रूपवती यस्य रूपवद्भार्य उच्यते ।
पुंवद्भाव उभयत्र जायते नियमेन वै ॥
समासोऽयमनेकस्य तस्मादिदं प्रदर्श्यते ।
चित्रा जरती गौर्यस्य चित्राजरतीगुश्च सः ॥
जरती चित्रा गुर्वा च नात्र पुंवद् विधीयते ।
दीर्घे तन्व्यौ जङ्घे यस्य स दीर्घतन्वी जङ्घकः ॥
तन्वी दीर्घा जङ्घो वा पुंवदत्रापि नेष्यते ।
त्रिपदेऽत्र बहुव्रीहौ पुंवत्त्वं प्रथमस्य न ॥
व्यवधानं मध्यमेन उत्तारपदस्य वर्तते ।
पुंवत्त्वं न द्वितीयस्य पूर्वं पदं यतो न तत् ॥
उत्तारपदशब्देन समासस्यान्तिमं पदम् ।
पूर्वपदेन प्रथमाऽवयवं गृह्यते यतः ॥
वस्तुतस्तु मतेनात्र चित्राजरद्गुरित्यपि ।
जरती च असौ गौश्च जरद्गवी ततः परम् ॥

चित्रा जरद्गवी यस्य इत्येवं विग्रहो यदा।
चित्रजरद्गवी कोऽपि कृते च कर्मधारये॥
पुंवद्भाषितपुंस्कस्य गङ्गाभार्यस्तु जायते।
अनूङिति निषेधेन वामोरूभार्य उच्यते॥
कल्याण्या जननी यस्याः कल्याणीजननी च सा।
सामानाधिकरण्यस्याभावे पुंवद्विहास्ति न॥
सामानाधिकरण्यश्च यत्रोत्तरपदं भवेत्।
स्त्रीलिङ्गं तेन कल्याणीप्रधानश्च प्रयुज्यते॥
कल्याणी च प्रधानं वै विग्रहे कथ्यते यतः।
प्रधानं पदमत्रास्ति क्लीबे एव स्त्रियां नहि॥

अप्पूरणीप्रमाण्योः । ५ । ४ । ११६

अप्पूरणीप्रमाण्योश्च कल्याणीपञ्चमाश्च ताः।
स्त्रीप्रमाणं भवेद्यस्य स्त्रीप्रमाणश्च स भवेत्॥

सारांशः—

पूरणार्थकप्रत्ययान्तं यत् स्त्रीलिङ्गं पदं परम्।
तदन्ताच्च प्रमाण्यन्तादप् प्रत्ययो बहुव्रीहेः॥
कल्याणी पञ्चमी यासां रात्रीणां ता इति विग्रहः।

नद्यृतश्च । ५ । ४ । १५३

नद्युत्तरपदादेवम् ऋदन्तोत्तरपदाच्च।
बहुव्रीहेः प्रत्ययः कन् भवतीति प्रदर्शयेत्॥

केऽणः । ७ । ४ । १३

कप्रत्ययपरेऽनेन ह्रस्वोऽणः क्रियते सदा।

न कपि । ७ । ४ । १४

कपि ह्रस्वो न कर्तव्यः तस्माद्ध्रस्वो न स्यादिह।
कल्याणपञ्चमीकोऽयं पक्षः प्रयोग इष्यते॥
कर्तारो बहवो यत्र स भवेद् बहुकर्तृकः।

अत्र प्रियादिगणः—

प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा स्वसा।
कान्ता क्षान्ता समा बाला सचिवा दुहिताऽबला॥

तनया चपला भक्तिः षोडशान्ते न पुंविधिः ।
कल्याणी प्रिया यस्य स कल्याणीप्रियो जनः ॥

सामान्ये नपुंसकम् । वा० ।

नपुंसकञ्च सामान्ये दृढभक्तिस्ततो भवेत् ।
दृढं भक्तिश्च यस्यात्र स दृढभक्तिरुच्यते ॥
विग्रहेऽत्र च सामान्ये नपुंसकं प्रयुज्यते ॥
स्त्रीत्वस्यात्र विवक्षायां दृढाभक्तिरपि भवेत् ।
तत्पक्षे च दृढा भक्तिर्यस्येति च विग्रहः ॥

तसिलादिष्वाकृत्वसुचः । २ । ३ । ३५

तसिलादिषु च कृत्वसुजन्तेषु परेषु वै ।
स्त्रियाः पुंवद्भवेद्रूपं समासे तद्धितेऽथवा ॥
अव्याप्तेरतिव्याप्तेः परिहाराय दीक्षितैः ।
परिगणनमत्र सूत्रे तद्धिते प्रत्यये कृतम् ॥
त्रतसौ तरप्तमपौ चरड्जातीयरौ च थाल् ।
कल्पब्देशीयरौ एवं रूपप् च तिल्थ्यनः ॥
एतेषु च प्रत्ययेषु पुंवद्भावो विधीयते ।

उदाहरणम्—

बह्वीषु इति बहुत्र बहुतस्त्रतसोरिति ।
दर्शनीयतरा एवं दर्शनीयतमा भवेत् ॥
पट्वितरा पट्वितमा अत्र पुंवन्न जायते ।
घरूपादिना ह्रस्वः परत्वादस्य बाधकः ॥
पटुचरी पटुजातीया दर्शनीयकल्पा भवेत् ।
दर्शनीयदेशीयादौ पुंवद्भावो विधीयते ॥
प्रशस्ता वृकी वृकतिः सजथ्या बहुथादिके ।
पुंवद्भावो विधीयेत प्रयोगे गद्यपद्ययोः ॥

शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः । वा० ।

बह्वल्पार्थस्य पुंभावः शसि च प्रत्यये परे ।
बह्वीभ्यो देहि बहुशः अल्पाभ्यो देहि अल्पशः ॥

त्वतलोर्गुणवचनस्य । वा० ।

गुणवचनस्य पुंवद्भावस्त्वतलयोरिह ।
शुक्लाया भाव इत्यत्र शुक्लत्वं शुक्लता भवेत् ॥
प्रसिद्धगुणशुक्लादेर्ग्रहणं वचनोक्तितः ।
गुणवचनतो भिन्ने कर्तृत्वमत्र नैव स्यात् ॥
शरदः कृतार्थतेत्यादौ सामान्ये हि नपुंसकम् ।
तस्माद्ध्रस्वविधानस्य प्रश्न एव न जायते ॥

नेष्टं पुरद्वारवतीत्वमासीत्
कवेः पदं संगतमस्ति काव्ये ।
गुणे च शुक्लादिपरे प्रसिद्धे
जायेत पुंवन्नहि धर्मशास्त्रे ॥

भस्याढे तद्धिते । वा० ।

पुंवद्भावो भवत्येव भस्याढे तद्धिते परे ।
हस्तिनीनाञ्च समूहो हास्तिकं रूपमुच्यते ॥
आग्नेयी देवता यस्य आग्नेयः स पुंवत्कृते ।
सपत्न्यास्तु अपत्यं यः स सापत्न्यः प्रयुज्यते ॥

ठक्छसोश्च । वा० ।

पुंवद्भावो विधीयेत ठक्छशोश्च प्रत्यययोः ।
भवत्याश्छात्रा भावत्काः भवदीया अपि तथा ॥
सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो विधीयते ।
सर्वमयः प्रयोगः स्यात् सर्वकाम्यति इत्यपि ॥
सर्विका च यस्य भार्या स सर्वकभार्य इति ।
पुंवद्भावेन स्यादेवंविधं रूपं बहुव्रीहौ ॥
सर्वा प्रिया विग्रहेऽत्र सर्वप्रियः प्रसिद्ध्यति ।
पूर्वस्यैवेति नियमात् सर्विकादौ न पुंविधिः ॥

कुक्कुटयादीनामण्डादिषु । वा० ।

कुक्कुटादेस्तु पुंवद्भावो भवति निश्चयात् ।
कुक्कुटाण्डं मृगक्षीरं काकशावस्ततो भवेत् ॥

क्यङ्मानिनोश्च । ६ । ३ । ३६

क्यङ्मानिनोश्च परयोः पुंवद्भावो विधीयते।
एनीवाचरति या सा एतायते शुभानना ॥
श्येनीवाचरत्यत्र श्येतायते च वायसी।

न कोपधायाः । ६ । ३ । ३७

कोपधायाः स्त्रियाः पुंवद्भावो नैव विधीयते।
पाचिकाभार्य इत्येवं रसिकाभार्य उच्यते ॥
मद्रिका मानिनी सा स्त्री काप्यन्या मद्रिकायते।

कोपधप्रतिषेधे तद्धितवुग्रहणम् । वा० ।

कोपधप्रतिषेधे तु तद्धितस्य च वोर्ग्रहः।
पाका भार्या अस्ति यस्य पाकभार्यः स उच्यते ॥

संज्ञापूरण्योश्च । ६ । ३ । ३८

संज्ञायाश्च पूरण्याः पुंवद्भावो न जायते।
दत्ताभार्यस्तथा दत्तामानिनीह प्रयुज्यते ॥
पञ्चमी-सप्तमीभार्यः सुखी न जायते जनः।

वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे । ६।३।३९

वृद्धिशब्देन या वृद्धिः विहिता तद्धिते परे।
रक्तविकारभिन्नेऽर्थे पुंवद्भावो न तत्र स्यात् ॥
स्रौघ्नीभार्यः प्रसन्नोऽस्ति कन्यका माथुरीयते।
सूत्रेऽस्मिन् निमित्तशब्दः फलोपहितपरः खलु ॥
स्वरूपयोग्यहेतुर्न गृह्यते इति बुध्यताम्।
तस्माद् वैयाकरणभार्यः सौवश्वभार्य उच्यते ॥
वृद्धिशब्दं समुच्चार्य वृद्धिरत्र न जायते।
तस्मात् पुंवद्भवत्येव ऐजागमो न तादृशः ॥

स्वाङ्गाच्चेतः । ६ । ३ । ४०

स्वाङ्गादीकारवर्णो यस्तदन्ता स्त्री पुमान् नहि।
सुकेशी अस्ति भार्याऽस्य सुकेशीभार्य उच्यते ॥
अमानिनीनि निषेधेन सुकेशमानिनी भवेत।

जातेश्च । ६ । ३ । ४१

जातेः परः स्त्रीप्रत्ययस्तदन्तं न पुमान् भवेत् ।
शूद्रा भार्या अस्ति अस्य शूद्रभार्यः स उच्यते ।।
गुरु में ब्राह्मणीभार्यः पुंवद्भावो निषिध्यते ।
हस्तिनीनां समूहस्तु हास्तिकं कथ्यते बुधैः ।।

प्रासङ्गिकं समाप्य प्रकृतमनुस्रियते—

संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये । २।२।२५

अव्ययासन्नादूराधिकसंख्यापदानि च ।
बहुव्रीहौ समस्यन्ते संख्येयार्थकसंख्यया ।।
दशानाञ्च समीपे ये ते सन्त्युपदशाः नव ।
उपगता दश येषामिति न विग्रहोऽत्र वै ।

ति विंशतेर्डिति । ६ । ४ । १४२

डिति परे च तेर्लोपो भसंज्ञकस्य विंशतेः ।
विंशतेः सन्ति आसन्ना आसन्न विंशास्ते जनाः ।।
आसन्ना विंशतिर्येषामिति न विग्रहस्त्विह ।
अदूरास्त्रिशतश्छात्रा अदूरत्रिंशाः सन्ति ते ।।
अधिकाश्चत्वारिंशतः अधिकचत्वारिंशाश्च ते ।
द्वौ वा त्रयो वा द्वित्राः स्युर्वार्थेऽयञ्च बहुव्रीहिः ।।
वार्थो नात्र विकल्पोऽस्ति किन्तु संशय इष्यते ।
द्विरावृत्ता दश प्रोच्य द्विदशा विंशतिर्भवेत् ।।
बहुव्रीहिः सुजर्थेऽत्र विग्रहेणेदमुच्यते ।

अत्र सारः—

वृत्तौ सुजर्थान्तर्भावेनैवैकार्थीभावाश्रयणात् सुचोऽत्राप्रयोगः ।

दिङ्नामान्यन्तराले । २ । २ । २६

दिङ्नामान्यन्तराले च समस्यन्ते बहुव्रीहिः ।
दक्षिणस्या अथ पूर्वस्या दिशोऽन्तरालं विग्रहे ।।
दक्षिणपूर्वा आग्नेयकोणनाम भवेदिह ।

तत्र तेनेदमिति सरूपे । २ । २ । २७

तत्र तेनेदमिति सरूपे ग्रहणे सति ।
इदं युद्धं प्रवृत्तमिति तात्पर्ये हि समस्यते ॥
केशेषु केशेषु धृत्वा युद्धं केशाकेशि इति ।
दण्डैर्दण्डैः प्रहृत्येदं दण्डादण्डि च कथ्यते ॥

ओर्गुणः । ६ । ४ । १४६

उवर्णान्तस्य भस्येह गुणः स्यात्तद्धिते परे ।
ओर्गुणः सूत्रमित्यस्य तात्पर्यमिह वर्णितम् ॥
बाहुभ्यां बाहुभ्यां युद्धं प्रवृत्तं बाहूबाहवि ॥

अत्र विशेषः—

ओरोदिति प्रयोक्तव्ये गुणोक्तिर्नियमार्थिका ।
गुणस्यास्य अनित्यत्वं तस्मात् स्वायंभुवमिति ॥
सरूपाभावतो नात्र हलेन मुसलेन च ।
समासः क्रियते विज्ञैस्तस्माद् विग्रह एवहि ॥

तेन सहेति तुल्ययोगे । २ । २ । २८

तुल्ययोगे वर्तमानं तृतीयान्तेन सह पदम् ।
समस्यतेऽथ तत्पश्चात् सहस्य स इति भवेत् ॥

वोपसर्जनस्य । ६ । ३ । ८२

बहुव्रीहेरवयवस्य सहस्य स विकल्पतः ।
पुत्रेण सह विग्रहे सपुत्रः सहपुत्र इति ॥
पूर्वसूत्रे तुल्ययोगवचनं प्रायिकं ततः ।
सकर्मकः सलोमक इत्यादावपि स भवेत् ॥

प्रकृत्याऽऽशिषि । ६ । ३ । ८३

आशीर्वादे प्रकृत्या स्यात् सहशब्दो बहुव्रीहौ ।
सहात्मजाय राज्ञे श्रीवीरेन्द्राय शुभं वदेत् ॥

अगोवत्सहलेष्विति वाच्यम् । वा० ।

गोवत्सहलशब्दानां योगे सहस्य स इह ।
सगवे च सवत्साय सहलाय शुभं वदेत् ॥

बहुव्रीहौ संख्येये डजबहुगणात् । ५ । ४ । ७३

बहुव्रीहौ च संख्येये डच् प्रत्ययो विधीयते (डच् अ)
वहुगणान्तशब्दान्न प्रत्ययो डच्च जायते ॥
उपदशाः पूर्वमेव नव एकादशोदिताः ।
बह्वन्तादुपबहवः प्रयोगः स्याड्डचं विना ॥

संख्यायास्तत्पुरुषस्य वाच्यः । वा० ।

संखयायास्तत्पुरुषे डजत्र क्रियते ततः ।
निर्गतानि त्रिंशतो हि चैत्रस्य निस्त्रिंशानि वै ॥
वर्षाणि समभूवन्निति वक्तुं विशिष्यति ।
निर्गतास्त्रिंशतोऽङ्गुलेर्निस्त्रिंशः खड्ग उच्यते ॥

बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् । ५ । ४। ११३

स्वाङ्गवाचि सक्थ्यक्ष्यन्ताद् बहुव्रीहेस्तु षच् भवेत्।
दीर्घसक्थ्नी जलजाक्षी प्रयोगः साध्यतामिह ॥ (षच् अ)
दीर्घे च सक्थिनी यस्य जलजे इव अक्षिणी।
शकटादौ दीर्घसक्थि प्रयोगः स्यान्न चात्र षच् ॥
स्थूलाक्षा वेणुयष्टयादि रक्षणो दर्शनादचि कृते ।
पर्वाङ्कुरं यत्र यष्टयां दीर्घं सा गृह्यते बुधैः ॥

अङ्गुलेर्दारुणि । ५ । ४ । ११४

अङ्गुल्यन्ताद् बहुव्रीहेः षच् प्रत्ययश्च दारुणि ।
पञ्चाङ्कुलं भवेद्दारु काष्ठं धान्यादिज्ञेयकम् ॥
पञ्च अङ्गुलयो यस्य विग्रहोऽत्र प्रदर्श्यताम् ।
द्वयङ्गुलायष्टिरित्यादौ तत्पुरुषो न बहुव्रीहिः ॥
अच् प्रत्यय एवात्र तत्पुरुषस्याङ्गुलेरिति ।
दारुभिन्नार्थतात्पर्ये पञ्चाङ्गुलिः करः स्मृतः ॥

द्वित्रिभ्यां षमूर्ध्नः । ५ । ४ । ११५

द्वित्रिभ्यां परस्य मूर्ध्नः ष प्रत्ययो बहुव्रीहौ ।
द्वे मूर्ध्नी यस्य द्विमूर्ध्नः स्त्रिमूर्ध्नोऽप्येदमेव हि ॥

नेतुर्नक्षत्रे अब्वक्तव्यः । वा० ।

अप् प्रत्ययो नेतृशब्दान्नक्षत्रे च बहुव्रीहौ ।
मृगो नेतास्ति यासां ता मृगनेत्राश्च रात्रयः ॥

अन्तर्बहिर्भ्याञ्च लोम्नः । ५ । ४ । ११७

लोम्नोऽन्तर्बहिर्भ्याञ्च परस्मादब् बहुव्रीहौ ।
अन्तर्लोमो बहिर्लोमः पुरुषोऽयं युवाऽधुना ॥

अञ्नासिकायाः संज्ञायां नसं चास्थूलात् ।५।४।११८

नासिकान्तबहुव्रीहौ नासिकाया नसं भवेत् ।
अच् प्रत्ययोऽपि जायेत स्थूलपूर्वस्य किन्तु न ॥

पूर्वपदात्संज्ञायामगः । ८ । ४ । ३

पूर्वपदस्थनिमित्तात् परस्य नस्य णो भवेत् ।
गकारव्यवधाने न संज्ञायामेव जायते ॥
द्रुरि व नासिका यस्य द्रुणसो राक्षसोऽभवत् ।
खरणसः खरइव नासिका यस्य स भवेत् ॥
ऋगयते नहि णत्वं गकारव्यवधानतः ।
अस्थूलादत्र सूत्रेऽस्ति ततः स्यात् स्थूलनासिकः ॥
रामायणे तथा नारायणेणत्वमनेन हि ।

खुरखराभ्यां वा नस् । वा० ।

विभाषा खुरखराभ्यां नासिकायाश्च नस् भवेत् ।
अच् प्रत्ययोऽपि पक्षेऽत्र तस्माद्रूपं द्वयं द्वयम् ॥
खुरणाः खरणा रूपं खुरणसः खरणसः ।

उपसर्गाच्च । ५ । ४ । ११९

प्रादेर्योनासिका शब्दस्तदन्तादच् बहुव्रीहेः ।
नासिकाया नसादेशः संज्ञार्थेन भवेदिदम् ॥
उन्नता नासिका यस्य स उन्नस उदाहृतः ।

### उपसर्गाद् बहुलम् । ८ । ४ । २८

उपसर्गस्थनिमित्तात् परस्य नस्य णविधिः ।
बहुलं जायते तस्मात् प्रणसस्तेन सिद्ध्यति ॥
प्रकृष्टा नासिका यस्य विग्रहोऽत्र प्रदर्श्यताम् ।

### वेर्ग्रो वक्तव्यः । वा०

विगता नासिकायस्य स विग्रः कथ्यते इह ।
नासिकायाश्च ग्रादेशो जायते वार्तिकेन वै ॥
भट्टी काव्ये प्रयोगस्तु विनसा हतबान्धवा ।
तस्यसिद्धिर्विगतया नासिकयोपलक्षणात् ॥

### सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपद-प्रोष्ठपदाः । ५ । ४ । २०

अच् प्रत्ययं विधायैव सुप्रातादिर्निपात्यते ।
बहुव्रीहि समासेऽत्र दृश्यतामज् विशेषतः ॥
सुप्रातः सुदिवः सुश्वः शारिकुक्षः एणीपदः ।
चतुरस्रोऽजपदः प्रोष्ठपदश्चात्र विगृह्यते ॥
शोभनं प्रातरस्येति सुप्रातः कोऽपि भाग्यवान् ।
शोभनं श्वोभवेद्यस्य स सुश्वः कथ्यते जनः ॥
शोभनं च दिवा यस्य सुदिवः स जनो भवेत् ।
शारेरिवकुक्षिरस्य शारिकुक्षः स उच्यते ॥
एण्या अजस्य प्रोष्ठस्य इव पादौ यज्जनस्य सः ।
एणीपदोऽजपदश्च प्रोष्ठपदश्च कथ्यते ॥
अच् प्रत्ययो बहुव्रीहावेतेषु च विधीयते ।
निपातनाच्च पद्भावः पादस्यात्रकृतः पुनः ॥

### नञ्दुःसुभ्यो हलिसक्थ्नोरन्यतरस्याम् । ५।४।१२१

नञस्तथा च दुःसुभ्यां परभागे स्थितादिह ।
हलेरच् प्रत्ययो ज्ञेयः सकथ्नश्चापि विकल्पतः ॥

अहलोऽहलिरसक्थनोऽसक्थिश्चदुर्हलस्तथा ।
दुःसक्थिः सुहलश्चाथ सुसक्थः स्याद् बहुव्रीहौ ॥
शक्त्योरिति पाठान्तरेऽशक्तोऽशक्तिश्च सिद्धयति ।

नित्यमसिच् प्रजामेधसोः । ५ । ४ । १२२

नञ्दुःसुभ्यस्तु परस्मात् प्रजामेधाद्वयादसिच् ।
अप्रजाः दुष्प्रजाश्चात्र सुप्रजाः पदमुच्यते ॥
अमेधाः खलु दुर्मेधाः सुमेधाः स्याद्बहुव्रीहौ ।

धर्मादनिच् केवलात् । ५ । ४ । १२४

केवलाच्च पूर्वपदात् परो धर्मो भवेद्यदि ।
तदन्ताच्च बहुव्रीहे रनिच् प्रत्यय इष्यते ॥
कल्याणः धर्मो यस्य कल्याणधर्मा स जनः । अनिच् अन् ।
केवलादिति नियमात् परमः स्वो धर्मोऽत्र वै ।
नानिज् भवति त्रिपदे बहुव्रीहाविति स्थितिः ॥
संदिग्धसाध्यधर्मेति कर्मधारयमाश्रयन् ।
बहुव्रीहिं विधायैव साधयेदीदृशं पदम् ॥
परमस्वधर्मा आदिरेवमेव सुसाध्यताम् ।

जम्भासुहरिततृणसोमेभ्यः । ५ । ४ । १२५

सुहरिततृणसोमेभ्यः परो जम्भा निपात्यते ।
सुजम्भा हरितजम्भा तृणजम्भादि साध्यताम् ॥
शोभनो जम्भो यस्य स सुजम्भो निपातनात् ।
जम्भो भक्ष्ये च दन्ते च कथितः शास्त्रपण्डितैः ॥

दक्षिणेर्मा लुब्धयोगे । ५ । ४ । १२६

दक्षिणेर्मा लुब्धमृगः प्रयोगः स्यादनिच्कृते ।
दक्षिणे ईर्ममस्त्यस्य व्याधेन च कृतव्रणः ॥

इच् कर्मव्यतिहारे । ५ । ४ । १२७

कर्मणो व्यतिहारे स्यादिच् प्रत्ययो बहुव्रीहौ ।
समासान्तः प्रत्ययोऽयमिज् भवेत्कलहस्थितौ ॥
केशाकेशि स्त्रियांयुद्धं मुसलामुसलि नृणाम् ।

द्विदण्ड्यादिभ्यश्च ५ । ४ । १२८

द्विदण्ड्यादिपदसिद्ध्यर्थं स्यादसिच् नित्यमेव हि ।
द्वौ दण्डौ प्रहरणेस्तो यस्मिन् द्विदण्डि तद्भवेत् ॥
द्विमुसलि उभयेहस्ति उभयाहस्ति साध्यताम् ।

प्रसंभ्यां जानुनोर्ज्ञुः । ५ । ४ । १२९

प्रसंभ्याञ्च परस्यात्र जानुनोर्ज्ञुर्विधीयते ।
बहुव्रीहि समासे हि प्रज्ञुः संज्ञुस्ततो भवेत् ॥
प्रगते जानुनी यस्य स प्रज्ञुः कथ्यते जनः ।
संगते जानुनी यस्य स संज्ञुरुच्यते पुनः ॥

ऊर्ध्वाद्विभाषा । ५ । ४ । १३०

ज्ञुरादेशो विकल्पेन ऊर्ध्वात्परस्य जानुनः ।
ऊर्ध्वज्ञुरूर्ध्वजानुः प्रयोगः पाक्षिको भवेत् ॥

धनुषश्च । ५ । ४ । १३२

धनुरन्तबहुव्रीहेरनङ्ङादेश इष्यते ।
शार्ङ्गं धनुर्भवेद्यस्य शार्ङ्गधन्वा हरिःस्मृतः ॥

वा संज्ञायाम् । ५ । ४ । १३३

संज्ञायामनङ्कार्यं विकल्पेन भविष्यति ।
शतधन्वा शतधनुः कश्चिदासीन्महारथिः ॥

जायाया निङ् । ५ । ४ । १३४

जायान्तस्य बहुव्रीहेर्निङादेशो भविष्यति ।

लोपो व्योर्वलि । ६ । १ । ६६

यस्य वस्य च लोपः स्याद्वलिपरे पदे सदा ।
युवतिर्यस्य जायास्ति स युवजानिरुच्यते ॥

गन्धस्येदुत्पूतिसुसुरभिभ्यः । ५ । ४ । १३५

एभ्यः परस्य गन्धस्य इत्वमन्तस्य जायते ।
बहुव्रीहिसमासे च तस्मादुद्गन्धिरिष्यते ॥
पूतिगन्धिः सुगन्धिश्च सुरभिगन्धिरिष्यते ।

गन्धस्येत्वे तदेकान्तग्रहणं कर्तव्यम् । वा० ।

गन्धस्येत्वे तदेकान्तग्रहणं वस्तु बुध्यताम् ।
एकान्तश्चैकदेशोऽत्र विभागेन विना स्थितिः ।।
समवायेन यत्रास्ति गन्धस्तत्र प्रवर्तते ।
संयोगेन भवेद्गन्धस्तत्र इत्वं न जायते ।।
सुगन्धिसलिलं पुष्पमित्यादौ समवायतः ।
गन्धस्तिष्ठति पुष्पादौ तस्मादत्रेत्वमिष्यते ।।
शोभनाः सन्ति गन्धा द्रव्याण्यस्येति विग्रहे ।
आपणिकः सुगन्धोऽयमत्र इत्वं न जायते ।।
आपणिकस्य गन्धस्य संयोगो वर्तते यतः ।

अल्पाख्यायाम् । ५ । ४ । १३६

अल्पाख्यायां भवेदित्वं गन्धस्यास्मिन् बहुव्रीहौ ।
यत्र सूपस्य गन्धोऽस्ति तत्सूपगन्धि भोजनम् ।।
घृतस्य गन्धः स्वल्पत्वं यत्रास्ति घृतगन्धि तत् ।

गन्धशब्दार्थः—

गन्धो गन्धक आमोदे लेशे सम्बन्धगर्बयोः । विश्वः ।

उपमानाच्च । ५ । ४ । १३७

उपमानात्परस्यापि गन्धस्येत्वं विधीयते ।
पद्मस्येव गन्धो यस्य पद्मगन्धिः सखा मम ।।

पादस्य लोपोऽहस्त्यादिभ्यः । ५ । ४ । १३८

हस्त्यादिवर्जितादत्र उपमानात्परस्य च ।
पादशब्दस्य लोपःस्याद्बहुव्रीहौ विशेषतः ।।
अलोऽन्त्यस्येति सूत्रेण अस्य लोपोऽन्तिमस्य च ।
व्याघ्रस्य सदृशौ पादौ यस्य स्तःसच व्याघ्रपात् ।।
हस्तिपादः कुसूलपादः इत्यादौ नहि लुप्यति ।

कुम्भपदीषु च । ५ ।४ । १३९

कुम्भपद्यादि शब्देषु लोपोङीष् च स्त्रियां भवेत् ।
पादस्यात्र च पद्भावो रूपं कुम्भपदी भवेत् ।।

संख्यासुपूर्वस्य । ५ । ४ । १४०

बहुव्रीहौ समासान्तलोपः पादस्य जायते ।
संख्यासुपूर्वकस्यैव-साध्यते च द्विपात् सुपात् ॥

वयसि दन्तस्य दतृ । ५ । ४ । १४१

संख्यासुपूर्वकस्यैव दन्तस्य दतृ जायते ।
अवस्थाबोधने दतृ दन्तस्य पशुजातिषु ॥
द्विदन् तथा चतुर्दन् षोडन् वै सुदती सुदन् ।
वयोभिन्ने द्विदन्तोऽयं करीत्यादौ न दद् भवेत् ॥

स्त्रियां संज्ञायाम् । ५ । ४ । १४३

संज्ञायाश्च स्त्रियामेव दन्तस्य दतृ जायते ।
अयोदती फालदती बहुव्रीहौ प्रसिद्धयति ॥
संज्ञातश्च भिन्नार्थे-समदन्ती प्रयुज्यते ।

विभाषा श्यावारोकाभ्याम् । ५ । ४ । १४४

श्यावारोकपरस्यापि दन्तस्य दतृ वा भवेत् ।
श्यावदन् श्यावदन्तश्च अरोकदन् दन्तोऽथवा ॥
श्यावस्तु कपिशो वर्णो—निश्छिद्रोऽरोक उच्यते ।
भवन्त्यरोका अच्छिद्रा दन्ता यस्यात्र विग्रहः ॥

अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च । ५ । ४ । १४५

एभ्यः परस्य दन्तस्य दतृ वा जायते इह ।
कुड्मलाग्रदन् कुड्मलाग्रदन्तश्च प्रयुज्यते ॥
शुद्धदन् शुद्धदन्तश्च शुभ्रदन् वृषदन्निति ।
समुच्चयार्थकश्चात्र तस्मान्मूषिकदन्निति ॥

स्पष्टीकरणम्—

कुड्मलाग्रमिव दन्तो यस्य, शुद्धोदन्तो यस्य, शुभ्रोदन्तो यस्य, वृषस्य दन्त इवदन्तो यस्येत्यादि क्रमशो विग्रहो वोध्यः ॥

ककुदस्यावस्थायां लोपः । ५ । ४ । १४६

ककुदस्यान्तलोपःस्यादवस्था बोधने सदा ।
पूर्णककुदजातककुदादिरूपं प्रसिद्धयति ॥
पूर्णञ्च ककुदे यस्य, अजातं ककुदं यस्य च ।

विग्रहोऽत्र विधीयेत वृषभपृष्ठाग्रभागे स्थूलं-
मांसपिण्डं ककुदं कथ्यतेपर्वतशिखरश्चापि।

त्रिककुत्पर्वते। ५। ४। १४७

त्रिककुत् पर्वतार्थे स्यात् ककुदस्यान्तलोपतः।
कस्यचित्पर्वतस्यैषा संज्ञा त्रिककुदोऽन्यतः॥

उद्विभ्यां काकुदस्य। ५। ४। १४८

उद्विभ्यां परस्यात्र लोपो भवति काकुदे।
अन्तिमस्य अकारस्य उत्काकुत् तेन जायते॥
विकाकुदपि साध्येत काकुदं नाम तालुनः।

पूर्णाद्विभाषा। ५। ४। १४९

पूर्णात्परस्य ककुदस्य अन्त्याकारश्च लुप्यति।
पूर्णं हि ककुदं यस्य पूर्णककुत् पूर्णकाकुदः॥

सुहृद्दुर्हृदौ मित्रामित्रयोः। ५। ४। १५०

मित्रामित्रे सुहृद्दुर्हृदौ निपात्येतेऽन्त्यलोपतः।
शोभनं हृदयं यस्य सुहृन्मित्रं निगद्यते॥
दुष्टं हृदयमस्येति दुर्हृत्संज्ञा रिपोर्भवेत्।
अन्यार्थे च सुहृदयः दुर्हृदयः प्रयुज्यते॥

उरःप्रभृतिभ्यः कप्। ५। ४। १५१

उरः प्रभृति शब्देभ्यो बहुव्रीहौ च कब् भवेत्।
व्यूढं विशालमुरोऽस्य व्यूढोरस्कः स उच्यते॥ कप् क।
प्रियं सर्पिर्भवेद्यस्य स प्रियसर्पिष्क उच्यते।
प्रियान् प्रियोऽनड्वांश्च नौ लक्ष्मीरत्र पठ्यते॥
एतेभ्य एकवचनेभ्यो नित्यं कप् प्रत्ययो भवेत्।
विग्रहे बहुवचनं चेत् तदा शेषाद्विभाषया॥
द्विपुमान् वा द्विपुंस्कोऽपि यथायोग्यं प्रयुज्यते।

अर्थान्नञः । ग ।

नञ् पूर्वादर्थशब्दाद्वै-कप् प्रत्ययश्च जायते ।
अनर्थकं पदं तस्मात् न अर्थो यस्य विग्रहे ॥
अपार्थकमपार्थन्तु सूत्रान्तरेण सिद्धयति ।

इनः स्त्रियाम् । ५ । ४ । १५२

स्त्रियामिन्नन्तशब्दात्कप् नगरी बहुदण्डिका ।
बहवो दण्डिनो यस्यां विग्रहोऽत्र प्रदर्श्यताम् ॥

अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेनापि तदन्तविधिं प्रयोजयन्ति । परि ।

अर्थवताऽनर्थकेन अनिनस्मन् ग्रहणानि प्रायस्तु ।
तदन्तविधिं कुर्वन्ति बहुवाग्मिका तेन सिद्धयति ॥
स्त्रीत्वा भावाच्च कप् नैव बहुदण्डी स आश्रमः ।

शेषाद्विभाषा । ५ । ४ । १५४

शेषाधिकारवत्सूत्रे-बहुव्रीहिस्थले तु वा ।
कप् प्रत्ययोऽनुक्तसमासान्तादत्र विधीयते ॥
महायशास्तथा पक्षे महायशस्क इत्यपि ।

आपोऽन्यतरस्याम् । ७ । ४ । १५

कप्याबन्तस्य वा ह्रस्वस्ततःस्याद् बहुमालकः ।
पक्षेऽत्र बहुमालाकः प्रयोगं स्वेच्छया कुरु ॥
कबभावे भवेद् ह्रस्वो बहुमालस्ततो भवेत् ।

न संज्ञायाम् । ५ । ४ । १५३

संज्ञायां बहुव्रीहौ कप् प्रत्ययो न च जायते ।
विश्वे देवा अस्य सन्ति विश्वेदेवः स उच्यते ॥

ईयसश्च । ५ । ४ । १५६

ईयसन्तोसोत्तारपदात् कप् प्रत्ययो न हि जायते ।
श्रेयांसो बहवो यस्य बहुश्रेयान् सखा मम ॥

ईयसो बहुव्रीहेर्नेति वाच्यम् । वा० ।

ईयसो बहुव्रीहेर्न ह्रस्वो भवति निश्चयात् ।
बह्वो यस्य श्रेयस्यः स भवेद् बहुश्रेयसी ॥

वन्दिते भ्रातुः । ५ । ४ । १५७

वन्दिते भ्रातृ-शब्दात्त् बहुब्रीहौ न कब् भवेत् ।
प्रशस्तभ्राता पार्थोऽस्ति कौरव्यो दुष्टभ्रातृकः ॥

नाडीतन्त्र्योः स्वाङ्गे । ५ । ४ । १५९

स्वाङ्गे ये नाडीतन्त्र्यौ तदन्तात्कप् न जायते ।
बहुनाडिरस्तिकायः बहुतन्त्री ग्रीवा तव ॥

निष्प्रवाणिश्च । ५ । ४ । १६०

निष्प्रवाणिः प्रयोगोऽपि कबभावे निपात्यते ।
निर्गता प्रवाण्यस्य निःप्रवाणिः पटो नवः ॥

सप्तमीविशेषणे बहुव्रीहौ । २ । २ । ३५

प्राक् प्रयोज्यं बहुव्रीहौ सप्तम्यन्तं विशेषणम् ।
तस्मादेवं प्रयोगोऽस्ति-कण्ठेकालःस चित्रगुः ॥

सर्वनामसंख्ययोरुपसंख्यानम् । वा० ।

सर्वनाम्नस्तथा संख्या शब्दस्य पूर्ववर्तिता ।
सर्वश्वेतो द्विशुक्लश्च प्रयोगः क्रियते ततः ॥

मिथोऽनयोः समासे संख्यापूर्वं शब्दपरविप्रतिषेधात् । वा० ।

मिथोऽनयोः समासे तु संख्या पूर्वं द्व्यन्य इह ।

संख्याया अल्पीयस्याः । वा० ।

अल्पीयस्याश्च संख्यायाः प्रयोगः पूर्वतो भवेत् ।
द्वित्राश्च पञ्चषा रूपं द्वन्द्वेऽपि द्वादश तथा ॥

वा प्रियस्य । वा० ।

वा प्रियस्य प्रयोगः स्यात् पूर्वमस्मिन् बहुव्रीहौ ।
गुणप्रियः प्रियगुणः प्रयोगः स्यान्निजेच्छया ॥

गड्वादेः परा सप्तमी । वा० ।

गड्वादेश्च परैव स्यात् सप्तमीयं बहुव्रीहौ ।
गडुकण्ठस्ततो रूपं गडुः कण्ठेऽस्य विग्रहे ॥
क्वचिन्नेति निषेधोऽस्ति वहेगडुस्ततो भवेत् ।

निष्ठा । २ । २ । ३६

निष्ठान्तञ्च बहुव्रीहौ पूर्वमेव प्रयुज्यते ।
कृतकृत्यो धृतधैर्यः सुजनः शोभते सदा ॥

जातिकालसुखादिभ्यः परा निष्ठा वाच्या । वा० ।

जातिकालसुखादिभ्यः परानिष्ठा प्रयुज्यते ।
मृगजग्धी मासजाता सुखजातादिसाध्यते ॥
प्रायिकं वचनं चेदं पीतोदकः कृतपटः ।

वाहिताऽग्न्यादिषु । २ । २ । ३७

प्राक्प्रयोगो विकल्पेन आहिताग्निगणेषु यः ।
आहिताग्निरयं विप्रः अग्न्याहितोऽपि कथ्यते ॥
आकृत्या गण्यते आहिताग्निरत्र प्रयोगतः ।

प्रहरणार्थेभ्यः परे निष्ठा सप्तम्यौ । वा० ।

प्रहरणार्थकशब्देभ्यः परा निष्ठा स सप्तमी ।
अस्युद्यतो दण्डपाणिः विवृतासिः पदेषु न ॥
सिद्धान्तकौमुदीकाव्ये—सुरेशझाकृते नदे ।
बहुव्रीहिसमासस्य साङ्गोपाङ्गनिरूपणम् ॥

॥ इति बहुव्रीहिसमासप्रकरणम् ॥



# अथ द्वन्द्वसमासः

—०—

चार्थे द्वन्द्वः । २ । २ । २९

चार्थे द्वन्द्वः समासः स्याच्चार्थाश्चत्वार एवहि ।
द्वयोरेव समासोऽयं चतुर्ष्वर्थेषु सत्स्वपि ।।
समुच्चयस्तु प्रथमो द्वितीयोऽन्वाचयः स्मृतः ।
इतरेतरयोगनामा समाहारश्चतुर्थकः ।।

समुच्चयेऽन्वाचयनामकेऽपि,
चार्थद्वयेनैव समास एषः ।
परस्परं तौ निरपेक्षरूपौ,
सामर्थ्ययोगो नहि वर्ततेऽत्र ।।

इतरेतरयोगेऽथ समाहारे चतुर्थके ।
अनयोश्चार्थयोर्द्वन्द्वः सामर्थ्यस्य च संभवात् ।।

स्पष्टीकरणम्—

ईश्वरं गुरुदेवञ्च भजस्वेति समुच्चये ।
एकार्थीभावसामर्थ्याभावाद् द्वन्द्वो न जायते ।।

टि० समुच्चये क्रमेणान्वयो भवति नतु समकालमेककालावच्छेदेनेति सामर्थ्याभावः स्पष्ट एव। सामर्थ्यञ्च पूर्वमेवोक्तमस्ति ।

भिक्षामट ब्रह्मचारिन् गाश्चानय लभेत चेत् ।
अन्वाचयेऽपि न द्वन्द्वः सामर्थ्यस्य अभावतः ।।

टि० अत्राटनक्रियायां मुख्यतया भिक्षाया अन्वयो गोश्च गौणतयाऽन्वयः, भिन्नभिन्नक्रियाया भिन्नभिन्नकालेऽन्वयस्तस्मात् सामर्थ्यं नास्ति ।

धवश्च खदिरश्चात्र इतरेतरयोगके ।
धवखदिरौ समासो भवत्येव विचार्यताम् ।।

टि० अत्र धवखदिरयोश्छेदनक्रियायां समकालमेवैकरूपेणान्वयस्तस्मात्सामर्थ्यमस्ति समासश्च क्रियते ।

नरश्च वानरश्चैवं पर्वतश्चेति विग्रहे ।
समासे सति रूपं स्यात् नरवानरपर्वताः ।।
तरुलते, लतावृक्षौ, मसीपात्रे, मुखानने ।
परवल्लिङ्गमुच्चार्यं च शब्देनास्ति विग्रहः ।।
इतरेतरे द्विवचनं बहुवचनमपि जायते समस्तात् ।
लिङ्गं भवति परस्मिन् शब्दे यद्विग्रहे दृष्टम् ।।
संज्ञा च परिभाषा च समाहारोऽनयोरिह ।
स्यात् संज्ञापरिभाषं युगपदन्वयसंभवात् ।।

टि० अत्रापि समूहस्यैकरूपेण समकालमेवान्वयः क्रियाया-मिति सामर्थ्यं स्पष्टमेव ।

सुखदुःखं दधिघृतं आराशस्त्रि जलफलम् ।
सर्वत्रैव समाहारो क्लीवत्वमेकबोधकम् ।।

सारांशः—

अवयवार्थप्रधानो द्वन्द्वः स्यादितरेतरः ।
समुदायार्थप्रधानः समाहारः सदा भवेत् ।।
द्व्यधिकानामपि द्वन्द्वो जायते विग्रहे कृते ।
तस्मादिह पितृ होतृ-पोतृ नेष्टोद्गातार इति ।।
इतरेतरयोगेऽस्मिन् स्यादानङ्नेष्टृशब्दतः ।

राजदन्तादिषु परम् । २ । २ । ३१

प्राक् प्रयोगोचितस्यापि राजदन्तादिषु परम् ।
दन्तानामस्ति राजा राजदन्तः स उच्यते ।।

धर्मादिष्वनियमः । वा० ।

धर्मादिष्वनियमेन प्रयोगः पूर्वमत्र स्यात् ।
धर्मार्थौ अर्थधर्मौ च स्वेच्छया वक्तुमर्हति ।।
जायाशब्दस्य जम्भावो दम्भावश्च निपातनात् ।
दम्पती जम्पती रूपं जायापती च पक्षतः ।।
जाया च पतिश्चात्र विग्रहः क्रियतां बुधैः ।
आकृत्या गण्यते एवं विधं वाक्यश्च पाठकैः ।।

द्वन्द्वे घि। २। २। ३२

द्वन्द्वे घिसंज्ञकं पूर्वं प्रयुज्यतेऽथ हरिहरौ।

अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे। वा०।

अनेकप्राप्तिकाले तु एकस्मिन् नियमः क्वचित्।
अन्यस्मिन् नियमो नास्ति स्वेच्छयैव प्रयुज्यते॥
हरिगुरुहराः पूज्याः हरिहरगुरवस्तथा।

अजाद्यदन्तम्। २। २। ३३

द्वन्द्वे पूर्वं प्रयुञ्जीत-अजाद्यदन्तकस्य च।
ईशकृष्णौ अन्नफले अन्धमूकौ अगमृगौ॥
बहुषु नियमोनास्ति कस्याप्येकस्य पूर्वता।
अश्वरथशिवेन्द्राः स्युर्नाश्वेन्द्ररथशिवा इति॥

घ्यन्तादजाद्यदन्तं विप्रतिषेधेन। वा०।

घ्यन्तात्पूर्वं प्रयुञ्जीत अजाद्यन्दन्तमत्रयत्।
विप्रतिषेधनियमादिन्द्राग्नी दत्तुमर्हसि॥

अल्पाच्तरम्। २। २। ३४

अल्पाच्तरमत्रपूर्वं प्रयोगे शिवकेशवौ।

ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण। वा०।

समानाक्षरशब्दानामृतु नक्षत्रवाचिनाम्।
आनुपूर्व्येण पूर्वं प्रयोगः क्रियते सदा॥
हेमन्तशिशिरौ कृत्तिकारौहिण्यौ प्रसिद्धयतः।
समानाक्षराणामभावे–अल्पाचां पूर्वं योजनम्॥
ग्रीष्मवसन्तौ इत्येव प्रयोगः क्रियते सदा।

लघ्वक्षरं पूर्वम्। वा०।

लघ्वक्षरवतां पूर्वं प्रयोगः कुशकाशमिति।

अभ्यर्हितञ्च। वा०।

भवेदभ्यर्हितं पूर्वं यथा तापसपर्वतौ॥

वर्णानामानुपूर्व्येण । वा ।

वर्णानामानुपूर्व्येण पूर्वंप्रयोग इष्यते ।
ब्राह्मणक्षत्रियवैश्यशूद्रा इत्थं प्रयुज्यते ॥

भ्रातुर्ज्यायसः । वा

भ्रातॄणां ज्यायसः पूर्वं यथा युधिष्ठिरार्जुनौ ।

द्वन्द्वश्च प्राणितूर्य सेनाङ्गानाम् । २ । ४ । २

प्राणितुर्यसेनाङ्गानां द्वन्द्वोभवति एकवत् ।
पाणिपादं हस्तवाहु मार्दङ्गिकपाणविकम् ॥
रथिकाश्वारोहमित्यादि प्रयोगो दर्शितस्त्विह ।

अत्र विशेषः—

समाहारेण एकत्वं स्यादिदं नियमाय वै ।
प्राण्यङ्गादेः समाहार एवस्यान्नेतरेतरः ॥

अनुवादे चरणाम् । २ । ४ । ३

स्थेणोर्लुक् प्रयोगे च चरणानां द्वन्द्व स्थले ।
एकवद्भावमाश्रित्य-प्रयोगः क्रियते सदा ॥
उदगात्कठकापालं प्रत्यष्ठात् कठकौथुमम् ।

अध्वर्युक्रतुरनपुंसकम् । २ । ४ । ४

अनपुंसक लिङ्गाना मध्वर्युक्रतु वाचिनाम् ।
द्वन्द्वोऽयमेकवत् स्यादर्काश्वमेधमादिवत् ॥

अध्ययनतोऽविकृष्टाख्यानाम् । २ । ४ । ६

समीपमध्ययनेन नाम यस्यास्ति तस्य वै ।
द्वन्द्वे स्यादेकवद्भावः पदकक्रमकं भवेत् ॥

जातिरप्राणिनाम् । २ । ४ । ६

प्राणिवर्जित जातीनां द्वन्द्वं स्यादेकवत्सदा ।
धानाशष्कुलि वक्तव्यं प्राणिनि नैकवद् भवेत् ॥

श्लो० सि० पू० २०

केवलं जातिप्राधान्ये एकवद्भाव इष्यते ।
द्रव्यमुख्यविवक्षायां बदरामलकान्यपि ।।

विशिष्टलिङ्गो नदीदेशोऽग्रामाः । २ । ४ । ७

ग्रामवर्ज्यं नदीदेशवाचिनां भिन्नलिङ्गिनाम् ।
द्वन्द्वस्य चैकवद्भावः समाहारे प्रयुज्यते ।।
गङ्गाचशोणश्चात्र गङ्गाशोणं भवेदिदम् ।
कुरवश्च कुरुक्षेत्रश्च कुरुकुरुक्षेत्रमुच्यते ।।
उद्धचश्च इरावती च उद्धचैरावति जायते ।

क्षुद्रजन्तवः । २ । ४ । ८

क्षुद्रजन्तुसमाहार—द्वन्द्वो भवति एकवत् ।
यूका च लिक्षश्चैव यूकालिक्षं प्रपुज्यते ।।

अत्र क्षुद्रजन्तुः—

क्षुद्रजन्तुरनस्थिः स्यादथवाक्षुद्रएव यः ।
शतं वा प्रसृतौ येषां केचिदानकुलादपि ।।
अपचित परिमाणत्वं क्षुद्रत्वं कैश्चिदुच्यते ।

येषाञ्च विरोधः शाश्वतिकः । २ । ४ । ९

शाश्वतिको विरोधस्तु येषां तत्रैकवद्भवेत् ।
काकोलूकश्च गोव्याघ्रमहिनकुलमित्यपि ।।

अत्र शङ्कासमाधानम्—

देवासुरैरम्बुनिधिर्ममन्थेति कवे र्वचः । शं० ।
मन्थनावसरे नैव विरोधस्तेन सिद्ध्यति ।। उ० ।
छायातपौ समासेऽत्र वैरं जीवगुणे नहि ।
अनयोर्नैकवद्भावस्तस्मादेव प्रवर्तते ।।

शूद्राणामनिरवसितानाम् । २ । ४ । १०

अबहिष्कृतशूद्राणा मेकवद्भाव इष्यते ।
तक्षा च अयस्कारश्च तक्षायस्कारमिष्यते ।।
पात्राद्बहिष्कृतनान्तु चाण्डालमृतपा इति ।

गवाश्वप्रभृतीनि च । २ । ४ । ११

यथोच्चारितमेव स्याद् गवाश्वमादि दर्शितम् ।
गवाश्वं रूपमुच्येत गौश्च अश्वश्च विग्रहे ।।
दासीदासं प्रयुञ्जीत नैकशेषः पुमान् स्त्रिया ।

विभाषा वृक्षमृगतृण धान्य व्यञ्जन पशु शकुन्य श्ववडवपूर्वापराधरोत्तराणाम् । २ । ४ । १२

विभाषा मृगवृक्षादि सूत्रसारांश ईदृशः ।

वृक्षादौ विशेषाणामेव । वा०

वृक्षो मृगस्तृणं धान्यं व्यञ्जनं शकुनिः पशुः ।।
एतेषामेकवद्भावो द्वन्द्वे कृते विभाषया ।
पूर्वापराधरोत्तराश्च वहुवादिषु वा भवेत् ।।

फल सेनाङ्ग वनस्पति मृगशकुनि क्षुद्रजन्तु धान्य तृणानां बहुप्रकृतिरेव द्वन्द्व एकवद्भवति । वा०

प्लक्षन्यग्रोधमथवा प्लक्षन्यग्रोधा इमे ।
रुरुपृषतमथवा रुरुपृषतास्ते मृगाः ।।
कुशकाशं कुशकाशाः दधिघृतं दधिघृते ।
व्रीहियवं व्रीहियवाः प्रयोगो द्विविधस्त्विह ।।
गोमहिषं गोमहिषाः शुकवकं शुकवकाः ।
अश्ववडवमुदाहृत्य पूर्वापरमुदाहरेत् ।।
पूर्वापरेऽश्ववडवौ प्रयुञ्जीत निजेच्छया ।
अधरोत्तर माख्येयं तथैवाधरोत्तरे ।।
बदराणि आमलकानि वदरामलकं भवेत् ।

विप्रतिषिद्धं चानधिकरणवाचि । २ । ४ । १३

विप्रतिषिद्धमद्रव्यवाचि तु यद्भवेदिह ।
तेषां द्वन्द्वो विरोधेन एकवज्जायते यथा ।।
शितोष्णञ्च शीतोष्णे विरुद्धार्थगुणा विमौ ।
सुखदुःखं सुखदुःखे प्रयोगोऽत्र निजेच्छया ।।

न दधि पय आदीति । २ । ४ । १४ ।

न दधि पय आदीनि द्वन्द्वे स्यु रेकवत् सदा ।
रूपं स्याद् दधिपयसी इध्मावर्हिषी दीर्घतः ॥
ऋक्सामे च वाङ्मनसे-समासान्तोऽज् विधीयते ।

अधिकरणैतावत्त्वे च । २ । ४ । १५

द्रव्य संख्याऽववोधे च एकवन्नियमो नहि ।
प्रयोगो दशदन्तोष्ठाः बहुवचनसंयुतः ॥

विभाषा समीपे । २ । ४ । १६

विभाषैव समाहारः समीपे द्रव्यवोधने ।
दन्तोष्ठमुपदशं दन्तोष्ठश्च उपदशाः ॥

आनङृतो द्वन्द्वे । ६ । ३ । २५

विद्यायोन्यर्थ शब्दानामृदन्तानां पदे परे ।
द्वन्द्वे आनङ्भवेद् होतापोताराविति जायते ॥
होतृपोतृनेष्टोद्गातारो मातापितरावित्यपि ।
पुत्रशब्दे परे क्वापि आनङ्कार्यं विधीयते ।
पितापुत्रौ प्रयोगस्तु तस्मादेव प्रसिद्धयति ॥

देवता द्वन्द्वे च । ६ । ३ । २६

देवता वाचिनां द्वन्द्वे आनङ्स्यादुत्तरे पदे ।
विश्वश्च वडवश्चैव विश्वावडवौ तावुभौ ॥
इन्द्रासौमौ तथारूपमिद्रावृहस्पती पुनः ।

वायु शब्द प्रयोगे प्रतिषेधः । वा ।

वायु शब्द प्रयोगे तु प्रतिषेधो भवेदिह ।
अग्निवायू च वाय्वग्नी-प्रयोगःस्यान्निजेच्छया ॥
अस्मिन् सूत्रे पुनर्द्वन्द्व ग्रहणान्नियमोऽस्त्ययम् ।
प्रसिद्धसाहचर्यस्य ग्रहणं जायते क्वचित् ॥
रूपं स्कन्द विशाखौ स्यात् तथा ब्रह्मप्रजापती ॥
इत्यादावानङ्नैव साहचर्य्यं न वर्तते ।

अग्नेः स्तुत् स्तोम सोमाः । ८ । ३ । ८२

अग्नेः परस्य सोमस्य षत्वं स्तुत्स्तोमयो रपि ।
अग्निश्चस्तूयते यस्मिन् अग्निष्टुत् क्रतुरस्ति सः ॥
अग्नीनां स्तोम इत्यत्र अग्निष्टोमः समासतः ।

ईदग्नेः सोम वरुणयोः । ६ । ३ । २७

सोमेन वरुणेनापि युक्तस्याग्नेरीद्भवेत् ।
द्वन्द्वसमास एवेद—मीत्वं नान्यसमासके ॥
अग्निश्च सोमश्चेति अग्नीषोमौ समासतः ।

इद्वृद्धौ । ६ । ३ । २८

अग्ने रिज्जायते वृद्धिमत्पदे च परे पुनः ।
देवता द्वन्द्व इत्येव कर्माग्निमारुतंश्रुतम् ॥
आग्निवारुणीमनड्वाही मालभेतेतिकथ्यते ।
देवतेऽग्नावरुणौ स्तः कर्मणोऽस्येतिविग्रहः ॥

विष्णौ न । वा

विष्णौ नेति निषेधेन अग्नावैष्णवमेव हि ।

दिवोद्यावा । ६ । ३ । २९

दिवो द्यावा विधीयेत-देवद्वन्द्वपदेपरे ।
द्यावाभूमी सुशोभेते द्यावाक्षामे च सर्वतः ॥

दिवसश्च पृथिव्याम् । ६ । ३ । ३०

दिवस्द्यावापि पक्षेस्यात् समासे पृथिवी परे ।
द्यौश्च पृथिवीचेति विग्रहे द्वन्द्वकारणे ॥
दिवस्पृथिव्यावित्येवं रुत्वं विना प्रयुज्यते ॥
पक्षे द्यावा पृथिव्यौ तु रूपं ब्रूतां निजेच्छया ।

छन्दसि दृष्टानुविधिः ।

द्यावाचिदस्मै पृथियी प्रयोगस्तेनदृश्यते ॥
दिवस्पृथिव्यो र रति मित्यत्र पदकारकाः ।
विसर्गमेव जानन्ति पठन्ति पाठकारकाः ॥

उषासोषसः । ६ । ३ । ३१

आदेशः स्यादुषासा उषसो द्वन्द्ववर्तिनः ।
उषासा सूर्यमित्येवं समाहारे प्रयुज्यते ॥

मातर पितरा वुदीचाम् । ६ । ३ । ३२

उदीचांमतमाश्रित्य मातरपितराविति ।
मतान्तरे भवेन्मातापितराविति वुध्यताम् ॥

द्वन्द्वाच्च्युदष हान्तात् समाहारे । ५ । ४ । १०६

द्वन्द्वाच्चुदषहान्तात् समाहारे तु टच् भवेत् ।
वाक् च त्वक् च वाक्त्वचं त्वक्स्रज मित्थमेव स्यात् ।
शमी दृषदमित्येवं समाहारे च वाक्त्विषम् ।
छत्रश्च उपानहृच्च छत्रोपानहमानय ।
समाहारान्यवोधे तु न प्रावृट्शरदाविह ॥
सुरेशझा कृत श्लोक-सिद्धान्त कौमुदी नवा ।
एतस्यां द्वन्द्वनामाऽयं समासः पूर्णतामगात् ॥

॥ इति द्वन्द्व समासः ॥

# अथैकशेष प्रकरणम् २१

अथैकशेषः—

सरूपाणामेकशेषएकविभक्तौ । १ । २ । ६४

सरूपाणामेकशेष एकविभक्तौ जायते ।
अत्र द्वन्द्वसमासो न भवतीति निबोधत ॥

उदाहरणम्—

बालकश्च बालकश्च बालकौ रूपमुच्यते ।
बालकश्च बालकश्च बालकश्चेति बालकाः ॥

विरूपाणामपि समर्थानाम् । वा ।

तुल्यार्थक — विरूपाणामप्येकः शेषउच्यते ।
वक्रदण्डः कुटिलदण्डो वक्रदण्डाविति भवेत् ॥
पक्षे कुटिलदण्डौ च कस्याप्येकस्य शेषता ॥

वृद्धो यूना तल्लक्षणश्चेदेव विशेषः । १ । २ । ६५

वृद्धो यूना सहोक्तश्चेत् तदा वृद्धोऽत्र शिष्यते ।
प्रत्ययमात्रविशेषो यदि तत्रोपलक्ष्यते ॥
गार्ग्यश्च गार्ग्यायणश्च गार्ग्याविति प्रयुज्यते ।
अपत्याधिकारतोऽन्यत्र लौकिकं गोत्रमुच्यते ।
तस्मादौपगवश्चौपगविश्चात्र न जायते ॥

स्त्री पुंवच्च । १ । २ । ६६

अत्र यूना सहोक्तौ च वृद्धा स्त्री शिष्यते सदा ।
तदर्थश्च भवेत् पुंवत् पश्यतोदाहृतावधः ॥
गार्गी च गार्ग्यायणश्च गर्गास्ते सन्ति ब्राह्मणाः ।
दाक्षी च दाक्षायणश्च दाक्षीरूपं प्रयुज्यते ॥
अस्त्रियामित्यनुवर्तेत–यञञोश्चेति लुग्भवेत् ।

### पुमान् स्त्रिया । १ । २ । ६७

स्त्रिया सहोक्तौ कुत्रापि पुमानेवावशिष्यते ।
विशेषस्तल्लक्षण एव चेत्तदाऽयं प्रवर्तते ॥
हंसी च हंसश्चेत्यत्र हंसौ रूपं प्रयुज्यते ।

### भ्रातृपुत्रौ स्वसृदुहितृभ्याम् । १ । २ । ६८

स्वसृ दुहितृशब्दाभ्यां द्वन्द्वश्चेद् भ्रातृ पुत्रयोः ।
भ्रातृपुत्रौ तु शिष्येते प्रयोगो दृश्यतामधः ॥
भ्राता च स्वसा चेति–भ्रातराविति कथ्यते ।
पुत्रश्च दुहिताचात्र पुत्रौ रूपं प्रयुज्यताम् ॥

### नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ।१।२।६९

अक्लीवेन सहोक्तौ तु क्लीवशब्दोऽत्र शिष्यते ।
विकल्पेनैकवद्भावस्तल्लक्षण विशेषणे ॥
शुक्लश्च शुक्ला च शुक्लञ्च शुक्लं,
शुक्लानि वा वदेत् ॥

### पिता मात्रा । १ । २ । ७०

मात्रा सह पिताशब्दो द्वन्द्वे यदि समस्यते ।
पितृशब्दस्य शेषो वा उभयोरर्थं बोधने ॥
स्यान्माता च पिता च–पितरौ कथ्यते तदा ।
पक्षे च मातापितरा वित्यपि कथ्यतां पुनः ॥

### श्वशुरः श्वश्र्वा । १ । २ । ७१

समासे सह श्वश्र्वाऽत्रश्वशुरः शिष्यतेऽथ वा ।
श्वश्रू च श्वशुरश्चेति श्वशुरौ रूपमुच्यते ॥
पक्षे तु श्वश्रूश्वशुरौ प्रयोगोऽपि विधीयते ।

### त्यदादीनि सर्वैर्नित्यम् । १ । २ । ७२

अन्यैः सह समासे च नित्यं त्यदादि शिष्यते ।
त्यदादीनां सहोक्तौ तु यत्परं तस्य शेषता ॥

स च सुवासचन्द्रश्च तौ प्रयोगोऽत्र जायते।
स च यश्चेति द्वन्द्वेऽत्र यौ प्रयोगोभविष्यति ॥
भाष्यकारमतेनात्र—तौ इत्यपि प्रयुज्यताम् ।
त्यदादीनां शेषकार्ये पुंनपुंसकशब्दतः ।
कर्तव्यं लिङ्गवचनं सा च देवश्च ताविति ॥
तच्च बालश्च कन्या च तानि तत्र वदेज्जनः ।
पुंनपुंसकयोः शेषे परत्वात्स्यान्नपुंसकम् ॥
तच्च भवदत्तश्च ते इति संप्रयुज्यते ॥
अद्वन्द्वतत्पुरुषविशेषणामिति वक्तव्यम् । वा
द्वन्द्वे तथा च तत्पुरुषे नाऽयं नियमउच्यते ।
इयं कुक्कुटमयूर्यौ मयूरीकुक्कुटाविमौ ॥
पिप्पल्यर्धश्च तत्पश्चादर्धं पिप्पलीति विग्रहे ।
रूपं स्यादर्धपिप्पल्यौ सावधानं प्रयुज्यताम् ॥

ग्रामपशुसङ्घेष्वतरुणेषु स्त्री ।१।२।७३

अतरुणार्थकग्राम्यपशु सङ्घेषु दृश्यते ।
स्त्रियाः शेष इमे च इमाश्च अत्र गाव इमाः ॥

अनेकशफेष्विति वाच्यम् । वा ।

अनेकशफवत्स्वेव नियमोऽयं प्रवर्तते ।
अश्वा इमे च तस्मान्नैकशेषः स्त्रिया इह ॥
एकशेषेकृते प्रायः क्वचिद् द्वन्द्वो न इष्यते ।
सुवन्तानामनेकानामभावस्तेन हेतुना ॥
शिरसी च शिरांसि शब्दे नान्तोदात्तो नचैकवत् ।
पन्थानावादिशब्दे समासान्तो न जायते ॥

॥ इत्येकशेषप्रकरणम् ॥

# अथ सर्वसमासशेषप्रकरणम्

कृ[१]त्त[२]द्धितसमा[३]साश्च चतुर्थश्चैक[४]शेषइति ।
[५]सनाद्यन्ता धातुरूपाः वृत्तयः पञ्च सन्ति वै ॥

वृत्तिलक्षणं किमिति प्रश्ने—

प्रत्ययस्यान्तर्भावाद्वा परपदार्थसंग्रहात् ।
विशिष्टोऽर्थः परार्थोऽस्ति वृत्तिस्तस्यैव बोधिका ॥

विग्रहलक्षणम्—

वृत्त्यर्थस्यावबोधकं वाक्यं विग्रह उच्यते ।
लौकिकोऽलौकिकश्चेतिद्विविधः स प्रदर्श्यते ॥

लौकिकविग्रहदर्शनम्—

परिनिष्ठितसाधुशब्दः प्रयोगार्हस्तु लौकिकः ।
राज्ञः पुरुषइत्येवं हस्तेन ताडितो यथा ॥

अलौकिकविग्रहस्तु—

अलौकिक विग्रहस्तु प्रयोगानर्हं उच्यते ।
राजन् अस् पुरुष सु हस्त आ ताडित सु इति ।

नित्यसमासलक्षणम्—

लौकिको विग्रहो नैव नित्यः समासः स भवेत् ।
अस्वपदविग्रहो वा नित्यसमासलक्षणम् ॥

समासः पञ्चधा भवति—

चतुर्विधः समासोऽयं प्रायोवादः प्रकीर्तितः ।
सह सुपा समासस्तु-गणनयाऽधिको यतः ॥

सर्वेषां क्रमशोलक्षणम्—

पूर्व–पदार्थ–प्रधानस्त्वव्ययीभावइष्यते ।
उत्तरपदार्थप्रधानस्तत्पुरुषः स उच्यते ॥

अन्यपदार्थप्राधान्ये वहुव्रीहिः प्रकीर्तितः ।
उभयपदार्थमुख्यश्च द्वद्वो भवति नामतः ।।
उपर्युक्तस्तु बादोऽयं प्रायोऽभिप्रायकः खलु ।
यस्मादेतेषु वादेषु व्यभिचारः क्वचित्क्वचित् ।।

व्यभिचार दर्शनम्—

पूर्वपदार्थ प्रधानः स्याद—व्ययीभाव इति यद्भणितम् ।
एतत्किल व्यभिचरति सूपप्रत्युन्मत्तगङ्गमादिषु ।।
उत्तरपदप्रधानस्तत्पुरुषो भवतीति लक्षणमपि ।
अतिमालश्चादिकर्मतत्पुरुषे व्यभिचरत्येव ।।
अन्य प्रदार्थ प्रधानो बहुव्रीहिरितिलक्षणं कथितम् ।
द्वित्रा आदि प्रयोगे न संघटते चिन्तनीयमेव ।।
उभय पदार्थ प्रधानो द्वन्द्वोऽस्तीति प्रायोवाद एव ।
दन्तोष्ठमिति प्रयोगे न संघटते तद्विचारयेत् ।।

तत्पुरुषविशेषः स्यात् कर्मधारयनामवान् ।
तद्विशेषो द्विगुः ख्यातस्तत्पुरुषान्नातिरिच्यते ।।
द्वन्द्वो बहुव्रीहिश्चापि दृश्यते द्विपदाधिकः ।
तत्पुरुषस्तु कुत्रापि द्विपदाधिक उच्यते ।।

रूपान्तरेणसमासभेददर्शनम्—

सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा ।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ।।
प्रथमं राजपुरुषो द्वितीयं पर्यभूषयत् ।
कुम्भकारः कटप्रूश्च पिवतखादता ततः ।।
कृन्त विवक्षणेनापि स्यादुदाहरणं क्रमात् ।
कृन्त विवक्षणं यस्यां क्रियायां सा क्रिया स्मृता ।
एहीडाद्यन्यपदार्थे मयूरव्यंसकादिषु ।।
पाठेन साध्यते सर्वं गणसूत्रप्रदर्शितम् ।।

अथ न्यायमतमाश्रित्य विचारः—

स चायं षड्विधः कर्मधारयादि प्रभेदतः ।
यश्चोपपदसंज्ञोऽन्यस्तेनासौ सप्तधा मतः ।। श. श. प्र. ।

पूर्वंमध्यान्त–सर्वान्यपद प्राधान्यतः पुनः ।
प्राच्यैः पञ्चविधः प्रोक्तः समासो वाग्भटादिभिः ।। श. प्र. ।

जयादित्यस्तु—

नित्यानित्यप्रभेदेन समासो द्विविधो मतः ।

स्पष्टीकरणम्—

प्राप्तजायार्द्धं पिप्पली पूर्वकायादिकस्तत्पुरुषे पूर्वपदप्रधान-त्वम् । उपकुम्भं पुरुषसिंहादौ कर्मधारये च पूर्वपदप्रधानत्वम् ।

क्वचिन्मध्यमपदप्रधानो यथा—

पटानधिकरण प्रतियोगिताऽनवच्छेदकेत्यादितत्पुरुषे । पटस्य न अधिकरणमिति मध्यमपदस्य विशेष्यत्वमस्ति । कश्चिदन्त्य पदार्थं धर्मिकधीहेतुत्वादन्त्यपदप्रधानो यथा राजपुरुष इति तत्पुषे, नीलोत्पलमादि कर्मधारये च द्विगार्ग्यमित्यव्ययीभावे ।

कश्चित्सर्वपदप्रधानः—इतरेतरयोगः, द्वन्द्वमात्रं वा । कश्चिदन्यपदार्थं प्रधानो बहुव्रीहिः, खलेयवा इत्याद्यव्ययीभावश्च तदेवं पञ्चभेदानादाय पञ्चविधत्वमुक्तं प्राच्यैरिति भावः ।।

।। इति सर्व समास शेषप्रकरणम् ।।

# अथ समासान्त प्रकरणम्



ऋक्पूरब्धूः पथामानक्षे । ५ । ४ । ७४

ऋक्पूरब्धूः पथामेषा मन्ते अप्रत्ययोभवेत् ।
अक्षे यत्रास्ति धूःशब्द स्तत्र नायं प्रवर्तते ॥

उदाहरणम्—

अर्धर्चो विमलापश्च विष्णुपुरं ततः परम् ।
रम्यपथो राजपथः सिद्धचेदप्रत्यये सति ॥

अत्र-अर्द्धं नपुंसकमिति समासः । अर्धर्चाः पुंसि चेति पुंस्त्वम् ।

राज्ञां धूः राजधुरा स्याद् अक्षधूरिह न भवेत् ।
अध्येतरि च तात्पर्ये स्यातामनृचवह्वृचौ ॥
अनृक् साम वह् वृक् सूक्त मित्यादौ न हि प्रत्ययः ॥

द्व्यन्तरुपसर्गेभ्योऽप इत् । ६ । ३ । ९७

द्व्यन्तर्भ्यामुपसर्गेभ्य परस्यापस्य ईद्भवेत् ।
अत्राप इत्यदन्तं हि समासान्तयुतं पदम् ॥
षष्ठ्यर्थे प्रथमा ज्ञेया अर्थः षष्ठ्या भवेदिह ॥
द्वीपं स्यादन्तरीपश्च प्रतीपश्च समीपमिति ॥
द्विर्गता आपो यस्मिन् इति विग्रहमत्र कुरु ।
अन्तर्गताः प्रतिकूलाः सङ्गता आप इत्यपि ॥
समापो देवयजनं समशब्दोऽत्र वर्तते ।
तस्यान्नेत्वं भवत्यत्र स्वप् स्वपी तु निषेधतः ॥

अवर्णाद्वा । वा

अवर्णान्तोपसर्गात्तु परस्यापश्च जायते ।
ईदादेशो विकल्पेन प्रेपं प्रापं द्वयं ततः ॥

ऊदनोर्देशे । ६ । ३ । ९८

अनोः परस्य देशार्थे ऊदपश्च विधीयते ।
अनूपो देशनामास्ति आपोयस्मिन्ननुगताः ॥
जलप्रायमनूपं स्यात् कोषस्थवचनं स्मरेत् ।

अच प्रत्यन्ववपूर्वात् सामलोम्नः । ५ । ४ । ७५

प्रत्यन्वव पूर्वकस्य सामलोमपदस्य च ।
अच् प्रत्ययो भवत्येव प्रतिसामं प्रयुज्यते ।
अनुसाम मवसामं प्रतिलोमं विरोधि यत् ॥
अनुलोम मवलोमं प्रयुञ्जीत विचार्य वै ।
स्यादेतेष्वव्ययीभावः प्रादिर्वा स्याद्बहुव्रीहिः ॥

कृष्णोदक् पाण्डु संख्या पूर्वाया भूमेरजिष्यते । वा

कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरिह ।
अच् प्रत्ययस्तु नित्यं स्यात् कृष्णभूमः प्रयुज्यते ।
उदग्भूमः पाण्डुभूमः द्विभूमः स्यात् त्रिभूम इति ॥

संख्याया नदीगोदावरीभ्याञ्च । वा

संख्यापूर्वानदी गोदावरी यत्रास्ति तत्स्थले ।
अच् प्रत्ययस्ततः सप्तनदं गोदावरं वदेत् ॥

अक्ष्णोऽदर्शनात् । ५ । ४ । ७६

अक्ष्णोऽदर्शनादच् स्यात् गवाक्षस्तेन सिद्ध्यति ।
गौःकिरणोऽस्ति रन्ध्रोऽक्षि गवामक्षीव विग्रहः ।

अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मन-साक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिव-सरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहो-क्षवृद्धोक्षोपशुनगोष्ठश्वाः । ५ । ४ । ७७

अचतुरादिशब्दा ये पञ्चविंशतिसंख्यकाः ।
एषां निपातनात् सिद्धिरचि च प्रत्यये कृते ॥

उदाहरणमेतेषां सविग्रहं प्रदर्श्यते ।
अविद्यमानानि चत्वारि यत्र सोऽचतुरो भवेत् ।
विगताः सन्ति चत्वारो यत्र विचतुरः स च ॥

शोभनाः सन्ति चत्वारो यत्र सुचतुराश्च ते ।
तत्पुरुषे त्वचत्वारो विचत्वारो भवन्ति च ॥

त्र्युपाभ्यां चतुरोऽजिष्यते । वा

चतुरोऽच् प्रत्ययः स्यात् त्र्युपशब्दपरादपि ।
त्रयश्चत्वार इत्येवं त्रिचतुराः बहुव्रीहौ ।
चतुर्णां सन्ति समीपे उपचतुरास्ते स्मृताः ॥

स्त्रीपुंसौ धेन्वनडुहौ ऋक्सामे द्वन्द्वतो भवेत् ।
वाङ्मनसे अक्षिभ्रुवं दारगवं तथैव तु ॥

उर्वष्ठीवं पदष्ठीवमच्प्रत्यये निपातनात् ।
नक्तन्दिवं रात्रिन्दिवमहर्दिवमेकादश ॥

यथारूपं निपातेन द्वन्द्वं कृत्वैव साधयेत् ।
सरसजमव्ययीभावे चाकाले सहस्य सः ॥

बहुव्रीहौ तु सरजं पङ्कजं पुष्पमुच्यते ।
निश्चितं श्रेय इत्यत्र तत्पुरुषो निःश्रेयसम् ॥

निश्चितं श्रेयो येन स निःश्रेयान् बहुव्रीहिः ।
द्व्यायुषं त्र्यायुषं रूपं समासे च द्विगौ भवेत् ।
ऋक् च यजुश्च विग्रहे ऋक्यजुषं वदेत् सदा ॥
जातोक्षः स्यान्महोक्षश्च वृद्धोक्षः कर्मधारयात् ।
शुनः समीपमुपशुनं रूपमेतट्टिलोपतः ॥
गोष्ठे श्वा गोष्ठश्वः स्यात् गोष्ठश्वाभिन्नविग्रहे ॥

ब्रह्महस्तिभ्यां वर्चसः । ५ । ४ । ७८

ब्रह्महस्तिद्वयाभ्याञ्च परस्य वर्चसोऽज् भवेत् ।
ब्रह्मणो वर्चं इत्यत्र ब्रह्मवर्चसमुच्यते ॥
हस्तिनो वर्च इत्यत्र हस्तिवर्चसमिष्यते ।

पल्यराजभ्याञ्चेति वक्तव्यम् । वा

वर्चसोऽच्प्रत्ययः स्यात् पल्यराजपरादपि ।
पल्यवर्चस मित्येवं राजवर्चसमिष्यते ॥

अवसमन्धेभ्यस्तमसः । ५ । ४ । ७९

अवसमन्ध शब्देभ्यः परकात्तमसोऽज् भवेत् ।
अवहीनं सन्ततञ्च तम इत्यत्र विग्रहे ।
महातमोऽवतमसं संतमसं प्रसिद्ध्यति ॥
अन्धं तमोऽन्धतमसं साध्यतामचि प्रत्यये ।

श्वसो वसीयश्श्रेयसः । ५ । ४ । ८०

श्वसो वसीयश्श्रेयसः क्रियतेऽच् प्रत्ययो यदा ।
श्वोवसीयसमुत्कर्षे श्वः श्रेयसमाशिषि ॥

अन्ववतप्ताद्रहसः । ५ । ४ । ८१

अन्ववतप्ताद्रहसः क्रियतेऽच् प्रत्ययः सदा ।
अनुगतं रहो यस्मिन्ननुरहसमुच्यते ॥

अनुगतमनुहीनं रहोऽन्दवरहसं भवेत् ॥
तप्तश्च तद्रहश्चेति तप्तरहसमिष्यते ।

प्रतेरुरसः सप्तमीस्थात् । ५ । ४ । ८२

प्रतिशब्दपरादुरसो भवेदच् सप्तमीस्थितात् ।
विभक्त्यर्थेऽव्ययीभावः प्रत्युरसं हृदि स्थितम् ॥

अनुगवमायामे । ५ । ४ । ८३

आयामेऽनुगवं शब्दो यानार्थे च निपातितः ।
यस्य विभाषासूत्रेण समासोऽत्र विधीयते ॥

द्विस्तावा त्रिस्तावा वेदिः । ५ । ४ । ८४

द्विस्तावा त्रिस्तावा वेदिरच् प्रत्ययटिलोपतः ।
निपात्यतेऽश्वमेधादौ वेद्यर्थे च विशेषतः ॥

उपसर्गादध्वनः । ५ । ४ । ८५

उपसर्गात्परादत्र अध्वनोऽच्च विधीयते ।
प्रगतोऽध्वानमित्यत्र प्राध्वो रथः प्रसिद्ध्यति ॥

न पूजनात् । ५ । ४ । ६९

पूजनार्थात्समासान्तः प्रत्ययो न विधीयते ।
सुराजा शोभनो राजा अतिराजाऽपि साध्यताम् ॥
राजाहस्सखिभ्यष्टच् जायते नात्र बुध्यताम् ।

स्वतिभ्यामेव । वा०

स्वतिभ्यामेव शब्दाभ्यां समासान्तो निषिध्यते ॥
तस्मात् परमराजेऽत्र समासान्तश्च जायते ।
पूजनार्थकतो भिन्ने रूपमतिगवो भवेत् ।
सुसक्तः स्वक्ष इत्यादौ समासान्तो न वाध्यते ॥
बहुव्रीहौ च सक्थ्यक्ष्णो रित्यतः प्राक् निषेधतः ॥

किमः क्षेपे । ५ । ४ । ७०

निन्दायां यत्र किं शब्दः समासान्तो न तत्परात् ।
किं राजा किं सखेत्यादौ कुत्सितार्थोऽवगम्यते ॥

कस्य राजाऽथ किम् राजा किंराजश्च भवेदिह ।
कुत्सिता गौश्च किंगौः स्यात् किंगवो भिन्नविग्रहे ।।

नञस्तत्पुरुषात् । ५ । ४ । ७१

नञस्तत्पुरुषान्नैव समासान्तश्च प्रत्ययः ।
न राजा अराजा स्यादसखा न सखा भवेत् ।
अधुरं शकटश्चात्र बहुव्रीहि विधीयते ।

पथो विभाषा । ५ । ४ । ७२

नञ् पूर्वाच्च पथो वा स्यात् समासान्तोऽपथमिति ।
पक्षेऽपन्था भवेद्रूपं तत्पुरुषेऽयं प्रवर्तते ।।
अपथो देश इत्यत्र बहुव्रीहि विधीयते ।
अपथं वा वर्ततेऽत्र नेदं सूत्रं प्रवर्तते ।।

।। इति समासान्तप्रकरणम् ।।



# अलुक्समासप्रकरणम्

अलुगुत्तरपदे । ६ । ३ । १

अलुगित्यधिकारोऽस्ति प्रागानङः समासके ।
उत्तरपदाधिकारस्त्वा—पादमनुगच्छति ॥

अलुक्समासप्रयोजनम्—

ऐकपद्यं तथा ऐकस्वर्यं यथा भवेदिह ।
विशेषणस्य योगो न तदर्थमलुगुच्यते ॥
सुपो धातुरिति सूत्रात् प्राप्तो लुक् च निवार्यते ।

पञ्चम्याः स्तोकादिभ्यः । ६ । ३ । २

स्तोकादिभ्यश्च पञ्चम्या अलुक् स्यादुत्तरे पदे ।
स्तोकान्मुक्तः कृच्छ्रान्मुक्तो दूरादागत इत्यपि ।
अन्तिकादागतोऽभ्याशादागतश्चापि कथ्यते ॥

ब्राह्मणाच्छंसिन उपसंख्यानम् । वा०

ब्राह्मणाच्छंसिनि शब्दे पञ्चम्या अलुगस्ति वै ।
ब्राह्मणे विहितान्येव शस्त्राणि उपचारतः ॥
ब्राह्मणानि भवन्तीह तानि शंसति विग्रहे ।
रूपं स्याद् ब्राह्मणाच्छंसी ऋत्विग्विशेषबोधने ॥
पञ्चम्यत्र द्वितीयार्थे उपसंख्यानतः कृता ॥

ओजः सहोऽम्भस्तमसस्तृतीयायाः । ६ । ३ । ३

ओजसादिपरायाश्च तृतीयाया न लुग् भवेत् ।
ओजसाकृत मम्भसा तपसाकृतमुच्यताम् ॥

अञ्जस उपसंख्यानम् । वा०

अञ्जसोऽपि परा जाता तृतीया नैव लुप्यति ।
अञ्जसाकृत मस्यार्थ आर्जवेन कृतमिति ॥
सहसा कृतमित्येत दविचारितकर्मणि ।

पूंसानुजो जनुषान्ध इति च । वा

पुंसानुजो जनुषान्धः सिद्धचेदलुक् विधानतः ।
येन केन प्रकारेण समासोऽत्र विधीयते ॥
यस्यानुजः पुमानस्ति स पुंसाऽनुज उच्यते ।
जात्यन्धो जनुषान्धः स्याल्लोपश्चात्र निषिध्यते ॥

मनसः संज्ञायाम् । ६ । ३ । ४

संज्ञायान्तु मनश्शब्दात् तृतीयाया न लुग् भवेत् ।
देव्यस्ति मनसागुप्ता-प्रसिद्धा लोक शास्त्रयोः ।
मनसा सङ्गताप्यस्ति दत्तापरापि वर्तते ॥

अज्ञायिनि च । ६ । ३ । ५

आज्ञायिनि परे लुक् च तृतीयाया न जायते ।
रूपं स्यान्मनसाऽज्ञायी मनसैव प्रवर्तकः ॥

आत्मनश्च । ६ । ३ । ६

पूरण इति वक्तव्यम् । वा ।
आत्मनश्च तृतीयाया लुङ् न स्यात् पूरणे परे ।
आत्मना पञ्चमो रूप मात्मकृतोऽत्र लुग् भवेत् ॥
तृतीयेति पृथग् योगं कृत्वा समाससाधनम् ।

वैयाकरणाख्यायां चतुर्थ्याः । ६ । ३ । ७

व्याकरणस्य संज्ञायां चतुर्थ्या लुग् भवेन्नहि ।
केवल मात्मनश्शब्दाच्चतुर्थ्या लुग् निवार्यते ।
तस्मात् स्यादात्मनेभाषा रूपं स्यादात्मनेपदम् ।

परस्य च । ६ । ३ । ८

संज्ञार्थे परशब्दाच्च चतुर्थ्या लुग् न जायते ।
परस्मैपदमित्येव परस्मैभाषा इति ॥

हलदन्तात् सप्तम्याः संज्ञायाम् । ६ । ३ । ९

हलदन्तात्परायाश्च सप्तम्या लुग् न जायते ।
संज्ञायामलुगस्तीदं त्वचिसारस्ततोऽभवत् ॥

## गवियुधिभ्यां स्थिरः । ८ । ३ । ९५

गवि युधिपरस्यात्र स्थिरस्य सस्य षो भवेत् ।
संज्ञायाश्च समासेन गविष्ठिरो युधिष्ठिरः ॥
अरण्ये तिलकाः सर्वे संज्ञायायाश्च समासतः ।

## हृद्द्युभ्याश्च । वा

हृद्द्युभ्यां वार्तिकेन सप्तम्या लुग् भवेन्नहि ।
हृदिस्पृक् च दिविस्पृक् च रूपं तस्मात् प्रयुज्यते ॥

## कारनाम्नि च प्राचां हलादौ । ६ । ३ । १०

प्राचां देशे कारनाम्नि हलादावुत्तरे परे ।
हलदन्ताच्च सप्तम्या अलुक् कार्यं विधीयते ॥

मुकुटे कार्षापणं स्याद् दृषदि माषकस्तथा ।
राजग्राह्यः करः कारस्तद्बोधे च पदद्वयम् ॥
सूपे शाणः प्रयोगोऽपि हले द्विपदिकादिरपि ।
पूर्वेणैव च संसिद्धे नियमार्थमिदं कृतम् ॥

कारनाम्नि तथा प्राचां हलादावेव जायते ।
कारनाम्नश्च भिन्नेऽर्थे अभ्याहितपशुर्भवेत् ॥
कारादन्यस्य देयस्य नामेदं वर्तते इदम् ।
प्राग्भ्यो भिन्ने यूथपशुरत्रलुग् जायते सदा ॥
हलादिभिन्नेऽविकटो रण एवं प्रयुज्यते ।
हलदन्ताच्च भिन्ने लुक् नदीदोहः पदं ततः ॥

## मध्याद्गुरौ । ६ । ३ । ११

मध्यादन्ताच्च सप्तम्या गुरौ परे भवेदलुक् ।
मध्ये गुरुः प्रयोगोऽयमन्तेगुरुश्च सिद्ध्यति ॥

## अमूर्धमस्तकात् स्वाङ्गादकामे । ६ । ३ । १२

अमूर्धमस्तकात् स्वाङ्गात् परास्ति सप्तमी तदा ।
तस्या लुक् क्रियते नात्र कामशब्दः परो न चेत् ॥
कण्ठेकालो ह्युरसिलोमा उदरेमणि रिष्यते ॥

बन्धे च विभाषा । ६ । ३ । १३

हलदन्ताच्च सप्तम्या अलुग् वन्धे परेऽत्र वा ।
हस्ते बन्धो हस्तबन्धः प्रयुज्यते बहुव्रीहौ ॥

तत्पुरुषे कृति वहुलम् । ६ । ३ । १४

तत्पुरुषे च सप्तम्या अलुक् स्यात् कृति प्रत्यये ।
स्तम्बेरमो गजः प्रोक्तः पिशुनः स्यात् कर्णेजपः ॥

क्वचिन्न । वा

क्वचिदलुक् भवेन्नात्र कुरुचरस्ततोऽभवत् ।

प्रावृट् शरत्कालदिवां जे । ६ । ३ । १५

प्रावृट् शरत्कालदिवां तत्पुरुषे भवेदलुक् ।
सप्तम्या जे परे वृत्तौ प्रावृषिजः शरदिजः ।
कालेजो दिविजश्चायं पूर्वसिद्धस्य विस्तरः ॥

विभाषा वर्षक्षरशरवरात् । ६ । ३ । १६

सप्तम्या विभाषाऽलुक् वर्षक्षरवरादितः ।
जपरे विषयश्चायं पूर्ववदेव वर्तते ॥

उदाहरणम्—

वर्षेजो वर्षजः प्रोक्तः क्षरेजः क्षरजस्तथा ।
शरेजः शरजश्चैवं वरेजो वरजः पुनः ॥

घकालतनेषु कालनाम्नः । ६ । ३ । १७

कालशब्दे परे चैवं घतनप्रत्यये द्वये ।
काल नाम्नः परायाश्च सप्तम्या लुग् विकल्पतः ॥
घे काले च तने पश्चात् वर्तमानेषु नान्यथा ।
तरप् तमब् द्वयस्यैव घपदेनात्र वोधनम् ॥
उत्तिष्ठ पूर्वाह्णेतरे पूर्वाह्णतरेऽथवा ।
जागर्यात् पूर्वाह्णेतमे पूर्वाह्णतमे सदा ॥
पूर्वाह्णकाले पूर्वाह्णे काले वा स्नानमाचरेत् ।

अत्र विशेषः—

अह्नः पूर्वमिति विग्रहे पूर्वापरेत्यादिना समासे राजाहः सखिभ्यष्टजितिटचि कृते अह्नोऽह्न एतेभ्य इत्यह्नादेशे अह्नोऽदन्तादिति णत्वे च कृते अतिशयेन पूर्वाह्णे इति पूर्वाह्णेतरे पूर्वाह्णेतमेऽत्र स्वार्थे तरप् तमप् प्रत्ययः। प्रातिपदिकात् सप्तम्यर्थं दर्शयितुं प्रवर्तितो विद्यते विषयः।

शयवासवासिष्वकालात्। ६। ३। १८

शयशब्दे तथा वासशब्दे वासिपरेऽथवा।
सप्तम्याश्च अलुग् वा स्यात् कालशब्दपरान्नहि॥

उदाहरणम्—

खेशयः खशयश्चैव ग्रामे वासः प्रयुज्यते।
ग्रामे वासी ग्रामवासी प्रयोगः साध्यतामिह॥
हलदन्तादिति ज्ञेयं तस्माद् भूमिशयोऽत्र लुक्।

अपोयोनियन्मतुषु। वा०

योनि शब्दे परे चैवं यन्मतुप्प्रत्यये परे।
अपः परायाः सप्तम्या वृत्तिमध्ये न लुग् भवेत्॥
अप्सु योनि स्तथा अप्सु भवोऽप्सव्य इष्यते।
अप्सव्ये दिगादित्वाद् यति कृते च ओर्गुणः॥
वान्तादेशेन सिद्धिः स्यादप्सव्यपदस्य च।
आज्यभागा वप्सुमन्तावितं भवेदलुक्कृते॥

नेन्सिद्धबध्नातिषु च। ६। ३। १९।

अलुङ् न जायतेऽवश्यमिन्नन्ते सिद्धबन्धयोः।
तस्मात् स्थण्डिलशायी स्यात् सांकाश्यसिद्ध इत्यपि॥
चक्रबन्ध श्चारबद्धः सप्तम्या लुग् भवेदिह।

अत्र बन्ध धातुः क्र्यादिस्तस्मात् क्तप्रत्यये कृते ततोऽनिदितामिति नलोपेन बद्धः सिद्ध्यति।

स्थे च भाषायाम् । ६ । ३ । २०

स्थपरे लुग् भवत्येव भाषायामिति बुध्यताम् ।
समस्थो विषमस्थश्च तस्मादेव प्रयुज्यते ।।
"कृष्णोस्याखरेष्ठ"स्तु भाषातो भिन्नमस्ति वै ।

षष्ठ्या आक्रोशे । ६ । ३ । २१

आक्रोशार्थे न षष्ठ्या लुक् चौरस्य कुलमुच्यते ।
वृषलस्य कुलश्चादि साध्यतां पाठकैरिह ।।

वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरे परे ।

विशेषार्थे समासश्चेद् युक्तिदण्डहरे परे ।
वाग्दिक्पश्यत् परायाश्च षष्ठ्या लुङ्न जायते ।।
वाचोयुक्ति दिशोदण्डः पश्यतोहर इष्यते ।

आयुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च । वा

एते त्रयो निपात्यन्ते षष्ठ्या अलुग् विधानतः ।
अमुष्यापत्यमित्यत्र आमुष्यायण इष्यते ।।
फक् प्रत्ययो नडादित्वाज्जायतेऽस्य च साधने ।
अमुष्य पुत्रस्यभाव आमुष्यपुत्रिका भवेत् ।।
मनोज्ञादि गणत्वाद्वुञ् जायतेऽस्य च साधने ।
एवमामुष्यकुलिका जायतेऽलुग् विधानतः ।।

देवानां प्रिय इति मूर्खे । वा

स्याद् देवानांप्रियो मूर्खे षष्ठ्या अलुग् विधानतः ।
देवप्रियस्तु भिन्नार्थे ब्रह्मज्ञानान्विते जने ।।
हेमचन्द्रस्तु मूर्खेऽपि समासमनुमन्यते ।

शेपपुच्छलांगुलेषु शुनः । वा ।

शेपे पुच्छे च लांगूले शुनः षष्ठ्या अलुग् भवेत् ।
शुनः शेपः शुनः पुच्छः शुनोलांगूल उच्यताम् ।।

दिवश्च दासे । वा

दासे परे दिवश्चात्र षष्ठ्या अलुग् विधीयते ।
दिवो दासः प्रयोगोऽयं तस्मादेव प्रसिद्ध्यति ॥

पुत्रेऽन्यतरस्याम् । ६ । ३ । २२

पुत्रे परे विकल्पेन षष्ठ्या अलुक् च निन्दिते ।
दास्याः पुत्रो दासीपुत्रो निन्दायाश्च प्रयुज्यते ॥
वृषल्याः वृषलीपुत्रः प्रयोगोऽलुग् विकल्पतः ।

ऋतो विद्यायोनिसम्बन्धेभ्यः । ६ । ३ । २३

विद्यायोन्योश्च सम्बन्धे ऋदन्तो यत्र वर्त्तते ।
तत्र षष्ठ्या अलुक्कार्यं उत्तरे च पदे परे ॥
अयं होतुरन्तेवासी होतुः पुत्रस्तु स जनः ।
पितुरन्तेवासी सोऽयं पितुः पुत्रः समागतः ॥

विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम् । वा

तस्माद्धोतृधनं वाक्ये षष्ठ्या लुग् जायते सदा ।
सम्बन्धोविद्यया नात्र वृत्तिकार विचारतः ॥

विभाषा स्वसृपत्योः । ६ । ३ । २४

ऋदन्तात् स्यादलुक्षष्ठ्या स्वसृपतिपरेऽश्च वा ।

मातुः पितुर्भ्यामन्यतरस्याम् । ८ । ३ । ८५

आभ्यां स्वसुः सकारस्य षत्वं वा जायते खलु ।
मातुःष्वसा मातुःस्वसा पितुः ष्वसा पितुःस्वसा ॥
लुक्पक्षे भवेन्नित्यं षत्वमत्र समासके ।

मातृपितृभ्यां स्वसा । ८ । ३ । ८४

आभ्यां परस्य षत्वं स्यात् स्वसुःसस्य समासके ।
मातृष्वसा पितृष्वसा नासमासेऽत्र षो भवेत् ॥

॥ इत्यलुक्समासप्रकरणम् ॥

# अथ समासाश्रयविधिप्रकरणम्

समासे सति यत्किञ्चित् कार्यं ह्रस्वादिकं भवेत् ।
समासाश्रयनाम्नैव विधिरत्र प्रकीर्तितः ।।

घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः । ६ । ३ । ४३

घ रूप कल्प तद्धिते परे ह्रस्वः स्त्रिया भवेत् ।
चेल गोत्र मत हत परे च ह्रस्व इष्यते ।।
ह्रस्वो भवति पूर्वस्य उक्तपुंस्कस्त्रियाः सदा ।
रूपं स्याद् ब्राह्मणितरा तथैव ब्राह्मणितमा ।।
उच्यते ब्राह्मणिरूपा कल्पा चेली ब्रुवाग्निका ।
निन्दिता ब्राह्मणिगोत्रा माता हता युता च सा ।।
ङ्यन्तस्यैव भवेद्ध्रस्वस्तस्माद् दत्तातरा भवेत् ।
अयं भाषितपुंस्को न आमलकी कुवलीतरा ।।

नद्याः शेषस्यान्यतरस्याम् । ६ । ३ । ४४

अङ्यन्तनद्या एकाचो ङ्यन्तशब्दस्य घादिषु ।
ह्रस्वः कार्यो विकल्पेन ब्रह्मबन्धुतरा पुनः ।
ब्रह्मबन्धूतरा पक्षे स्त्रितरा स्त्रीतराऽपि च ।।

कृन्नद्या न । वा

कृन्नद्या न भवेद्ध्रस्वस्तस्माल्लक्ष्मीतरा भवेत् ।

उगितश्च । ६ । ३ । ४५

नदी याउगितः पश्चात् तदन्तस्य च घादिषु ।
परेषु ह्रस्व इष्येत विकल्पेनेति बुध्यताम् ।।
विदुषितरा प्रयोगः पक्षे विद्वत्तरा भवेत् ।
ह्रस्वस्याभावपक्षेऽत्र पुंवत् स्यात्तसिलादिषु ।।

हृदयस्य हृल्लेख यदण्लासेषु । ६ । ३ । ५०

हृदयस्य च हृद्भावो लेखे लासे परे पुनः ।
अणि यति प्रत्ययेऽपि परे हृद्भाव इष्यते ॥
हृल्लेखश्च भवेद्रूपं हृल्लास इत्यपि भवेत् ।
हार्दं हृद्यं भवेद्रूपं हृदादेशे कृते सति ॥

अत्र विशेषः—

लेखेत्यणन्तस्य ग्रहणं घजन्ते तु हृदयलेख इत्येव स्यात् । अत्र लेख ग्रहणमेव ज्ञापकं भवति यदुत्तरपदाधिकारे तदन्तविधिर्नास्तीति । उपर्युक्तप्रयोगे हृदयं लिखतीति विग्रहः । एवं हृदयस्य प्रियं हृद्यं हृदयस्येदं हार्दमत्राण् । हृदयस्य लास इति च विग्रहो ज्ञेयः ।

वा शोक ष्यञ् रोगेषु । ६ । ३ । ५१

शोके रोगे परे चैवं ष्यञ् प्रत्ययपरेऽपि च ।
हृदयस्य च हृद्भावो विकल्पेनैव जायते ॥
हृच्छोको हृदयशोकः सौहार्दं सौहृदयकम् ।
हृद्रोगो हृदयरोगः प्रयोगश्च विधीयताम् ॥

पादस्य पदाज्यातिगोपहतेषु । ६ । ३ । ५२

पदो भवति पादस्यज्यातिगोपहतेषु च ।
पादाभ्यामजतीति पदाजिरिति जायते ॥
पदातिः पदगश्चैवं पदोपहत उच्यते ।
पादेनोपहतश्चेति विग्रहोऽत्र प्रदर्श्यताम् ॥

पद्यत्यतदर्थे । ६ । ३ । ५३

अतदर्थे यति परे पादस्य पद्भवेत् सदा ।
पादौ विध्यन्ति पद्याः स्युः शर्कराः प्रस्तराणवः ॥
कण्टका अपि पद्याः स्युः पादौ विध्यन्ति ते यतः ।

इके चरतावुपसंख्यानम् । वा०

पादशब्दस्य पद्भावश्चरताविकप्रत्यये ।
पदिकः ष्ठनि रूपं स्यात् पर्पादित्वाच्च ठन्निह ॥
पादाभ्याञ्चरतीत्यत्र विग्रहः साधने भवेत् ।

हिमकाषिहतिषु च । ६ । ३ । ५४

पादशब्दस्य पद्भावो हिमकाषिहतिषु च ।
[१]पद्धिमं पत्का[२]षी च पद्ध[३]तिरिति सिद्धयति ॥

ऋचः शे । ६ । ३ । ५५

ऋचः पादस्य पद्भावश्शेपरे ज्ञायतामिति ।
पच्छः शंसति गायत्रीं पादं पादं गुरु र्जनः ॥
ऋचो भिन्ने न पद्भावः पादशो रुप्यकं ददौ ।

वा घोष मिश्र शब्देषु । ६ । ३ । ५६

घोषे मिश्रे तथा शब्दे परे पादस्य वाऽत्र पत् ।
पद्घोषः पादघोषश्च पन्मिश्रः पादमिश्रकः ॥
पच्छब्दः पादशब्दश्च प्रयोगः क्रियते बुधैः ।
विग्रहः पादयोर्घोषः पादयोः शब्द इत्यपि ॥

निष्के चेति वाच्यम् । वा०

पन्निष्कः पादनिष्कश्च तस्मादेव प्रयुज्यते ॥

उदकस्योदः संज्ञायाम् । ६ । ३ । ५७

संज्ञायामुदकस्योद उदमेघः साध्यते ततः ।
सादृश्यात् पुरुषस्येयं संज्ञा भवति बुध्यताम् ॥

उत्तरपदस्य चेति वक्तव्यम् । वा०

उद उत्तरपदस्थस्य उदकस्यापि जायते ।
क्षीरोदस्तेन प्रख्यातः संज्ञायामिति बुध्यताम् ॥
उदवाहोऽपि संदृष्टो नाम्नि कस्यापि कुत्रचित् ।

---

१. पादस्य हिमं शीतमिति विग्रहः ।

२. पादौ कषन्तीति विग्रहः ।

३. पादाभ्यां हन्यते इति पद्धतिः ।

पेषवासवाहनधिषु च । ६ । ३ । ५८

वास वाहनधिशब्दे परे पेषपरे पुनः ।
उदकस्य उदादेशः उदवास उदवाहनः ।।
उदधिरुदपेषश्च पिनष्टीत्यादि सिद्धयति ।

अत्र विग्रहः—

उदकस्य वासः, उदकस्य वाहनः, उदकं धीयतेऽस्मिन्निति च विग्रहः ।

एकहलादौ पूरयितव्येऽन्यतरस्याम् । ६ । ३ । ५९

एकहलादिशब्दश्चेत् पूरणीयो भवेत् परः ।
उदभावस्तु तत्रापि क्रियतामुदकस्य वा ।।
उदकुम्भो जलघट उदककुम्भ उच्यताम् ।
नोदः स्यादुदकस्थाली शब्दे यस्मादनेकहल् ।
उदकपर्वतश्चात्र पूरणीयो न वर्तते ।।

मन्थौदनसक्तुविन्दुव्रजभारहारवीवधगाहेषु च । ६ । ३ । ६०

मन्थौदने सक्तुपरे च विन्दौ-
गाहे वधे हार परेऽथ वीवधे ।
भारे परे स्यादुदकस्य वृत्तौ-
उदो विकल्पेन समाननाम्नि ।।

उदाहरणम्—

उदमन्थः प्रयोक्तव्यस्तथैवोदकमन्थकः ।
उदौदनः उदादेशाद् विकल्पे उदकौदनः ।।

स्पष्टीकरणम्—

उदकेन मन्थः = उदमन्थः, उदकेन ओदनः—उदौदनः, उदकेन—सक्तु रुदसक्तुः, उदकस्य विन्दु रुदविन्दुः, उदकस्य वज्र उदवज्रः, उदकं बिभर्तीति उदभारः, उदकं हरतीति उदहारः, उदकस्य वीवध उदवीवधः, उदकं गाहते इति उदगाह उदकगाहश्चेति बोध्यम् ।

इको ह्रस्वोऽङ्यो गालवस्य । ६ । ३ । ६१

अङ्यन्तस्य इगन्तस्य ह्रस्वो वा उत्तरे पदे ।
प्रयोगो ग्रामणिपुत्रो ग्रामणीपुत्र इत्यपि ।।

इयङ्वङ्भाविनामव्ययानाञ्च नेति वाच्यम् । वा०

ह्रस्वो नैव भवेत्तत्र यस्मिन्नियङ्वङ्भवेत् ।
अव्ययस्यापि ह्रस्वो न क्रियते दृश्यतामधः ।।
श्रीमदश्वाथभ्रूभङ्गः शुक्लीभावः प्रयुज्यते ।

अभ्रुकुंसादीनामिति वक्तव्यम् । वा०

भ्रुकुंसादे निषेधो न तत्र ह्रस्वो विभाषया ।
भ्रुकुंसश्चाथ भ्रूकुंसो भ्रुकुटिर्भ्रूकुटिर्भवेत् ।।
अकारोऽनेन जायेत व्याख्यान्तरमतेन वै ।
भ्रकुंसो भ्रकुटिश्चापि तस्माल्लोके प्रयुज्यते ।।
भ्रुवा कुंसो भाषणञ्च शोभा वा यस्य वर्तते ।
नर्तकः स्त्रीवेषधारी भ्रकुंसः कथ्यते जनैः ।।
भ्रुवः कुटिश्च कौटिल्यं भ्रकुटिर्भ्रुकुटिर्भवेत् ।

एकतद्धिते च । ६ । ३ । ६२

एक शब्दस्य ह्रस्वः स्यात् तद्धिते उत्तरे पदे ।
एकस्या आगतमत्र एकरूप्यं प्रयुज्यते ।।

ङ्यापोः संज्ञाछन्दसोर्बहुलम् । ६ । ३ ६३

ङ्यापोर्ह्रस्वो भवेत् संज्ञा छन्दसोर्बहुलं सदा ।
रेवतिपुत्र एषोऽस्ति अजक्षीरं पिवेन्नहि ।।
बहुलग्रहणान्नैव नान्दीगानपदादिषु ।

त्वे च । ६ । ३ । ६४

ङ्यापो ह्रस्वो विकल्पेन त्वप्रत्यये परे भवेत् ।
रोहिणित्वमजत्वञ्च रोहिणीत्वमजात्वमपि ।।

ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे । ६ । १ । १३

तत्पुरुषे पुत्रपत्योः परयोः सम्प्रसारणम् ।
अङ्यन्तस्य पदस्यैव तथा च पूर्ववर्तिनः ।।

सम्प्रसारणस्य । ६ । ३ । १३९

सम्प्रसारणस्य दीर्घः स्यादुत्तरपदे परे ।
पुत्रः कौमुदगन्ध्यायाः कौमुदगन्धीपुत्रकः ॥
कौमुदगन्ध्यायाःपतिःकौमुदगन्धीपतिरयम् ॥
ह्रस्वः पूर्वेण नैवात्र व्यवस्थितविभाषया ।
स्त्रीप्रत्यये चानुपसर्जनेन तदादिनियमप्रतिषेधः । परि ।
परमकारीषगन्धी पुत्रोऽपि संप्रयुज्यते ।
उपसर्जनत्वादति–कारीष–गन्ध्याः सुतः ॥

बन्धुनि बहुव्रीहौ । ६ । १ । १४

बन्धुशब्दे परे कार्यं ष्यङ ई सम्प्रसारणम् ।
कारीषगन्धीबन्धुः स बहुव्रीहौ कृते भवेत् ॥

मातज् मातृक मातृषु वा । वा

मातज् मातृक मातृषु ष्यङन्तस्य विकल्पतः ।
सम्प्रसारणमीस्याद्वै प्रयोगो दृश्यतामधः ॥
भवति कारीषगन्धी माता मातश्च मातृकः ।
तदनु कारीष गन्ध्या मातः माता च मातृकः ॥

विशेषः—अस्मादेव निपातनान्मातृशब्दस्य मातजादेशः । नद्यृत-श्चेति कब्विकल्पश्च भवति ।

इष्टकेषिकामालानां चिततूलभारिषु । ६ । ३ । ६५

चिते तूले तथा भारिशब्दे परे समासके ।
इष्टकादितदन्तानां ह्रस्वो भवति बुध्यताम् ॥
इष्टकचितमिषीकतूलं च मालभारिणी ।
पक्केष्टकचितं मुञ्जेषीकतूलमिदं पुनः ॥
मालां भर्तुं शीलमस्या सा कन्या मालभारिणी ।

कारे सत्यागदस्य । ६ । ३ । ७०

कारशब्दे परे नित्यं सत्यागदस्य मुम् भवेत् ।
सत्यङ्कारोऽगदङ्कारः सत्यवक्ता भिषग्जनः ॥

अस्तोश्चेति वक्तव्यम् । वा

अस्तोर्मुम् स्यात् परे कारे—अस्तुङ्कारश्च स्वीकृतिः ।

धेनोर्भव्यायाम् । वा०

भव्याशब्दे परे धेनु शब्दस्यात्र मुमागमः ।
धेनुं भव्या भविष्यन्ती धेनु रत्र च बुध्यताम् ।।

लोकस्य पृणे । वा

पृणे लोकस्य मुम् कार्यं लोकंप्रिणः प्रियो जनः ।

इत्येऽनभ्याशस्य । वा

इत्ये परेऽनभ्याश शब्दस्य मुम् विधीयते ।
दूरतः परिहर्तव्ये स्यादनभ्याशमित्यकः ।।

भ्राष्ट्राग्न्योरिन्धे । वा

इन्धे परेऽपि मुम्कार्यंभ्राष्ट्राग्न्योःशब्दयोर्द्वयोः ।
भ्राष्ट्रमिन्धोऽग्निमिन्धः प्रयोगद्वयमुच्यते ।।
कर्मण्यणि उपपदसमासेन सुसाध्यताम् ।

गिलेऽगिलस्य । वा

मुम् भवेदगिलस्यात्र गिलंशब्दे परे पुनः ।
तिमिङ्गिलो मत्स्यभेदः कोषे लोके प्रसिद्धयति ।।

गिलगिले च । वा

मुम्कार्यमगिलस्यैव गिलगिलेऽपि परे पुनः ।
तिमिङ्गिलगिलश्चापि मत्स्योभवति कश्चन ।।

उष्णभद्रयोः करणे । वा

करणे च परेनित्यं मुम्भवेदुष्णभद्रयोः ।
उष्णङ्करणमित्युक्त्वा भद्रङ्करण मुच्यताम् ।।
श्येनतिलस्य पाते ञे मुमागमो विधीयते ।
श्यैनम्पाता च मृगया तैलम्पाती स्वधाक्रिया ।।
श्येनस्य पातश्चास्यां क्रियायामिति विग्रहः ।

रात्रेः कृति विभाषा । ६ । ३ । ७२

रात्रेः कृति विभाषा मुम् रात्रिञ्चरस्तु राक्षसः ।
रात्रिमटोऽपि सैवास्ति पक्षे रात्रिचरादिकम् ॥

सहस्य सः संज्ञायाम् । ६ । ३ । ७८

संज्ञायां च सहस्य सः क्रियतामुत्तरे पदे ।
सपलाशं भवेत्संज्ञा सहयुध्वाऽत्र नैव सः ।
सशिंशपश्च साश्वत्थमित्यादौ च सहस्य सः ॥

ग्रन्थान्ताधिके च । ६ । ३ । ७९

ग्रन्थस्यान्तेऽधिके सः स्यात् सहस्य उत्तरे पदे ।
तेनापाठि समुहूर्त्तं ज्योतिषं फलदर्शिना ॥

सद्रोणा च भवेत् खारी मापने सेटकादिना ।
कार्षापणः समाषः स्यान् माषः सकाकिणीककः ॥

अधिका द्रोणतः खारी कार्षापणश्च माषतः ।
सूत्रमत्रा "व्ययीभावे चाकाले" न प्रवर्तते ।
कालस्य पर्युदासेन तादृशे च प्रवर्तते ॥

द्वितीये चानुपाख्ये । ६ । ३ । ८०

द्वितीये चानुमेयेऽत्र सः सहस्य च जायते ।
निशा सराक्षसीकाऽत्र राक्षस्या ज्ञापिका निशा ॥
साग्निः कपोत आख्यातः सपिशाचा वात्या च सा ॥

**स्पष्टता—**

कपोतोऽग्निं भक्षयतीति लौकिकः प्रवादः । अतो यत्र यत्र कपोतस्तत्र तत्राग्निरित्यनुमानंभवति द्वितीयस्य । एवमेव वात्यायां पिशाचोऽनुमेयोऽस्ति ।

समानस्यच्छन्दस्यमूर्धप्रभृत्युदर्केषु । ६ । ३ । ८४

समानस्यापि सादेशो भवेदत्रोत्तरे पदे ।
मूर्धप्रभृत्युदर्केषु परेषु नैव किन्तु सः ॥

श्लो० सि० पू० २२

उदाहरणम् —

अनुभ्राता सगर्भ्यःस्यात् सयूथ्योऽनुसखा स्मृतः।
सनुत्योऽपि समानस्य सादेशे यति प्रत्यये॥

स्पष्टता—

समानो गर्भस्तत्रभवः। समानो यूथस्थस्तत्रभवः।
समानं नुतं तत्रभव इति च क्रमशोविग्रहःकार्यः॥
समानस्येतियोगोऽयं पृथगस्तीतिकाशिका।
सपक्षश्च सजातीयं साधर्म्यमिति साध्यते॥
ज्योतिर्जनपदरात्रिनामिनामगोत्ररूपस्थान वर्ण—

वयोवचनबन्धुषु। ६। ३। ८५

ज्योतिर्जनपदे रात्रौ नाभौ नाम्नि परे पुनः।
गोत्रेरूपेवयोवर्णे वचने बन्धुस्थानयोः॥
परेष्वेतेषु सादेशः समानस्य भवेत् सदा।
सज्योतिः सजनपद-इत्यादिपदमिष्यते॥

स्पष्टता—

समानंज्योतिरस्य, समानो जनपदोऽस्य, समाना रात्रिः, सनाभिः, सनामा, सगोत्रः, सरूपः, सस्थानः, सवर्णः, सवयाः, सवचनः, सबन्धुरित्येते प्रयोगाः साध्यन्तेऽनेन।

चरणे ब्रह्मचारिणि। ६। ३। ८६

सः स्यात् समानशब्दस्य चरणे ब्रह्मचारिणि।
अस्ति स ब्रह्मचारी यः समाने ब्रह्मणि स्थितः॥

स्पष्टता—

समानो ब्रह्मचारीति विग्रहः। समाने ब्रह्मणि व्रतचारीति तात्पर्यमस्य।

तीर्थे ये। ६। ३। ८७

सादेशश्च समानस्य तीर्थे यादौ च प्रत्यये।
सतीर्थ्यः सहपाठी स्यादेको गुरुर्यदा भवेत्॥

**स्पष्टता—**

समानंतीर्थं समान तीर्थं ततः समानतीर्थे वासीति यत्प्रत्यय-स्ततः समानस्य सादेशः ।

विभाषोदरे । ६ । ३ । ८८

सादेशो वा समानस्य वाञ्छिते यादिप्रत्यये ।
उदरे च परे तेन सोदर्यः साध्यते बुधैः ॥
समानोदर्यं इत्येवमपि वक्तुं सुशक्नुयात् ।

दृग्दृशवतुषु । ६ । ३ । ८९

दृग्दृश वतुदृक्षेषु समानस्य च सो भवेत् ।
सदृक् सदृश सदृक्षाः साध्यन्ते साधकैरिह ॥

इदंकिमोरीश्की । ६ । ३ । ९०

इदं किमोः क्रमादीश्की जायते दृग्दृशादिषु ।
ईदृक् स ईदृशश्च कीदृक् पुनश्च कीदृशः ॥

दृक्षे च ।

ईदृक्षश्चाथ कीदृक्षस्तादृक्तादृक्षतादृशाः ।
तादृगत्र च दीर्घस्तु आसर्वनाम्न इत्यतः ॥
अमूदृक् स्यादमूदृक्षस्तथैवामूदृशः पुनः ।
पश्यत्यसाविवेति विग्रहः क्रियतामिह ॥

समासेऽङ्गुलेःसङ्गः । ८ । ३ । ८०

समासेऽङ्गुलेः पश्चात्सङ्गस्य षत्वमिष्यते ।
रूपमङ्गुलिषङ्गः स्यादसमासे न षो भवेत् ॥

भीरोः स्थानम् । ४ । ३ । ८१

भीरोः परस्य स्थानस्य सस्य षत्वं समासके ।
भीरुष्ठानं पदंसिद्धं-वाक्ये तच्च प्रयुज्यते ॥

ज्योतिरायुषः स्तोमः । ८ । ३ । ८३

ज्योतिरायुः परः स्तोमः समासे षत्वमाप्नुयात् ।
ज्योतिष्टोमो यज्ञभेद आयुष्ठोमोऽपि कथ्यते ॥

सुमाषादिषु च । ८ । ३ । ९८

सुषामादिषु शब्देषु-षत्वं सस्य विधीयते ।
सुषामा स्यात् सुषन्धिश्च निषेधश्च प्रतिष्णिका ॥

स्पष्टता—

शोभनं साम यस्येति विग्रहः क्रियतामिह ।
समास एव षत्वं स्यादन्यत्र सश्रुतिर्भवेत् ॥

एति संज्ञायामगात् । ८ । ३ । ९९

संज्ञायामगकाराच्च परस्य सस्य षो भवेत् ।
हरिषेण स्ततो रूपं सिद्धयत्स्येति परे इह ।
पृथुसेनो न राजास्ति-विष्वक्सेनस्तु गात्परः ॥
एतीति कथ्यते तस्माद्धरिसक्थे न सस्य षः ।

नक्षत्राद्वा । ८ । ३ । १००

नक्षत्राद्वा परस्यात्र सेनस्य सस्य षो भवेत् ।
उच्यते रोहिणीषेणो रोहिणीसेन इत्यपि ॥
अगकारपरस्यैव षत्वं सेनस्य जायते ।
शतभिषक्सेन शब्दे तस्मात् षत्वमभून्नहि ।
अस्त्याकृतिगणश्चायं तेनाऽन्यत्रापि षविधिः ॥

अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्था स्थितो-
त्सुकोतिकारकरागच्छेषु । ६ । ३ । ९९

यत्रान्यस्य तृतीयास्ति षष्ठी वा समुपागता ।
दुगागमो भवेत्तत्रं आशीराशादिषूह्यताम् ॥

उदाहरणम्—

अस्याशीरन्यदाशीरन्यदास्थाऽन्यदुत्सुकः ।
अन्यदास्थित इत्यादि प्रयोगश्च प्रसिद्ध्यति ॥

अर्थे विभाषा । ६ । ३ । १००

अर्थे परे विभाषा दुक् स्यादन्यार्थोऽन्यदर्थकः ।

कोः कत् तत्पुरुषेऽचि । ६ । ३ । १०१

कोः कत्तत्पुरुषेऽचि स्यात् कदश्वः स्यात्कदन्नमिति ।

कुत्सितोऽश्वः कदश्वः स्यात् कदन्नं कुत्सितं हि तत् ।
कूष्ट्रो राजा बहुव्रीहौ कदादेशो न कोरिह ॥

त्रौ च । वा ।

त्रिपरे कोः कदादेशो वार्तिकेन विधीयते ।
कुत्सितास्ते त्रयोदुष्टाः कत्त्रयः प्रभवन्ति वै ॥

रथवदयोश्च । ६ । ३ । १०२

कोः कद्रथवदयोः स्यात् कद्रथः कद्वदो भवेत् ।

तृणे च जातौ । ६ । ३ । १०३

तृणे जातौ परे कोः कत् कत्तृणं कुत्सितं तृणम् ।

का पथ्यक्षयोः । ६ । ३ । १०४

पथ्यक्षयोश्च कोः का स्यात् काक्षः कापथमिष्यते ।
तत्पुरुषोऽक्षशब्देन अक्षिशब्दाद् बहुव्रीहिः ॥

ईषदर्थे । ६ । ३ । १०५

ईषदर्थे च कोः का स्यादीषज्जलञ्च काजलम् ।
अजादवपि कादेशः काम्लः स्यादीषदम्लके ॥

विभाषा पुरुषे । ६ । ३ । १०६

पुरुषार्थे विभाषा कोः कादेश इह जायते ।
का पुरुषः कुपुरुषः कुत्सितः पुरुषश्च यः ॥

कवं चोष्णे । ६ । ३ । १०७

उष्णशब्दे परे कोः स्यात् कवं का कदितित्रयम् ।
ईषदुष्णं कवोष्णं स्यात् कोष्णं तथा कदुष्णमिति ॥

पृषोदरादीनि यथोपदिष्टम् । ६ । ३ । १०९

पृषोदरादयश्शब्दाः शिष्टैर्यथा प्रदर्शिताः ।
तथैव साधनीयास्ते निपातनक्रियाबलात् ॥

अत्र स्पष्टता—

यानि यानि शिष्टै रुपदिष्टानि यथोपदिष्टमिति ।

अत्रशिष्टलक्षणम्—

एतस्मिन्नार्यनिवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकरणाः किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारगास्तत्रभवन्तस्ते शिष्टाः ।

उदाहरणम्—

पृषदुदरमित्यर्थे पृषोदरं तलोपतः ।
वारिवाहक इत्यर्थे बलादेशाद् बलाहकः ॥

स्पष्टता—

पृषदुदरं यस्य स पृषोदरं वायुः पृषदुद्वानं यस्य स पृषाद्वानम् । जीवनस्य मूतः—जीमूतो मेघः—अत्रवनशब्दस्यलोपो भवति ।

भवेद्वर्णागमाद्धंसः सिंहोवर्णविपर्ययात् ।
गूढोऽत्मा वर्णविकृतेर्वर्णनाशात् पृषोदरम् ॥

पुनश्च—शवानां शयनं श्मशानमत्रशवशब्दस्य श्मादेशो भवति शयनस्य च शानादेशः ।

दिक्शब्देभ्य स्तीरस्य तारभावो वा । वा

तीरस्य तारभावो वा दिक् शब्देभ्यः परस्य च ।
दक्षिणतारमित्येवं दक्षिणतीर मित्यपि ॥
उत्तरतारमित्येव मुतरतीर मुच्यताम् ।

दुरो दाशदभध्येषूत्वमुत्तर पदादेः स्टुत्वश्च । वा

दुर उत्वमुत्तरस्य पदादेः ष्टुत्वमिष्यते ।
दाशनाशदभध्येषु परेषु दृश्यतामधः ॥

उदाहरणम्—

दुःखेन दाश्यते यश्च स दूडाश इहोच्यते ।
दुःखेन नाश्यते यस्तु स दूणाशो महारिपुः ॥
दुःखेन ध्यायति दूढचो यत्र सीदन्ति सा वृसी ।

संहितायाम् । ६ । ३ । ११४

अधिकारस्तु योगोऽय मुत्तरेष्वनुवर्तते ।

कर्णे लक्षणस्याऽविष्टाष्ट पञ्चमणिभिन्नच्छिन्नच्छिद्र—

स्रुवस्वस्तिकस्य । ६ । ३ । ११५

कर्णशब्दे परे दीर्घः कार्यो लक्षणवाचके ।
विष्टाष्टपञ्चमणिषु भिन्नच्छिन्नस्रुवेषु च ॥
छिद्रे स्वस्तिकशब्दे च दीर्घो न जायते सदा ।

उदाहरणम्—

द्विगुणाकर्ण इत्येवं शब्दो लक्षणवाचकः ।
विष्टादीनां निषेधेन विष्टकर्णः प्रयुज्यते ॥
अष्टकर्णः पञ्चकर्ण इत्यादौ नच दीर्घता ।

नहि वृत्ति वृषि व्यधि रुचि सहि तनुषु । ६।३।११६

क्विबन्तेषु परेष्वेषु नहि वृत्ति वृषादिषु ।
पूर्वपदस्य दीर्घः स्याद् वृत्तिमध्ये विशेषतः ॥

उदाहरणम्—

उपानद्रूप - मित्युक्तं प्रावृट् प्रयोग इष्यते ।
नीवृत् तथा च मर्मावृदभीरुक् साध्यतामिह ॥
नीरुक् तथा ऋतीषट् च परीतत् साध्यतां पुनः ।
क्वावेव जायते दीर्घः परिणहनमत्र न ॥
पूर्वं सूत्राद्विभाषाऽत्र अनुवर्त्त्य व्यवस्थिता ।
पटुरुक् तीग्मरुक् शब्दे तस्माद्दीर्घो न जायते ॥

वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम् ६। ३। ११७

वने परे कोटरादेः किंशुलकादेर्गिरौ परे ।
दीर्घो भवति संज्ञायां णत्वं वनस्य च पुनः ॥

वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः । ८।४।४

उत्तरपदस्थस्यात्र वनशब्दस्य नस्य णः ।
पुरगा मिश्रकादिभ्यः परस्यैव सदा भवेत् ॥
कोटरान्ताश्च ये पञ्च सन्तीह णविधौ धृताः ।
दीर्घविधौ च विज्ञेयाः कोटरादय एव हि ॥

तेषाञ्च कृतदीर्घाणां णत्वकार्ये प्रदर्शनम् ।
नियमार्थकमेवास्ति विध्यर्थोऽग्रेपदस्य च ॥

उदाहरणम्—

पुरगावणमित्येवं मिश्रकावण मित्यपि ।
सीध्रकावणमस्तीह तथैव सारिकावणम् ।
कोटरावणमित्यादि साधनीयं सदा बुधैः ॥

एभ्य एव परस्यात्र वनस्य नस्य णो भवेत् ।
असिपत्रवनं तस्माण्णत्वं विना प्रयुज्यते ॥

वनस्याग्रे विगृह्याग्रेवणं भवति बुध्यताम् ।
राजदन्तादिपाठेन सप्तम्याः स्यादलुक् ततः ॥

प्रातिपदिकार्थमात्रे प्रथमा किंशुलुकागिरिः ।
पूर्वं प्रदर्शितम् सर्वं संज्ञैव यस्य कस्य चित् ॥

वले । ६ । ३ । ११८

संज्ञायामत्र दीर्घः स्याद् वले च प्रत्यये परे ।
कृषीवलस्तु कृषको मत्वर्थे वलजस्ति वै ॥

मतौ बह्वचोऽनजिरादीनाम् । ६ । ३ । ११९

बह्वचस्तु भवेद्दीर्घो मतौ च प्रत्यये परे ।
अमरावती प्रसिद्धैव मादुपधाया मस्य वः ॥
अजिरादिनिषेधेन ततोऽजिरवती भवेत् ॥
बह्वच एव दीर्घोऽत्र व्रीहिमती ततो भवेत् ।
संज्ञायामेव दीर्घोऽत्र राज्ञीयं वलयवती ॥

शरादीनाञ्च । ६ । ३ । १२०

मतौ परे शरादीनां दीर्घस्तस्माच्छरावती ।

इको वहेऽपीलोः । ६ । ३ । १२१

इगन्तस्य च दीर्घः स्याद् वहे परे ऋषीवहम् ।
पिण्डवहं तथा पीलुवहमित्येव युज्यते ॥

अपील्वादीनामिति वाच्यम् । वा०

तस्माद् दारुवहं रूपं जायते दीर्घवारणात् ।

उपसर्गस्य घञ्यमनुष्ये बहुलम् । ६ । ३ । १२२

उपसर्गस्य दीर्घः स्याद् बहुलं घञि प्रत्यये ।
मनुष्यभिन्नतात्पर्ये परीपाकस्ततोऽभवत् ।
बहुलात् परिपाकोऽपि निषादे मानवे नहि ॥

स्पष्टता—

निषीदन्त्यस्मिन् पापानीति निषादः । हलश्चेत्यधिकरणे घञ्

इकः काशे । ६ । ३ । १२३

इगन्तस्योपसर्गस्य दीर्घः काशे परे भवेत् ।
स्यातां वीकाश नीकासौ प्रकाशे दीर्घता नहि ॥

अष्टनः संज्ञायाम् । ६ । ३ । १२४

संज्ञायामष्टनो दीर्घः स्यादुत्तरपदे परे ।
अष्टापदं प्रयुज्येत संज्ञाभिन्ने अष्टपदः ॥
अष्टावक्रो भवेदेवमष्टाबन्धुर इत्यपि ॥

चितेः कपि । ६ । ३ । १२७

कपि परे चितेर्दीर्घ एकचितीक इष्यते ।
द्विचितीकस्त्रिचितीकः कपि दीर्घे कृते भवेत् ॥

स्पष्टता—

अत्र एका चितिर्यस्य, द्वे चिती यस्येति विग्रहो बोध्यः ।

नरे संज्ञायाम् । ६ । ३ । १२९

नरे परे पूर्वदीर्घो नाम्नि विश्वानरो भवेत् ।
विश्वावसुश्च विश्वाराट् विश्वस्य दीर्घकार्यतः ॥

स्पष्टता—

विश्वं वसु यस्य सः विश्वस्मिन्राजते इति विश्वाराट् ।

मित्रे चर्षौ । ६ । ३ । १३०

मित्रेपरेऽत्र पूर्वस्य दीर्घः स्यादृषिनामनि ।
विश्वामित्रः प्रसिद्धोऽस्ति कौशिको मुनिरेषकः ।
विश्वमित्रो वटुःकोऽपि दीर्घो न ऋषिभिन्नके ।

शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः । वा

दन्ते दंष्ट्राकर्णकुन्दे वराहे पदपुच्छयोः ।
शुनो दीर्घोभवत्यत्र श्वादन्तः श्वापद इति ॥

प्रतिरन्तः शरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि । ८ । ४ । ५

प्रतिरन्तश्शरादिभ्यः परस्य वननस्य णः ।
प्रवणं निर्वणं क्वापि कार्ष्यवणं शरवणम् ।
अन्तर्वणमिक्षुवणमाम्रप्लक्षवणं क्वचित् ॥

स्पष्टता—

प्रवणं निर्वणमत्रगतिसमासः । अन्तर्वणमित्यत्र विभक्त्यर्थेऽव्ययीभावः । कार्ष्यवणमित्यत्रतु षात्परत्वादेव णत्वं सिद्ध्यति ।

विभाषौषधिवनस्पतिभ्यः । ८ । ४ । ६

वनस्य नस्य णत्वं वा ओषधेश्च वनस्पतेः ।
परस्यैव ततो रूपं दूर्वावणं दूर्वावनम् ॥
शिरीषवणमित्यादि साधनीयं विकल्पतः ।
वदरीवणमित्यत्र दूर्वावणेऽपि वाऽत्र णः ।

द्व्यच् त्र्यज्भ्यामेव । वा ।

द्व्यच्त्र्यज्भ्यां परस्यैव णत्वं वनस्य जायते ।
देवदारुवने णत्वं तस्मादेव न जायते ॥

इरिकादिभ्यः प्रतिषेधो वक्तव्यः वा ।

इरिकादेः परस्यापि णत्वं न इरिकावनम् ।

वाहनमाहितात् । ८ । ४ । ८

वाहनस्य नकारस्य आहिताच्च परस्य णः ।
इक्षुवाहण मित्यत्र णत्वं स्याच्छरवाहणे ॥
दर्भवाहणमित्यत्र स्यादाहितात्परस्य च ॥
यदुह्यते समारोप्य तदाहितमुच्यते ।
तद्वाचिस्थनिमित्तात् परस्य वाहनस्य णः ।
इन्द्रवाहनमित्यादौ तस्मान्नेदं प्रवर्ततो ॥

पानं देशे । ८ । ४ । ९

देशेऽर्थे पानशब्दस्य नस्य णोऽनेन जायते ।
क्षीरपाणाः समाख्याता उसीनरा जना इह ॥
सुरापाणास्तु पाश्चात्याः बहुव्रीहिसमासतः ।

वा भावकरणयोः । ८ । ४ । १०

भावे च करणे णत्वं पानस्य जायतेऽत्र वा ।
क्षीरपाणं क्षीरपानं सर्पिष्पाने निषिध्यते ॥

गिरिनद्यादीनां वा । वा०

गिरिनद्यादिशब्देषु णत्वं स्याच्च विभाषया ।
गिरिणदीगिरिनदी चक्रणितम्वा वा भवेत् ॥

प्रातिपादिकान्तनुम्विभक्तिपु च । ८ । ४ । ११

प्रातिपदिकाऽवसाने नुम् विभक्त्योरपि पुनः ।
स्थितस्य नस्य णत्वंवा निमित्ताच्च परस्य च ॥

उदाहरणम्—

विभक्तौ माषवापेण-व्रीहिवापाणि च नुमि ।
णत्वं स्यात्प्रातिपदिकान्तनस्य माषवापिणौ ॥

पक्षे णत्वं विना रूपं माषवापेन इत्यपि ।
व्रीहिवापानि रूपं स्यात् तथा च माषवापिनौ ॥

उत्तरपदं यत्प्रादिकं तदन्तस्यैव णत्वम् । वा ।

स्यादुत्तरपदं यत्र प्रातिपदिकमेव तु ।
तदन्तस्यैवणत्वं स्याद् गर्गभगिन्यत्र नहि ॥
प्रहिण्वन्नत्र णत्वार्थं सूत्रे नुम्ग्रहणं कृतम् ।
प्रेन्वनमादि शब्देषु क्षुभ्नादित्वान्न णविधिः ॥

युवादेर्न । वा

युवादेर्नहि णत्वं स्याद् रम्ययूना ततो भवेत् ।
परिपक्वानिशब्देऽपि णत्वं न स्याद्युवादितः ॥
एकाजुत्तरपदे णः वृत्रहणौ पदं ततः ।
जसि वृत्रहणो रूपं वृत्रहणमस्मि भवेत् ॥
एवंस्थितौनुम् विभक्त्योर्नाम्नि च णत्वमिष्यते ॥
हरिमाणी क्षीरपाणि क्षीरपेणादिषु च णः ॥

कुमति च । ८ । ४ १३

कवर्गवत्युत्तरपदे प्राग्वदेवात्र णविधिः ।
णत्वं स्याद्धरिकामेण हरिकामाणि कामिणौ ॥
वस्त्रयुगाणि रूपं स्यात् खरयुगेण स्यात्तथा ।

पदव्यवायोऽपि । ८ । ४ । ३८

पदेन व्यवधानेऽत्र णत्वं न स्यादिति स्मरेत् ।
प्रयोगो दृश्यतां माषकुम्भवापेन दर्शितः ॥
प्रावनद्धं पर्यवनद्धं प्रागान्नयाम इत्यपि ।
स शोभते चतुरङ्ग योगेन नृपतिर्मम ॥

अतद्धित इति वाच्यम् । वा

तद्धिते न निषेधोऽयं व्यवधानेऽपि तत्र णः ।
भवत्यार्द्रगोमयेण शुष्कगोमयेण इति ॥

क्षुभ्नादिषु च ।

क्षुभ्नादि गण शब्देषु णत्वं न क्रियते पुनः ।
स क्षुभ्नाति क्षुभ्नीतो नूनमनः सखा मम ॥

स्पष्टता—

नॄन् नयति विगृह्यैव नृनमनः पदं भवेत् ॥

कुस्तुम्बुरूणि जातिः । ६ । १ । १४३

कुस्तुम्बुरु च धान्याकं जात्यर्थे सुण् निपातनात् ।
जातिभिन्ने कुतुम्बुरु तिन्दुकीफल मुच्यते ॥

अपरस्पराः क्रियासातत्ये । ६ । १ । १४४

क्रियायाश्चात्र सातत्ये सुण् निपातनतो भवेत् ।
अपरस्पराश्च ते सार्था अविच्छेदेन यान्ति वै ॥
किन्त्वपरपरा यान्ति अपरपरे च विग्रहे ।
सुण्नैवात्र जायेत सातत्यञ्च क्रियासु न ॥

गोष्पदं सेवितासेवितप्रमाणेषु । ६ । १ । १४५

सेवितेऽसेवितेऽप्यर्थे प्रमाणे गोष्पदं भवेत् ।
सुट्कार्यञ्च निपातेन सेविते गोष्पदः पदम् ॥
असेविते प्रयोगस्तु अगोस्पदं वनं भवेत् ।
क्षेत्रं गोष्पदमात्रन्तु प्रमाणे समुदाहरेत् ॥

आस्पदं प्रतिष्ठायाम् । ६ । १ । १४६

आस्पदं स्यात्प्रतिष्ठायां सुण् निपातनमत्र हि ।
प्रतिष्ठाभिन्नतात्पर्ये आपदापद मिष्यते ॥

आश्चर्यमनित्ये । ६ । १ । १४७

स्यादाश्चर्यमद्भुतार्थे केवलं सुण् निपात्यते ।

वर्चस्केऽवस्करः । ६ । १ । १४८

वर्चस्क मन्नमलं स्यात् तदर्थेऽवस्करो भवेत् ॥
सुट् स्यादत्र निपातेन अन्यार्थेऽवकरो भवेत् ॥

अपस्करो रथाङ्गम् । ६ । १ । १४९

सुड् विधानं निपातेन रथाङ्गं स्यादयस्करः ।

किष्किरः शकुनौ वा । ६ । १ । १५०

**विष्किरः शकुनौवा स्याद् विकिरोऽपि प्रयुज्यते ।**
**सुड् विधानं विकल्पेन यथेच्छञ्च प्रयुज्यते ॥**

प्रतिकशश्च कशे । ६ । १ । १५२

**प्रतिष्कशः सहायः स्यात् प्रतिपूर्वात्कशेरचि ।**
**सुट्षत्वञ्च निपातेन पुरोयायी प्रतिष्कशः ॥**

प्रस्कण्वहरिश्चन्द्रावृषी । ६ । १ । १५३

**प्रकण्वश्च हरिश्चन्द्रो भवेतामृषिनामनि ।**
**प्रकण्वो हरिचन्द्रस्तु देशमाणवयोरिह ॥**

मस्कर मस्करिणौ वेणुपरिव्राजकयोः ।

६ । १ । १५४

**मस्करो मस्करी शब्दौ वेणौ सन्यासिनि क्रमात् ।**
**सुडागमेन जायेते निपातनक्रियाबलात् ॥**
**मस्करो वेणुराख्यातो मस्करी परिव्राजकः ।**
**मकरो ग्राह इत्युक्तः समुद्रो मकरी भवेत् ॥**

**अत्रायं विशेषः—**

**चन्द्रोत्तरपदे मन्त्रे ह्रस्वात् सुट् क्रियते पुनः ।**
**सुश्चन्द्रो युष्मानादौ गतिसमास इष्यते ॥**

कास्तीराजस्तुन्दे नगरे । ६ । १ । १५५

**कास्तीरमजतुन्दश्च नगरार्थे निपात्यते ।**
**ईषत्तीरञ्च यस्यास्ति कास्तीरं नगरं हि तत् ॥**
**अजस्येवास्ति तुन्द मजस्तुन्दं पुरं क्वचित् ।**
**नगराद्यत्र भिन्नोऽर्थः कातीरमजदुन्दकम् ।**

कारस्करो वृक्षः । ६ । १ । १५६

**कारस्करो वृक्षभेदे सुडागमो निपातनात् ।**
**कस्कादिषु पठित्वैव साध्यते केनचिद् बुधा ॥**

पारस्करप्रभृतीनि च संज्ञायाम् । ६ । १ । १५७

पारस्कर प्रभृतीनि ससुट्कानि निपातनात् ।
संज्ञायामेव किष्किन्धा पारस्करादि साध्यते ।।
किंकिंधत्ते विगृह्यैव किष्किन्धा पदं स्मृतम् ।
पारस्करोऽत्र देशोऽस्ति वृक्षः पारस्करः पुनः ।।
रथस्या च नदीकाचिदन्योऽपि साध्यतां पुनः ।

स्पष्टता—

पारस्करः प्रभृतिर्येषामितिचात्रबहुव्रीहिः ।
पारं करोति यः कश्चित् पारस्करो महान् जनः ।।

तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च । ग० सू०

तद् बृहतोः करपत्योश्चोरदेवतयोरिह ।
सुट्तलोपादिकं कृत्वा तस्करः स्याद् बृहस्पतिः ।।

प्रायस्य चित्तिचित्तयोः । ग० सू०

सुडागमस्तु प्रायस्य क्रियते चित्ति चित्तयोः ।
प्रायश्चित्तिःकुकर्मा स्यात् प्रायश्चित्तं विशोधनम् ।।

अत्रस्मृतिः—

प्रायोनाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।
प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम् ।।
अस्याकृतिगणत्वेन वनस्पति परश्शतम् ।
अन्येऽप्येवंविधाःशब्दाःसाध्यन्ते सुण्निपातनात् ।।
सुरेशज्ञाकृतश्लोक व्याकरणस्य पाठनात् ।
पठनाद्वा भवेद् व्यूढं ज्ञानं स्वल्पश्रमेण वै ।।
अल्पश्रमेण किञ्चिद्वा समये पण्डितायसे ।
तदाऽधीष्व प्रयत्नेन व्याकरणं नवं मम ।।

इति समासाश्रयविधिप्रकरणम्

# अथ तद्धितप्रकरणम्

## अपत्यसाधारणप्रत्ययाः

अपत्यादिविकारान्ताः प्रत्यया ये च दर्शिताः ।
सन्ति साधारणास्तेऽत्र तद्धितादौ विशेषतः ॥

### समर्थानां प्रथमाद्वा । ४ । १ । ८२

समर्थानां प्रथमाद्वा सूत्रं पदत्रयात्मकम् ।
प्राग्दिशः सूत्रपर्यन्त मधिकृतं प्रवर्तते ॥

पदं समर्थं परिनिष्ठितं तद्-
बोभूयते यत्कृतसन्धिकार्यम् ।
तस्माद्विकल्पेन च तद्धिताः स्यु
रर्थे विभिन्ने प्रथमादियुक्तात् ॥

### प्राग्दीव्यतोऽण् । ४ । १ । ८३

प्राग्दीव्यतोऽण् विधीयेत तेन दीव्यतितः पुरा ।

### तद्धितेष्वचामादेः । ७ । २ । ११७

तद्धितेषु पदस्यादे रचो वृद्धिर्ञिति णिति ।

### किति च । ७ । २ । ११८

पदस्यादेर्भवेद्वृद्धिस्तथैव किति तद्धिते ॥

### अश्वपत्यादिभ्यश्च । ४ । १ । ८४

अश्वपत्यादिशब्देभ्योऽपत्यार्थे चाण् विधीयते ।
वक्ष्यमाणस्य ण्यस्यायमपवादोऽस्ति बाधकः ॥
अश्वपते रपत्यादि भवेदाश्वपतं पदम् ।
गणपतेरपत्यन्तु गाणपतं प्रयुज्यते ॥
गाणपत्यपदश्चात्र प्रामादिकमुदीरितम् ।
तद्धिते प्रातिपदिक संज्ञा स्यात्तेन हेतुना ॥
पूर्वजाता विभक्तिस्तु लुप्येत्सन्धिस्ततः परम् ।

दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः । ४ । १ । ८५

**दित्यदित्यादित्यशब्दात् — पत्युत्तरपदादपि ।**
**प्राग्दीव्यतीये तात्पर्ये ण्यः प्रत्ययस्तु जायते ॥**
**दितेरपत्यं दैत्यः स्यादादित्यस्त्वदितेः सुतः ।**
**प्रजापतेरपत्यन्तु प्राजापत्यः प्रयुज्यते ॥**

यमाच्चेति काशिकायाम् । वा०

**यमस्यापत्यमित्यर्थे याम्यः स्यात्काशिकामते ।**

पृथिव्या ञाञौ । वा०

**ञाञौ स्यातां पृथिव्यास्तु-पार्थिवा पार्थिवी ततः ।**

देवाद्यञञौ । वा०

**देवाच्च यञञौ स्यातां दैव्यं दैवं भवेत्क्रमात् ॥**

बहिषष्टिलोपो यञ्च । वा०

ईकक् च । वा०

**यञ् प्रत्ययो भवेदीकक् बहिषष्टिद्वयादपि ।**
**वाह्यः पुनश्च वाहीकः साध्यते भारवाहके ॥**
**ईकक्च वार्तिकश्चात्र तस्मादीकग् वहेरिह ।**

स्थाम्नोऽकारः । वा०

**स्थाम्नोऽकारः प्रत्ययः स्यादश्वत्थामः पृषोदरात् ।**
**सस्य तः स्यान्निपातेन टिलोपो नस्तद्धिते इति ॥**
**अश्वस्येवास्ति च स्थामा स्थितिर्यस्येति विग्रहे ।**
**तदपत्यमिति प्रोच्य स्थाम्नोऽकारश्च जायते ॥**

भवार्थे लुग् वाच्यः । वा०

**भवार्थेत्वप्रत्ययस्य लुग् भवेद् वार्तिकेन वै ।**
**अश्वत्थामा ततो रूपं जायतेऽथ प्रयुज्यते ॥**

लोम्नोऽपत्येषु बहुषु । वा०

लोमशब्दान्ततोऽकारः प्रत्ययः क्रियते इह ।
अपत्यान्युडुलोम्न उडुलोमा भवन्ति ते ॥
अपत्यमुडुलोम्नस्तु औडुलोमिरिति भवेत् ।

गोरजादिप्रसङ्गे यत् । वा०

गोरजादिप्रसङ्गे यद् गव्यं भवति यत्परे ।
गोभ्यो हेतुभ्य आगतं गोरूपं गोमयं भवेत् ॥

उत्सादिभ्योऽञ् । ४ । १ । ८६

उत्सादिभ्यश्च अञ् कार्यस्तस्मादौत्सश्च तत्सुतः ।

अग्निकलिभ्यां ढक् वक्तव्यः । वा०

अग्नेः कलेश्च ढक् कार्यं ढक एवात्र जायते ।
आग्नेयमथ कालेयं प्रयोगं कुरुतां ततः ॥

॥ इत्यपत्यादिविकारान्तार्थसाधारणप्रत्ययाः ॥



# अपत्याधिकारप्रकरणम्

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् । ४ । १ । ८७

धान्यानां भवने क्षेत्रे इतश्च पूर्ववर्तिनः ।
येऽप्यर्थास्तेषु जायेते स्त्रीपुंसाभ्याञ्च नञ्स्नञौ ॥

स्त्रीणां भावो भवेत् स्त्रैणः पुंसांभावः पौंस्न इति ।
स्त्रीवत् पुंवत् तु वत्यर्थे स्त्रीपुंवच्चेति दर्शनात् ॥

द्विगो र्लुगनपत्ये । ४ । १ । ८८

द्विगुसमासहेतुर्यस्तद्धितोऽजादिप्रत्ययः ।
तस्य लुगनपत्यस्य पञ्चकपाल इष्यते ॥
पञ्चसु च कपालेषु संस्कृत इति विग्रहः ।
द्विगो र्निमित्तमित्येतत् सूत्रे यदि न कथ्यते ॥
तदा निम्नस्थलेऽपि स्याल्लुक्कार्यस्य प्रवर्तनम् ।
इदं पञ्चकपालस्य खण्डं पाञ्चकपालकम् ॥
द्विगोः प्राप्तिर्नचात्रास्ति तस्माल्लुङ्नात्र जायते ।
द्वैमित्रिरपत्येऽस्ति तस्मादत्र भवेन्न लुक् ॥
पञ्चगर्गारूप्यशब्देऽजादिश्च प्रत्ययोनहि ।

गोत्रेऽलुगचि । ४ । १ । ८९

अजादौ प्राग्दीव्यतीये विवक्षिते भवेदलुक् ।
गोत्रप्रत्ययस्य चात्र गर्गाणामादिविग्रहे ॥

गार्ग्याणामिमे छात्राः वृद्धाच्छ इति छो भवेत् ।
तस्यच गोत्रेऽलुगचि कृते कार्यमधस्तनम् ॥

आपत्यस्य च तद्धितेऽनाति । । ६ । ४ । १५१

हलः परस्य अपत्ययकारस्य तद्धिते परे ।
लोपो भवति विज्ञेयं नत्वाकारे परे क्वचित् ॥
यकारस्य च लोपेन गार्गीया इति साध्यते ।

यूनि लुकि । ४ । १ । ९०

प्राग्दीव्यतीये अजादौ प्रत्यये च विवक्षिते ।
युवप्रत्ययस्य लुक्स्याद् यथात्र ग्लुचुकायनिः ॥
गोत्रापत्यं ग्लुचुकस्य फिनि स्याद् ग्लुचुकायनिः ।
यूनि अणि कृते रूपमुच्यतां ग्लौचुकायनः ॥
तस्यच्छात्रोऽपि कथ्येत ग्लौचुकायन एवहि ।

पैलादिभ्यश्च । २ । ४ । ५९

पैलादिभ्यः परो जातो लुप्यति युवप्रत्ययः ।
पीलाया युवापत्यं पैलः पिता सुतोऽपि स्यात् ।
प्रथमोऽत्राण् भवेत् तस्मात् फिञ् प्रत्ययस्य लुग् भवेत् ॥

तद्राजाच्चाणः । ग०

तद्राजसंज्ञकात् पश्चाद् युवप्रत्ययस्यात्र लुक् ।
फिञत्र लुप्यति किन्तु अण् प्रत्ययश्च तिष्ठति ॥
तस्मादाङ्गः पिता पुत्रः प्रयोगोऽयं प्रसिद्ध्यति ।

इञः प्राचाम् । २ । ४ । ६०

प्राचां गोत्रं भवेदर्थस्तदा गोत्रे इञन्ततः ।
युवा लुग् जायते तस्मान्निम्नरूपं प्रसिद्ध्यति ॥
पन्नागारस्य अपत्यं पान्नागारिः पिता सुतः ।
प्राचामर्थो न यत्रास्ति तत्र दाक्षिः पिता भवेत् ॥
दाक्षायणश्च पुत्रःस्यादिति तात्पर्यमूह्यताम् ।

न तौल्वलिभ्यः । २ । ४ । ६१

तौल्वल्यादेःपरस्यात्र युवप्रत्यस्य लुङ् नहि ।
पूर्वेणात्र च लुक् प्राप्तस्तस्यानेन निषेधनम् ॥
तुल्वलादिञ् तथा फक् च पिता तौल्वलिरिष्यते ।
फक् प्रत्ययस्तु पुत्रार्थे-पुत्रः स्यात् तौल्वलायनः ॥

फक् फिञोरन्यतस्याम् । ४ । २ । ९१

फक्फिञो रन्यतरस्यां प्रायो लुप्यति च युवा ।
कात्यायनस्य छात्रास्ते कातीया आयनस्य लुक् ॥

कात्यायनीयाः पक्षेऽत्र लुग् यदा न विधीयते ।
यस्कस्यापत्यमत्र स्याद् यास्कः शिवाद्यणि कृते ।।
तस्यापत्यं युवार्थे तु यास्कायनिरुदाहृतः ।
अणो द्व्यचस्तु सूत्रेण फिञ् प्रत्ययोऽत्र जायते ।।
तस्य छात्रास्तु यास्कीया यास्कायनीयाः सन्ति वा ।

तस्यापत्यम् । ४ । १ । ९२

तस्यापत्यमिति सूत्रात् षष्ठ्यन्तात्कृतसन्धितः ।
प्रथमात् प्रत्ययो भूयादपत्यार्थे विकल्पतः ।।
उक्ताश्च वक्ष्यमाणाश्च अपत्यार्थे भवन्ति वै ।
उपगोरपत्यमत्र स्याद्रूपमौपगवः सदा ।।
अत्रादिवृद्धिरेव स्यादन्त्योपधाद्वयस्य न ।।

अत्र फक्किका—

अपत्यार्थेऽपि तस्येदं सूत्रात् सिद्ध्येदण् विधिः ।
किमर्थं सूत्रमेतद्धि वाच्यं न पण्डितैरिदम् ।।
तस्येदमिति सूत्रस्य वृद्धाच्छ आदि वाधकम् ।
तद्वाधनाय कर्तव्यं तस्यापत्यं पृथगिति ।।
यदि न क्रियते प्रातिपदिकं वृद्धसंज्ञकम् ।
भवेत्येवेति प्रकृते प्रवर्तेत कुतो न छः ।।
कृतसन्धेर्नियमादेव सौत्थितिरिति सिद्ध्यति ।
अन्यथा सावुत्थितिः स्यादकृतव्यूहवर्तनात् ।।
दैवयज्ञीत्यादि सूत्रादन्यतरस्यां वर्तते ।
उपग्वपत्यमत्रापि औपगवी प्रयुज्यते ।।
अश्वपते रपत्यं तु भवेदाश्वपतः पदम् ।
दितेरपत्यं दैत्यः स्यादिति पूर्वं प्रदर्शितम् ।।
उत्सो वारिप्रवाहःस्या दौत्सस्तस्यापत्यमिति ।

अपत्यं पौत्रप्रभृतिगोत्रम् । ४ । १ । १६२

अपत्यं पौत्रप्रभृति गोत्रं शास्त्रीयमुच्यते ।
प्रवराध्यायप्रसिद्धं लौकिकं गोत्रमुच्यते ।।

जीवति तु वंश्ये युवा । ४ । १ । १६३

वंशे जीवति पित्रादौ पौत्रादेरपत्यमिह ।
युवसंज्ञं चतुर्थादि गोत्रसंज्ञं न तद्भवेत् ॥

भ्रातरि च ज्यायसि । ४ । १ । १६४

चतुर्थादिः कनीयांस्तु ज्येष्ठे भ्रातरि जीवति ।
युवा भवति तत्रापि प्रत्ययादिः प्रवर्तते ॥

स्पष्टता—

अत्रायमर्थः—गर्गादिमृतेष्वपि जीवत्यग्रजे अनुजो युवसंज्ञको भवति ।

वाऽन्यस्मिन् सपिण्डे स्थवितरे जीवति । ४ । १ । १६५

सपिण्डे भ्रातुरन्यस्मिन् स्थविरे खलु जीवति ।
अपत्यं पौत्रप्रभृते र्जीवद् वा युवसंज्ञकम् ॥

अत्र स्पष्टता—

भ्रातृभिन्ने सपिण्डे स्थवितरे जीवति सति पौत्रप्रभृते रपत्यं जीवति तदैव विकल्पेन युवसंज्ञं भवेत् ।

यो जीवति स युवसंज्ञको मृतस्तु स्थवितरे जीवत्यपि गार्ग्य एव भवति नतु गार्ग्यायणः ।

स्थानेन वयसा च उत्कृष्टे पितृव्ये मातामहे भ्रातरि वा जीवति गार्ग्यस्यापत्यं गार्ग्यायणो गार्ग्यो वा ।

स्थविरे किम्—स्थानवयोन्यूने गार्ग्य एव मृतेऽपि गार्ग्य एव ।

जीवतीतिकिम्—मृते मृतो वा गार्ग्य एवेति भावः ।

वृद्धस्य च पूजायामिति वाच्यम् । वा

प्राचां मतेऽत्र गोत्रस्य वृद्धसंज्ञा प्रकीर्तिता ।
तस्य च युवसंज्ञा स्यात् पूजायामिति बुध्यताम् ॥
गार्ग्यायणस्तत्रभवानित्युदाहरणं स्थितम् ।

यूनश्च कुत्सायां गोत्रसंज्ञेति वाच्यम् । वा

यूनोऽपि गोत्रसंज्ञा स्यात् कुत्सायामितिबुध्यताम् ।
गार्ग्यो जाल्मः प्रयोगोऽयं ततएव प्रसिद्ध्यति ॥

एको गोत्रे । ४ । १ । ९३

एक एव सदा गोत्रेऽपत्यप्रत्यय इष्यते ।
उपगोश्च गोत्रापत्य मौपगवोऽत्र अण् भवेत् ।
गोत्रापत्येऽप्यनन्तरापत्य इव अणेव नेञ् ॥

गर्गस्यापत्यमुच्चार्य गार्ग्य एव यञि कृते ।
अत इञ् प्रत्ययो नात्र गार्ग्यस्यापत्येऽपि सः ॥

नत्वत्र यञन्तात्फक् एको गोत्रे नियमतः ।
नडायनस्य अपत्यं नाडायणः फकि कृते ॥

गोत्रापत्ये विधानेन अत इञ् न प्रवर्तते ।
गोत्रस्यैकोनसंख्यानां प्रत्ययानां परम्परा ॥

यद्वा यद्यूनसंख्येभ्योऽनिष्टोत्पत्तिः प्रसज्यते ।
अपत्यं पितु रेव स्यात्ततः प्राचामपीति च ॥

मतभेदेन तद्धान्यै सूत्रमेतत् तथोत्तरम् ।

पितुरे वापत्यमिति पक्षे हि उपगोस्तृतीये वाच्ये औपगवातिञ् स्यात् । चतुर्थे तु अजीवज्ज्येष्ठे मृतवंश्ये औपगवेः फक् ।

इत्थं फगिञोः परम्परायां मूलाच्छततमे गोत्रे एकोनशतं प्रत्ययाः स्युः । पितामहादीनामपीति मुख्यपक्षे तु तृतीये वाच्ये उपगोरणा इष्टे सिद्धेऽपि-अण्णन्तादिञपि ततश्चतुर्थे फगिति फगिञोः परम्परायां शततमे गोत्रेऽष्टनवति रनिष्टप्रत्ययाः स्युरतो नियमार्थमिदं सूत्रमस्ति । एवमेवोत्तरसूत्रेऽपि विज्ञेय मिति ।

गोत्राद्यून्यस्त्रियाम् । ४ । १ । ९४

यून्यपत्ये सदा गोत्र प्रत्ययान्ताच्च प्रत्ययाः ।
गोत्राद्यून्यस्त्रियामेव नियमो रक्ष्यतामिह ॥
गर्गस्य च युवापत्यं गार्ग्यायणः प्रयुज्यते ।

अत इञ् । ४ । १ । ९५

अदन्तप्रातिपदिकात् षष्ठचन्तादञ् विधीयते ।
दक्षस्यापत्यमित्यत्र दाक्षिः सदा प्रयुज्यते ॥

बाह्वादिभ्यश्च । ४ । १ । ९६

बाह्वादिभ्य इति सूत्रादिञ प्रत्ययो विधीयते ।
बाहविरोडुलोमिश्च शारलोमिरिति भवेत् ॥

सुधातु रकञ् च । ४ । १ ९७

सुधातुशब्दतोऽकङ् स्याच्चकारादिञ्च जायते ।
सुधातुकिश्च सौधातिः प्रयोगद्वयमुच्यताम् ॥

व्यासवरुणनिषादचण्डालविम्बानां चेति वक्त-
व्यम् । वा

व्यासाच्च वरुणाच्चापि निषादादपि स्यादकञ् ।
चण्डालात् तथा विम्बादकञ् प्रत्यय इष्यते ॥

नय्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् । ७ । ३ । ३

नय्वाभ्यां च पदान्ताभ्यां परस्य वृद्धि रिष्यते ।
किन्तु ताभ्यां क्रमात्पूर्व मैचौ स्त आगमौ सदा ॥
व्यासस्यापत्यमित्यर्थे वैयासकिः प्रयुज्यते ।
वारुणकिश्चाण्डालकिर्नैषादकिश्च वैम्बकिः ।
सर्व एतादृशः शब्दाः प्रत्ययेऽकङि च कृते ॥

गोत्रे कुञ्जादिभ्यश्च्फञ् । ४ । १ । ९८

कुञ्जादिभ्यश्च गोत्रार्थे च्फञ् प्रत्ययो विधीयते ।

व्रातच्फञोरस्त्रियाम् । ५ । ३ । ११३

ततोव्रातच्फञन्तेभ्यःस्वार्थेञ्यःक्रियतेऽस्त्रियाम् ।
व्रातवाचिपदादेवं फञन्तेभ्यो विधीयते ॥
ञ्यः प्रत्ययःसदास्वार्थेस्त्रियां न प्रत्ययस्त्वयम् ।
गोत्रापत्यं तु कुञ्जस्य कौञ्जायनः प्रयुज्यते ॥

ब्राध्न्यायन्यस्तु ब्रध्नस्य गोत्रापत्यं प्रकीर्त्यते।
स्त्रियां कौञ्जायनीशब्दोगोत्रत्वाज्जातिङीष्तदा॥
कौञ्जिरनन्तरापत्ये रूपं सिद्ध्येदिञि कृते।

नडादिभ्यः फक् । ४ । १ । ९९

नडादिभ्यस्तु गोत्रार्थे फक् प्रत्ययो विशेषतः।
नाडायनो नडापत्यं चारायणश्चरस्य तत्॥
अनन्तरार्थमाश्रित्य नाडिश्चारिरिति भवेत्।

हरितादिभ्योऽञः । ४ । १ । १००

अजन्त हरितादिभ्यो यूनि फक् क्रियते सदा।
हरितस्य युवापत्यं हारितायन इष्यते॥
इह गोत्राधिकारेऽपि सामर्थ्याद् यूनि फग् विधिः॥

यञिञोश्च । ४ । १ । १०१

यञिञोश्चेति सूत्रेण गोत्रे यौ यञिञौ स्मृतौ।
फक्प्रत्ययस्तदन्तात्स्याद् गार्ग्यायणो दाक्षायणः॥

शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु । ४ । १ । १०२

शरद्वच्छुनकदर्भाद् भृगौ वत्से अग्रायणे।
फक् प्रत्ययो विधातव्यः अञिञोरपदादतः॥
शारद्वतायनो रूपं भार्गवश्चेत् तदा भवेत्।
शारद्वतोऽन्यभावे रूपं सिद्ध्यति दृश्यताम्॥

द्रोणपर्वतजीवन्तादन्यतरस्याम् । ४ । १ । १०३

द्रोणपर्वतजीवन्ताद् विकल्पेनैव फग्भवेत्।
द्रोणायनस्तथा द्रौणिः पार्वतिः पार्वतायनः॥
जैवन्तायन एवं हि—जैवन्ति र्पि साध्यते।

अनृष्यानन्तर्ये विदादिभ्योऽञ् । ४ । १ । १०४

गोत्रापत्येऽत्र फक्कार्यं इञ् प्रत्ययस्त्वनन्तरे।
आनन्तर्ये विदादिभ्यो गोत्रे त्वञ् प्रत्ययोऽनृषि॥

यो भवेदनृषिस्तस्मादनन्तरे च प्रत्ययः।
गोत्रापत्यं विदस्यात्र वैदो भवत्यञि कृते॥
वैदिरनन्तरे वाच्यो वाह्वादे राकृतिगणात्।
पुत्रस्यापत्यमित्यर्थे पौत्रः प्रयोग इष्यते।
दुहितुरपत्यमित्यर्थे दौहित्रः स्यादञि कृते॥

गर्गादिभ्यो यञ्। ४। १। १०५

गोत्रापत्यमित्यर्थे गर्गादिभ्यस्तु यञ् भवेत्।
गार्ग्यो वात्स्यस्तथाऽन्ये च प्रसिद्ध्यन्ति यञि कृते॥

यञञोश्च। २। ४। ६४

गोत्रे यद् यञन्तं स्यादञन्तं पदमत्र वै।
तदवयव यञञो लुंग् भवेत् किन्तु न हि स्त्रियाम्॥
तत्कृते च बहुत्वे सत्येव लुक् प्रवर्तते॥
गर्गाः वत्साः विदाः उत्साः साध्यन्ते लुग् विधानतः।

मधु बभ्र्वोर्ब्राह्मणकौशिकयोः। ४। १। १०६

मधु वभ्र्वोः प्रत्ययो यद् ब्राह्मणे कौशिकेऽर्थके।
गोत्रापत्यं मधोरत्र माधव्यो ब्राह्मणार्थकः।
माधवो ब्राह्मणाद्भिन्ने बाभ्रव्यः कौशिक ऋषिः॥

कपि बोधादाङ्गिरसे। ४। १। १०७

कपिबोधादाङ्गिरसे गोत्रे यञ् प्रत्ययो भवेत्।
काप्यो बोध्य आङ्गिरसः कापेयो बोधिरन्यतः॥

वतण्डाच्च। ४। १। १०८

वतण्डाच्चेति सूत्रेण भवेदाङ्गिरसे हि यञ्।

लुक् स्त्रियाम्। ४। १। १०९

वतण्डाच्चेति सूत्रेण विहितस्य प्रत्ययस्य लुक्।
वतण्डी शाङ्गं र वादेङिष् प्रत्यये कृते भवेत्॥
अनाङ्गिरसे वातण्ड्यायनी शब्दे च ष्फो भवेत्।

अश्वादिभ्यः फञ् । ४ । १ । ११०

**अश्वादिभ्यस्तु फञ् गोत्रापत्ये आश्वायनो भवेत् ।**

पुंसि जाते । ग० सू० ।

**पुंसि च वर्तमानाज्जातात् फञ् प्रत्ययो भवेत् ।**
**गोत्रापत्यश्च जातस्य जातायनश्च स भवेत् ॥**
**जातायाः अपत्यन्तु–जातेय एव जायते ।**

भर्गात्त्रैगर्ते । ४ । १ । १११

**भर्गशब्दाच्च त्रैगर्ते गोत्रे फञ् तस्य आनयः ।**
**सिद्धयेद्भार्गायणः शब्दो भार्गिरन्यत्र जायते ॥**

शिवादिभ्योऽण् । ४ । १ । ११२

**अण् प्रत्ययः शिवादिभ्यो गोत्रमत्र निवर्तते ।**
**शिवापत्यं भवेच्छैवः–गाङ्गो गङ्गासुतः स्मृतः ॥**
**पक्षे फिञ् स्यात्तिकादित्वाद् गाङ्गायनिः सुसाध्यताम् ।**
**शुभ्रादित्वाद् यदा ठक् स्यात् गाङ्गेयस्तु तदा भवेत् ।ः**

अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ।४।१।११३

**अवृद्धाभ्यो नदीमानुषीभ्योऽण् प्रत्ययो भवेत् ।**
**यामुनो नार्मदश्चैवं तैत्तिरः साध्यतां पुनः ॥**
**चिन्तिताया अपत्यं हि चैन्तिकः स्यादणिकृते ।**
**वृद्धो वासवदत्तेयः वैनतेयो नदी नहि ।**
**शोभनेयो न नामास्ति तस्मादेषु ढगेव नाण् ॥**

ऋष्यन्धकवृष्णिकुरुभ्यश्च । ४ । १ । ११४

**ऋष्यन्धक वृष्णि कुरुवाचिभ्यः क्रियतेऽण् सदा ।**
**ऋषयो मन्त्र द्रष्टारः, अन्धकादि कुलं स्मृतम् ॥**
**वैश्वामित्रश्च वासिष्ठः श्वाफल्कोऽन्धकः स्मृतः ॥**
**वासुदेवेऽनिरुद्धे तु वृष्णित्वादण् विधीयते ।**
**नाकुले साहदेवे च कुरुत्वादण् कृतोऽस्ति वै ॥**
**आत्रेये परत्वात् ढक् शौरौ बाह्वादिरिञ् भवेत् ।**

मातुरुत्संख्यासंभद्रपूर्वायाः । ४ । १ । ११५

संख्यासंभद्रपूर्वायाः मातुरण् प्रत्ययस्ततः ।
उदागमो भवेन्मातु र्द्वैमातुर उदाहृतः ॥
द्वयोर्मात्रोरपत्यन्तु विग्रहोऽत्र प्रदर्श्यताम् ।
षाण्मातुरः सांमातुरः स्यादेवं भाद्रमातुरः ॥
शुभ्रादिगणपाठेन द्वैमात्रेयस्तु ढक् कृते ।

कन्यायाः कनीन च । ४ । १ । ११६

अण् प्रत्ययश्च कन्यायाः कनीनादेश इत्यपि ।
कन्याया अपत्यमिति कानीनो व्यास उच्यते ॥
नृपः कर्णोऽपि कानीनः अनूढापत्यतः स्मृतः ।

विकर्ण शुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ।४।१।११७

वत्से तथा भरद्वाजे अत्रौ च क्रमशोऽन्वितात् ।
विकर्णात् शुङ्गशब्दाच्च छगलादण् विधीयताम् ॥
विकर्णस्य अपत्यन्तु वैकर्णो वात्स्यबोधने ।
वैकर्णिरन्यतात्पर्ये एवमग्रेऽपि बुध्यताम् ॥
शुङ्गस्य च अपत्यं वै शौङ्गो भारद्वाज इति ।
शौङ्गि रन्यत्र तात्पर्ये आत्रेयश्छागलो भवेत् ॥

पीलाया वा । ४ । १ । ११८

अण् प्रत्ययस्तु पीलाया विकल्पेनात्र जायते ।
अपत्येऽणि कृते पैलः पैलेयोऽपि ढकि कृते ॥

ढक् च मण्डूकात् । ४ । १ । ११९

मण्डूकात् ढगपत्ये स्याद् भवेता मणिञौ पुनः ।
माण्डूकेयश्च माण्डूको माण्डूकिरपि साध्यताम् ॥

स्त्रीभ्यो ढक् । ४ । १ । १२०

स्त्रीवाचिनश्च शब्दात् ढक् प्रत्ययो विधीयते ।
विनताया अपत्यं हि वैनतेयः प्रसिद्ध्यति ॥
सौमित्रिरस्य बाह्वादौ पाठेन सिद्धिरूह्यताम् ।

द्व्यचः । ४ । १ । १२१

द्व्यचश्शब्दादपत्यार्थे ढक् प्रत्ययो विधीयते।
दत्ताया अपत्यश्च दात्तेयः कथ्यते बुधैः।
सापत्नस्तु शिवादित्वादण् प्रत्ययविधानतः ॥
पृथायाः स्यादपत्यं हि पार्थस्तस्येदमण् कृते।

इतश्चानिञः । ४ । १ । १२२

इकारान्ताद् द्व्यचोऽपत्ये ढक् प्रत्ययस्तु जायते।
नत्वञन्तादिति ज्ञेयं दौलेयो नैधेय इति ॥

शुभ्रादिभ्यश्च । ४ । १ । १२३

शुभ्रादिगणशब्देभ्यो ढक् प्रत्ययस्तु जायते।
शौभ्रेयो वैधनेयश्च मार्कण्डेयस्तथा भवेत् ॥

प्रवाहणस्य ढे । ७ । ३ । २८

प्रवाहणस्य वा वृद्धि रपत्यार्थे च ढपरे।
तस्मात् प्रावाहणेयः स्यात् प्रवाहणेय इत्यपि ॥

तत्प्रत्ययस्य च । ७ । ३ । २९

प्रवाहणस्य ढान्तस्य उत्तरपदस्य च इह।
आदेरचोभवेद् वृद्धिः पूर्वपदस्य वा खलु ॥
प्रावाहणेयि रित्युक्तः प्रवाहणेयि रित्यपि ॥

स्पष्टता—

ढक् प्रत्ययान्ताद्बहिर्भूतो य इञ् तन्निमित्ता वृद्धिर्ढाश्रयेण विकल्पेन बाधितुं न शक्यते इति सूत्रारम्भः।

विकर्ण कुषीतकात् काश्यपे । ४ । १ । १२४

कुषीतकाद् विकर्णाच्च ढगपत्ये विधीयते।
कौषीतकेय इत्येवं वैकर्णेय उच्यताम् ॥
अपत्यादन्यतात्पर्ये वैकर्णिः कौषीतकिः ॥

भ्रुवो वुक् च । ४ । १ । १२५

भ्रुवो ढक् प्रत्ययो वुक् च भ्रौवेयश्च पदं ततः ।

कल्याण्यादीनामिनङ् । ४ । १ । १२६

कल्याणादिषु ये शब्दास्तेभ्यो ढक् स्यादिनङ् पुनः ।
रूपं कल्याणिनेयः स्याद् वान्धकिनेय इत्यपि ॥

कुलटाया वा । ४ । १ १२७

कुलटाया विकल्पेन इनङ् स्यादितिकथ्यताम् ।
ढक् प्रत्ययस्तु पूर्वेण सिद्ध्यतीति विमृश्यताम् ॥
कुलटाया अपत्यार्थे कौलटिनेय इष्यते ।
कौलटेयोऽपि वक्तव्य इनङ् यदा न जायते ॥
रूपद्वयं तदैवेदं कुलटा भिक्षुकी सती ।
या स्त्री तु व्यभिचारार्थं कुलान्यटत्ति तत्र च ॥
क्षुद्राभ्योढगित्येव कौलटेरश्च तत्सुतः ॥

हृद्भगसिन्ध्वन्ते पूर्वंवदस्य । ७ । ३ । १९

हृद्भगसिन्धुशब्दान्ते ञिनि णिति किति परे ।
पूर्वोत्तरपदे वृद्धिरादेरचस्तु जायते ॥
सौहार्दः सुहृदोऽपत्यं सौभागिनेय ऊह्यताम् ।
सक्तुसिन्धौ भवस्तत्र साक्तुसैन्धव इष्यते ॥

चटकाया ऐरक् । ४ १ । १२८

ऐरग् भवति चटकाया अपत्यार्थे विशेषतः ।

चटकस्येति वक्तव्यम् । वा

चटकादपि स्यादैरक् तद्धितोऽयमिति स्मरेत् ।
चटकस्य चटकाया अपत्यं चैटकैर इति ॥

स्त्रियामपत्ये लुग् वक्तव्यः । वा

अपत्ये स्त्रियि लुग् वाच्यः स्त्र्यपत्यं चटका तयोः ।
अजादिगणपाठेन टाप् प्रत्ययस्तु जायते ॥

गोधाया ढ्रक् । ४ । १ ।१२९

गोधाया ढ्रगपत्येस्याद् गोधेरः पक्षतस्त्विह ।
गोधेयो ढकि जायेत शुभ्रादिगणपाठतः ॥

आरगुदीचाम् । ४ । १ । १३०

उदीचां मतमाश्रित्य गोधाया आरगत्र वै ।
गोधारः किल जाडारः पाण्डार आदि जायते ॥
रका सिद्धेऽत्र आकारोच्चारणादन्यतो विधिः ।

स्पष्टता—

अत्र गोधाया अपत्यम् जडस्यापत्यम् पण्डस्यापत्यमितिक्रमेण विग्रहः ।

अत्रशङ्का—

पण्डो नपुंसकः प्रोक्तस्तस्यापत्यं कथं भवेत् ? ।
कृत्रिमादिति वक्तव्यमुत्तरं संशयस्य वै ॥

क्षुद्राभ्यो वा । ४ । १ । १३१

क्षुद्राभ्यो ढ्रण् ढकौ वाच्यौ अङ्गशीले विनाऽभ्य इह ।
काणेरः किल काणेयो दासेरो दासेय इति ।
क्षुद्रजन्तुरनस्थिस्यादथवाक्षुद्रजन्तवः ॥

पितृष्वसुश्छण् । ४ । १ । १३२

पितृष्वसुरपत्यन्तु पैतृष्वस्रीय उच्यते ।

ढकि लोपः । ४ । १ । १३३

पितृष्वसुस्तु ढक् पक्षे तस्येयादेश कार्यतः ।
अन्त्यलोपविधानेन पैतृष्वसेय उच्यते ॥
पितृष्वसुरपत्यं हि विग्रहोऽत्र प्रदर्श्यताम् ।

मातृष्वसुश्च । ४ । १ । १३४

मातृष्वसुस्तदेवस्याद् यदुक्तं च पितृष्यसुः ।
पक्षेऽत्र मातृष्वस्रीयो मातृष्यसेय इत्यपि ॥

चतुष्पाद्भ्यो ढञ् । ४ । १ १३४

चतुष्पाद्भ्यो ढञपत्ये जायते ढस्य एय इति ।

ढे लोपोऽकद्र्वा । ६ । ४ । १४७

ढे परे भस्य लोपः स्यात् कद्रुभिन्नान्तकस्य च ।
उवर्णान्तस्य भस्यात्र कामण्डलेय इष्यते ॥
चतुष्पाज्जातिमध्येतु कमण्डलू रुदाहृतः ॥

गृष्टयादिभ्यश्च । ४ । १ । १३६

गृष्टयादिभ्यो ढञपत्ये अण् ढकोऽपवादतः ।
सकृत् प्रसूता गौर्गृष्टिर्गार्ष्टेयस्तदपत्यमिति ।
हार्षेयः खलु हालेयः वालेयः काद्रेय इति ॥

केकयमित्रयुप्रलयानां यादेरियः । ७ । ३ । २

ञिति णिति किति क्वापि प्रत्यये तद्धिते परे ।
केकयस्य मित्रयोश्च प्रलयस्य यादेरियः ॥

प्राप्नोति तन्निषिध्यात्र दाण्डिनायन सूत्रतः ॥
सर्वं कार्यं निपातेन दाण्डिनायन आदिवत् ।

दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ६ । ४ । १७४

एतानि च निपात्यन्ते विभिन्नकार्यप्रत्ययात् ।
दण्डिनोऽपत्यमित्यत्र दाण्डिनायन उच्यते ॥
दण्डिन् फक् टिलोपश्च निपातनाद्भविष्यति ।
हास्तिनायन इत्यत्र हस्तिनोऽपत्य विग्रहे ॥
अथर्वणमधीते य आथर्वणिकः स भवेत् ।
जैह्माशिनेय इत्येवं रूपं जिह्माशिनः सुते ॥
मित्रयोश्च अपत्यं यः स मैत्रेयो युलोपतः ।
वाशिनोऽपत्यमित्यर्थे वाशिनायनिरुच्यताम् ॥

भ्रौणहत्यश्च धैवत्य ऐक्ष्वाकश्च हिरण्मयम् ।
सारवः स्यात् सरय्वां भवमेवं निगद्य च ॥

एकादश इमे शब्दा दाण्डिनायनकाः स्मृताः ।
यथातथं निपातेन साध्यन्ते पण्डितैरिह ॥

यस्कादिभ्यो गोत्रे । २ । ४ । ६३

एभ्योऽपत्य प्रत्ययस्य लुग्भवेन् न स्त्रियामिदम् ।
तत्कृते च बहुत्वे हि लुगनेन विधीयते ।
मित्रयोः स्युरपत्यानि मैत्रयवः कृते लुकि ॥

अत्रिभृगुकुत्सवसिष्ठगौतमाङ्गिरोभ्यश्च । २ । ४ । ६४

अत्रेर्भृगोरत्र वशिष्ठनाम्नः
कुत्साङ्गिरोभ्यामथ गौतमाच्च ।
परस्य गोत्रस्य च प्रत्ययस्य
लुक् स्याद् बहुत्वे किल पुंसि भावे ॥

अत्रयो भृगवः कुत्सा वशिष्ठा गौतमाः पुनः ।
अङ्गिरसः प्रयोगाः स्यु रपत्यार्थप्रदाः सदा ॥

बह्वच इञः प्राच्यभरतेषु । २ । ४ । ६६

प्राच्यगोत्रे च भरते बह्वच्छब्दादिञोऽस्तु लुक् ।
तद्धितेऽपि कृते रूपं पन्नागारा युधिष्ठिराः ॥
तत्कृते च बहुत्वेहि लुग् भवेन्न स्त्रियामिह ।

न गोपवनादिभ्यः । ६ । ४ । ६७

नहि गोपवनादिभ्यो गोत्रस्य प्रत्ययस्य लुक् ।
तस्माद्रूपं प्रयोक्तव्यं गोपवनाश्च शैग्रवाः ॥

तिककितवादिभ्यो द्वन्द्वे । २ । ४ । ६८

द्वन्द्वे तिककितादिभ्यो गोत्रप्रत्ययलुग् बहौ ।
तैकायनश्च कैतवायनश्च इति द्वन्द्वतः ॥
तिकादिभ्यस्ततः फिञ् स्यात् तिककितवा लुकिकृते ।

उपकादिभ्योऽन्यतरस्यामद्वन्द्वे । २ । ४ । ६९

उपकादिगणीयेभ्यो गोत्रप्रत्ययलुग् बहौ ।
द्वन्द्वेऽद्वद्वे विकल्पेन प्रयोगो दृश्यतामधः ॥
उपकलमका औपकायनलामकायनाः ।
औपकायनाश्च लाभकायनाश्चात्र विग्रहः ॥
भ्राष्टकिकापिष्ठलयः लमकाः लामकायनाः ॥

आगस्त्य कौण्डिन्ययोरगस्तिकुण्डिनच् ।२।४।७०

आगस्त्यादथ कौण्डिण्याद् गोत्रेऽणो यञश्च लुक् ।
यथासंख्यन्तु प्रकृतेः स्यातामगस्तिकुण्डिनौ ॥
गोत्रापत्यमागस्त्यस्य अगस्तय इति भवेत् ।
कौण्डिन्यस्य च अपत्यं कुण्डिना इति युज्यते ॥

राजश्वशुराद्यत् । ४ । १ । १३७

राजस्वशुरशब्दाभ्यां यत्प्रत्ययस्तु जायते ।

राज्ञो जातावेवेति वाच्यम् । वा

जातिरर्थस्तु तस्माद्यदि प्रकृत्याऽनुभूयते ।

ये चाभावकर्मणोः । ६ । ४ । १६८

जातावर्थे प्रकृत्या स्यादन्निह प्रत्यये च ये ।
राज्ञोऽपत्यन्तु राजन्यः क्षत्रियार्थे प्रयुज्यते ॥
श्वशुरस्यापत्यमित्यर्थे श्वशुर्यः श्यालको भवेत् ।

अन् । ६ । ४ । १६७

अन् प्रकृत्या भवेदत्र प्रत्ययेऽणीति कथ्यताम् ।
राज्ञः कर्म च भावो वा राज्यं टिलोपतो भवेत् ॥
यत्प्रत्ययः पूर्वसूत्रादत्र न किन्तु ष्यञ् भवेत् ।

संयोगादिश्च । ६ । ४ । १६६

संयोगादिश्च सूत्रेण इन् प्रकृत्या भवेदणि ।
चक्रिणोऽपत्यमित्यत्र चाक्रिणो रूपमिष्यते ॥

न मपूर्वोऽपत्येऽवर्मणः ६ । ४ । १७०

मपूर्वकोऽन् प्रकृत्या न भवेदणि च तद्धिते ।
भद्रसाम्नोऽपत्यमत्र भाद्रसामः प्रयुज्यते ।
सुत्वनोऽपत्यमित्यत्र अपूर्वो नहि सौत्वने ॥

चार्मणो रथ इत्यत्र परिवृतार्थकोऽणभूत् ।
वर्मणस्तुनिषेधेन चाक्रवर्मण एवहि ॥

वा हितनाम्न इति वाच्यम् । वा

प्रकृत्या हितनाम्नो वा अपत्येऽणि विधीयते ।
हितनाम्नोऽपत्यं हैतनामः स्याद्धैतनामनः ॥

ब्राह्मोऽजातौ । ६ । ४ । १७१

ब्राह्मोऽजाताविति सूत्रे छेदोऽजाताविति पृथक् ।
अणि जातौ टिलोपो न ब्रह्मणोऽपत्यं ब्राह्मणः ॥
अपत्यार्थेन भिन्ने तु ब्राह्मी औषधिरिष्यते ।

औक्षमनपत्ये । ६ । ४ । १७३

अनपत्ये हिलोपोऽणि प्रत्ययेऽत्रनिपात्यते ।
औक्षं पदं ततो जातम् उक्षण इदञ्च विग्रहः ॥
उक्ष्णोऽपत्यं विग्रहेतु परसूत्रेण औक्ष्ण इति ।

षपूर्वहन्धृतराज्ञामणि । ६ । ४ । १३४

षपूर्वहन्धृतराज्ञा मणि लोपस्तु स्यादनः ।
हनादेर्नस्य लोपोऽणि स्यादकारस्य निश्चयात् ॥
उक्ष्णोऽपत्यं भवेदौक्ष्णस्ताक्ष्णो भ्रौणघ्न इत्यपि ।
अपत्यं धृतराज्ञस्य धार्तराज्ञः सुसिद्धयति ॥
साम्नोऽपत्यं सामनः स्यात् षपूर्वेति निवेशनात् ।
ताक्षण्योऽपिभवेदेव सूत्रेऽणि च निवेशनात् ॥

क्षत्राद्घः । ४ । १ । १३८

क्षत्राद्घः प्रत्ययो जातौ क्षत्रियः क्षात्रिरन्यकः ।

कुलात् खः । ४ । १ १३९

कुलात् खः प्रत्ययस्तेन कुलीनः साध्यते पदम् ।
तदन्तादपि खः प्रोक्त आढचकुलीन इष्यते ॥

अपूर्वपदादन्यतरस्यां यड्ढकञौ । ४ । १ । १४०

विभाषा स्यादपूर्वपदात् कुलात्तु यड्ढकञ् द्वयम् ।
कुल्यः कौलेयकः प्रोक्तः कुलीनार्थस्य बोधकः ।

महाकुलादञ्खञौ । ४ । १ । १४१

महाकुलाद् भवेतां वा प्रत्ययावञ्खञौ च द्वौ ।
माहाकुलस्तथा माहाकुलीनः सज्जनो भवेत् ।
पक्षे खः प्रत्ययस्तस्मान् महाकुलीन इत्यपि ॥

दुष्कुलाड्ढक् । ४ । १ । १४२

दुष्कुलाड् ढक् प्रत्ययः स्याद् दौष्कुलेयः प्रयुज्यते ।
दुष्कुलीनोऽपि खे जाते प्रयोगः क्रियते बुधैः ॥

स्वसुश्छः । ४ । १ । १४३

स्वसुश्छः प्रत्ययो नित्यं स्वस्रीयो भगिनीसुतः ।

भ्रातुर्व्यच्च । ४ । १ । १४४

भ्रातुर्व्यत्प्रत्ययः पक्षे छः प्रत्ययोऽपि जायते ।
भ्रातुव्यो भ्रातृपुत्रः स्याद् भ्रात्रीयोपि प्रयुज्यताम् ॥

व्यन्त्सपत्ने । ४ । १ । १४५

भ्रातुर्व्यन् सपत्नेऽर्थे भ्रातृव्यशशत्रुरुच्यते ।

रेवत्यादिभ्यष्ठक् । ४ । १ । १४६

ठस्येकः ७ । ३ । ५०

अङ्गात्परस्य ठस्येको जायते तद्धितस्य च ।
रेवत्यादेष्ठगेवात्र तस्येकश्च विधीयते ॥
रेवत्याश्च यदपत्यं रैवतिकः स उच्यते ।

गोत्रस्त्रियाः कुत्सने ण च । ४ । १ । १४७

गोत्र स्त्रियाः कुत्सने णः ठगपि क्रियते ततः ।
गार्ग्या अपत्यमित्यर्थे गार्गो जाल्मोऽस्ति गार्गिकः ॥

वृद्धाट्ठक् सौवीरेषु बहुलम् । ४ । १ । १४८

वृद्धाट्ठक् च सौवीरे बहुलं निन्दितार्थके ।
भागवित्तिस्तु सौवीर स्तस्माट्ठक् भागवित्तिकः ॥
पक्षे फक् स्यात् तदा भागवित्तायनः प्रयुज्यते ।

फेश्छ च । ४ । १ । १४९

सौवीरगोत्रफिञन्तादपत्ये छो भवेच्च ठक् ।
अपत्यन्तु यमुन्दस्य यामुन्दायनिरुच्यते ।
फिञ् प्रत्ययस्तिकादित्वाज्जायते च यदा ततः ।
निन्दिते छठकौस्यातां यामुन्दायनीय इति ।
यामुन्दायनिकश्चापि-प्रयोगः साध्यतां क्रमात् ॥

फाण्टाहृतिमिमताभ्यां णफिञौ । ४ । १ । १५०

फाण्टाहृतिमिमताभ्यां सौवीरे ण फिञावुभौ ।
फाण्टाहृतस्तु णेजाते फिञि फाण्टाहृतायनिः ॥
अपत्यं मिमतायाश्च मैमतो मैमतायनिः ।

कुर्वादिभ्यो ण्यः । ४ । १ । १५१

कुर्वादिभ्यस्त्वपत्यार्थे ण्यः प्रत्ययो विधीयते ।
कौरव्याः ब्राह्मणाः प्रोक्ता वावदूक्या विगर्हिताः ॥

सम्राजः क्षत्रिये । वा

सम्राजः क्षत्रियार्थे ण्यः साम्राज्यो राजनन्दनः ।
साम्राजोऽन्यतात्पर्ये प्रयोगः क्रियतां पुनः ।

सेनान्तलक्षणकारिभ्यश्च । ४ । १ । १५२

सेनान्तात्ण्यो लक्षणाच्च कारिवाचकतोऽपि ण्यः ।
हारिषेण्यश्च लाक्षण्यः नापित्यः कौम्भकार्य इति ॥

उदीचामिञ् । ४ । १ । १५३

उदीचांमतमाश्रित्य भवेदिञ् तेन लाक्षणिः ।
हारिषेणिः कौम्भकारिर्नापिताग्नापितायनिः ॥

तक्षणोऽण उपसंख्यानम् । वा

तक्षणोऽण उपसंख्यानं ताक्षणस्ताक्षण्य इत्यपि ।

तिकादिभ्यः फिञ् । ४ । १ । १५४

फिञ् प्रत्ययस्तिकादिभ्य स्तैकायनिरुदाहृतः ।

कौशल्य कार्मार्याभ्यां च । ४ । १ । १५५

आभ्यां फिञ् प्रत्ययोऽपत्ये इञोपवादतोभवेत् ।
परमप्रकृतेरेव अयश्च प्रत्ययो भवेत् ।
प्रत्ययस्य च संयोगात् प्रकृतिरूपं निपात्यते ॥

कौशल्यायनि रित्येवं कार्मार्यायणिरुच्यते ।
प्रत्ययसंनियोगेन सिद्धयति प्रकृतिद्वयम् ॥
कुशलस्य कर्मारस्य अपत्यमितिविग्रहः ।
कौशल्य कार्मार्यश्च ताभ्यां फिञत्र कथ्यते ॥

छागवृषयोरपि । वा

छागायनिस्तु छागात् स्यात् फिञ् प्रत्यय विधानतः ।
वार्ष्यायणिर्वृषादत्र फिञ् प्रत्यये कृते सति ॥

अणो द्व्यचः । ४ । १ । १५६

इञोऽपवादतोऽपत्ये फिञ् प्रत्ययोद्व्यचस्त्वणः ।
कार्त्रायणिश्च कार्त्रस्यापत्यमत्र निगद्यते ॥

अणः किमुच्यते ? तत्र दाक्षायण उदाहृतः ।
द्व्यचः किं?तत्र वक्तव्यमौपगविरिति पदम् ॥

त्यदादीनां फिञ् वा वाच्यः । वा

त्यदादीनाञ्च फिञ्वा स्यात् त्यादस्त्यादायनिरिति ।

उदीचां वृद्धादगोत्रात् । ४ । १ । १५७

उदीचां फिञ् भवेद् वृद्धादगोत्रादिति बुध्यताम् ।
आम्रगुप्तायनि रेव माम्रगुप्तिस्तु प्राङ्मते ।।

वाकिनादीनां कुक् च । ४ । १ । १५८

अपत्ये वाकिनादीनां फिञ् वा कुगागमोऽपि च ।
अपत्यं वाकिनस्यात्र वाकिनायनि रिष्यते ।
वचनं वाक आख्यातः सोऽस्यास्तीति वाकिनः ।
फिञभावे तु रूपं स्यात् वाकिनिरिति पक्षतः ।

पुत्रादन्यतरस्याम् । ४ । १ । १५९

पुत्रात् फिञ् विकल्पेन कुगागमोऽपि जायते ।
स्याद् गार्गीपुत्रकायणि गार्गीपुत्रायणिरपि ।।

प्राचामवृद्धात् फिन् बहुलम् । ४ । १ । १६०

बहुलंफिनवृद्धात् स्यात् प्राचाञ्च ग्लुचुकायनिः ।

मनोर्जातावञ्यतौ षुक् च । ४ । १ । १६१

षुगागमेन सहितावाञ्यतौ स्तो मनोरिह ।
समुदायेन जातिश्चेत् मानुषः स्यान्मनुष्य इति ।।
जातिशब्दाविमौ प्रोक्तौ मनुष्यो मानव इति ।

अत्रविशेषः—

अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्धन्यस्तेन सिद्ध्यति माणवः ।।

जनपदशब्दात् क्षत्रियादञ् । ४ । १ । १६८

जनपदार्थकादेवं क्षत्रियार्थादपि पुनः ।
भवेदञ् प्रत्ययोऽपत्ये ऐक्ष्वाकः स्याट्टिलोपतः ।।

क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् । वा ।

क्षत्रियसमानशब्दाज्जनपदादपि प्रत्ययः ।
राजन्यपत्यवत्तस्य पाञ्चालः साध्यते ततः ।।
पञ्चालानां भवेद्राजा स पाञ्चालस्तु कथ्यते ।

पूरोरण् वक्तव्यः । वा

पूरोरण् प्रत्ययोऽपत्ये पौरवश्च प्रयुज्यते ।

पाण्डोर्ड्यण् । वा

पाण्डो र्ड्यण् भवेदत्र पाण्ड्यः पाण्डो रपत्यकम् ॥

शाल्वेय गान्धारिभ्यां च । ४ । १ । १६९

शाल्वेयादथ गान्धारे रञ् प्रत्ययो विधीयते ।
शाल्वेयः किल गान्धारो राजन्येपि समानकम् ।

द्व्यञ्मगधकलिङ्गसूरमसादण् । ४ । १ । १७०

द्व्यचो मगधशब्दाच्च कलिङ्गसूरमसादपि ।
अण् भवेदाङ्गवाङ्गादि द्व्यच्त्वादेव प्रसाध्यते ॥
मागधः किल कालिङ्गः सौरमसो भवेदणि ॥

वृद्धेत्कौशलाजादाञ्ञ्यङ् । ४ । १ । १७१

ञ्यङ्भवेद् वृद्धनाम्नस्तु इदन्तात्कोसलादपि ।
अजादावपि कर्तव्यः पश्योदोहरणान्यधः ॥
वृद्धा वाम्बष्ठच सौवीर्यौं आवन्त्यः स्यादिदन्ततः ।
कौसल्यः पुनराजाद्यः साध्यन्ते च ञ्यञि कृते ॥

कुरुनादिभ्यो ण्यः । ४ । १ । १७२

ण्यो भवेत् कुरुनादिभ्यः कौरव्यो नैषध्य इति ।
प्रयोगो नैषधः काव्ये शैषिकेऽणि कृते भवेत् ।

साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ।४।१।१७३

साल्वो जनपदस्तस्यावयवाच्च उदुम्बरात् ।
प्रत्यग्रथात्कलकूटादाश्मकादिञ् विधीयते ॥
औदुम्बरिः प्रात्यग्रथिः कालकूटिस्तथाऽऽश्मकिः ।

ते तद्राजाः । ४ । १ । १७४

अजादयस्तु तद्राजसंज्ञकाः सन्ति तद्धिते ।

तद्राजस्य बहुषु तेनैवास्त्रियाम् । २ । ४ । ६२

बहुष्यर्थेषु तद्राजप्रत्ययस्य लुगस्त्रियाम् ।
बहुत्वं यदि तद्राजप्रत्ययान्तेन कथ्यते ॥
इक्ष्वाकवश्च पाञ्चाला इत्यादौ तद्धितस्य लुक् ।

अत्र फक्किका—( शङ्का-समाधानम् )

तस्यामेव रघोः पाण्ड्याः कौरव्याः पशव इति ।
कालिदासप्रयोगोऽयं कथं जातस्तदुत्तरम् ॥
पाण्ड्ये साधुश्च कौरव्ये विग्रहेणात्र यद्विधिः ।

एवमेव—

रघूणामन्वयं वक्ष्ये रुद्धास्ते यदुभिः पुनः । शङ्का—
राघवाणां यादवानामर्थेऽत्र लक्षणा स्मृता ॥ उ० ॥

स्पष्टता—

लक्षणायां सत्यामिह रघोरस्य राघवाणां, यदुभिरस्य यादवैरित्यर्थेन उत्कर्षत्वादपत्येऽत्र न प्रत्यय इति ।

कम्बोजाल्लुक् । ४ । १ । १७५

कम्बोजादपि लुक्कार्यं तद्राजप्रत्ययस्य वै ।
कम्बोजः किल कम्बोजौ प्रत्ययस्यात्र लुग् भवेत् ॥

कम्बोजादिभ्य इति वक्तव्यम् । वा

चोलः शकः प्रयोगोऽथ केरलो यवनस्तथा ।
कम्बोजादिगणे पाठाल्लुग् विधानेन सिद्ध्यति ॥

स्त्रियामवन्तिकुन्तिकुरुभ्यश्च । ४ । १ । १७६

स्त्रियामवन्तिकुन्तिभ्यां कुरोस्तद्राजलुग् भवेत् ।
अवन्ती साध्यते कुन्ती तद्धिते लुकि ङीष् स्त्रियाम् ।
कुरौ भवाः कुरूर्ज्ञेया लुक्कृते ऊङ्विधीयते ॥

अतश्च । ४ । १ । १७७

अतश्चेति च सूत्रेण तद्राजाऽकारलुक् स्त्रियाम् ।
शूरसेनी तथा मद्री भवार्थके च प्रत्यये ॥

**अत्र विशेषः—**

माद्रीसुतौ प्रयोगस्तु काव्ये यः क्वापि दृश्यते ।
तत्र ह्रस्वो विधातव्यो भर्गादित्वं करोतु वा ॥
भर्गादित्वान्न लुक् कार्यं भवति दृश्यतामधः ।

न प्राच्यभर्गादियौधेयादिभ्यः । ४ । १ । १७८

प्राच्यभर्गादियोधेयादिभ्यः परस्य लुङ् नहि ।
तद्राजस्य भवेदत्र पाञ्चाली मागधी तथा ॥
आङ्गीवाङ्गी च वैदर्भी प्राच्या एताः प्रदर्शिताः ।
भार्गी कारुशी कैकेयी भर्गादिषु प्रदर्शिताः ॥
केकयी स्यात्तु पुंयोगे जन्यजनकभावतः ।
यौधेयी खलु शौभ्रेयी द्वयचो ढक् प्रत्यये कृते ॥

अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ।४।१।७८

अणिञोरनार्षयोरत्र गुरूपोत्तमयोः खलु ।
ष्यङादेशः स्त्रियां कार्यः कौमुदगन्ध्या साध्यताम् ॥
कुमुदगन्धेरपत्यं स्त्री अत्राणः ष्यङ् कौमुदगन्ध्या ।
यङश्चाब्जायते ज्ञेयं कौमुदगन्ध्या साधने ॥
वाराह्यापि भवेदेवमिङः ष्यङि कृते स्मर ।

गोत्रावयवात् । ४ । १ । ७९

गोत्रावयवा गोत्राभिमता एव स्मृता इह ।
कुलाख्यास्तत्र गोत्रे यौ विहितावणिञौ स्त्रियाम् ॥
ष्यङादेशस्तयोरत्र जायते दृश्यतामधः ।
पौणिक्या अथ भौणिक्या प्रयोगद्वयमिष्यते ॥

क्रौड्यादिभ्यश्च । ४ । १ । ८०

क्रौड्यादिभ्यः स्त्रियां ष्यङ्स्यात् क्रौड्या व्याड्या च साध्यते ।

सूत युवत्याम् । ग. सू. ।

सूतात् ष्यङ् युवत्यां स्यात् सूत्या च युवती स्मृता ।
सूतजाति स्त्रियामर्थे-सूती शब्दे च ङीष् भवेत् ॥

भोज क्षत्रिये । ग. सू.

भोजात् ष्यङ्क्षत्रिये स्याद् भोज्या सा भोजयेत्तु या ।

दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम् । ४ । १ । ८१

एभ्यश्चतुर्भ्यः ष्यङ् वा स्यादगोत्रार्थमिदं कृतम् ।
गोत्रार्थेऽपि च जायेत परत्वादिति बुध्यताम् ॥
दैवयज्ञ्या दैवयज्ञी शौचिवृक्ष्यादयः स्मृताः ।
पक्षे इतो मनुष्यजाते रिति सूत्रेण ङीष् भवेत् ॥

इत्यपत्याधिकारः



# अथतद्धितेषु रक्ताद्यर्थकाः

तेन रक्तं रागात् । ४ । २ । १

तेन रक्तमिति प्रोच्य प्रत्यया रङ्गवाचकात् ।
अण् ठक् ढगादयः प्रोक्ता रक्ताद्यर्था इमे स्मृताः ॥

अथवा—

तृतीयान्तात्समर्थाद्धि रञ्जकद्रव्यवाचकात् ।
भवेयुः प्रत्यया येऽत्र ते रक्तादिगण स्मृताः ॥
कषायेण तु यद्रक्तं काषायं स्यादणिकृते ।
मञ्जिष्ठेन रक्तमर्थे माञ्जिष्ठं वस्त्रमादि च ॥

लाक्षारोचनाट्ठक् । ४ । २ । २

लाक्षारोचनशब्दाभ्यां ठस्येकश्च विधीयते ।
लाक्षया रक्तमित्यर्थे लाक्षिकं वस्त्रमादि च ॥
रोचनेन तु यो रक्तो रोचनिकः पटः स च ।

शकल कर्दमाभ्यामुपसंख्यानम् । वा

शकल कर्दम शब्दाभ्या मपि ठक् प्रत्ययो भवेत् ।
ठस्येकोऽस्य च लोपेन शाकलिकः कार्दमिकः ॥
आभ्यामणपि जायेत शाकलः कार्दमः पुनः ।

नील्या अन् । वा

नील्या रक्तं तु नीलं स्यान् नील्या अन्निह जायते ।
औषधीनां विशेषस्तु नीलीशब्देन बुध्यताम् ॥

पीतात्कन् । वा

पीतात् कन् क्रियते तेन रक्तमर्थे च पीतकम् ।

हरिद्रामहारजनाभ्याम् । वा

हरिद्रया रक्तमर्थे हारिद्रं वस्त्रमादि च ।
महारञ्जनतो रक्तं माहारञ्जनमञि भवेत् ॥

नक्षत्रेण युक्तः कालः । ४ । २ । ३

नक्षत्रेण युक्तः कालः स्यादणादिस्तु प्रत्ययः ।
पुष्येण युक्त मित्यर्थे-पौषमहः प्रकीर्तितम् ।।
युक्ता पुष्येण या रात्रिः सा पौषी कथ्यते बुधैः ।
अत्रि प्रत्यये यलोपादि विधि रत्र विमृश्यताम् ।

लुबविशेषे । ४ । २ । ४

लुबविशेषे सूत्रेण पूर्वेण विहितस्य लुप् ।
अद्य पुष्पः प्रयोगस्तु स्यात्तद्धितस्य लुप्कृते ।।
पुष्ययुक्ता पौर्णमासी पौषी तु ज्ञापकाद्भवेत् ।

संज्ञायां श्रवणाश्वत्थाभ्याम् । ४ । २ । ५

श्रवणाश्वत्थशब्दाभ्यां संज्ञायां प्रत्ययस्य लुक् ।।
श्रवणा रात्रिरश्वत्थो मूहूर्त्तस्तेन सिद्ध्यति ।।
संज्ञया यदि भिन्नोऽर्थ आश्वत्थी श्रावणी तदा ।
विशेषार्थोऽयमारम्भः क्रियते शब्दसाधने ।।

द्वन्द्वाच्छः । ४ । २ । ६

द्वन्द्वाच्छः स्यात्तु नक्षत्राद् विशेषे सत्यसत्यपि ।
तिष्यपुनर्वसवीयमहस्त्वेतत्तु सिद्ध्यति ।।
एवं राधानुराधीया रात्रि रिति प्रसिद्ध्यति ।

दृष्टं साम । ४ । २ । ७

दृष्टं साम यदा तेन विग्रहः स्यात्तदा च अण् ।
यद् दृष्टं वशिष्ठेन वासिष्ठं साम तद्भवेत् ।।
दृष्टमुशनसा साम औशनसमुच्यताम् ।

अस्मिन्नर्थेऽण् डिद् वा वक्तव्यः । वा
औशनश्च भवेत् पक्षे डित्वाट्टिलोपकार्यतः ।।

कलेर्ढक् । ४ । २ । ८

कलेर्ढक् क्रियते दृष्टे कालेयं साम साध्यते ।
कलिना दृष्टमित्येवं विग्रहोऽत्र प्रदर्श्यताम् ।।

वामदेवाड्ड्यड्ड्यौ । ४ । २ । ९

वामदेवाद् विधीयेते ड्यड्ड्यौ तद्धितप्रत्ययौ ।
दृष्टं यद् वामदेवेन वामदेव्यं च तद्भवेत् ।

अत्रविशेषः—

सिद्धचे यस्येतिलोपेन किमर्थं ययतौ ङितौ ।
ग्रहणं मा तदर्थेऽभूद् वामदेव्यस्य नञ्स्वरे ।। इतिभाष्यम्

सारांशः—

ययतोश्चेति सूत्रेण विहितो नञ्स्वरस्त्विह ।
न स्यात्तदर्थमेवेवात्र-ङित्कार्यं प्रत्ययेकृतम् ।।

परिवृतो रथः । ४ । २ । १०

तेन परिवृतो रथः सूत्रादण् प्रत्ययो भवेत् ।
वस्त्रेण परिवृतो यः स वास्त्रोरथउच्यते ।।
तस्मादण् प्रत्ययो नात्र छात्रैः परिवृतो रथः ।

पाण्डु कम्बलादिनिः । ४ । २ । ११

इनिः स्यात्परिवृतार्थे तद्धिते पाण्डुकम्बलात् ।
पाण्डुकम्बलप्रच्छन्ने प्रयोगः पाण्डुकम्बली ।।

द्वैपवैयाघ्रादञ् । ४ । २ । १२

अञ् भवेद् द्वैपवैयाघ्राद् द्वैपो रथश्च साध्यते ।
विकारो द्वीपिनो द्वैपं तेन यः स्यात् परिवृतः ।।
अणन्तादञ् विधातव्यः, प्रकृतार्थे परिवृते ।
व्याघ्रस्य च विकारो वैयाघ्रः स्यादणि कृते ।
वैयाघ्रो रथ आख्यातः स्यादणन्तादिहाञ् पुनः ।।

कौमारापूर्ववचने । ४ । २ । १३

कौमारापूर्ववचने कौमारः स्यान्निपातनात् ।
कौमारपति रुच्येत कौमारीभार्या भवेत् ।।
पति रुपपन्नः कुमारीं प्रथमे विग्रहस्त्विह ।
कुमारी पतिमुपपन्ना द्वितीयेऽत्रास्ति विग्रहः ।।

तत्रोधृतममत्रेभ्यः । ४ । २ । १४

तत्रोद्धृतं समुच्चार्य अमत्रेभ्योऽण् विधीयते ।
शरावेउद्धृतोऽर्थेतु शराव ओदनो भवेत् ॥

स्थण्डिलाच्छयितरि व्रते । ४ । २ । १५

शयितरि व्रते वाच्ये स्थण्डिलादण्विधीयते ।
यः शेते स्थण्डिले तस्मिन् स्थाण्डिलो भिक्षुरिष्यते ॥

संस्कृतं भक्षाः । ४ । २ । १६

सप्तम्यन्तात् संस्कृतेऽर्थे भवेदण् प्रत्ययः खलु ।
संस्कृतं वस्तु भक्ष्यश्चेद् भ्राष्ट्रा यवा उदाहृताः ॥

संस्कृतोऽष्टकपालेषु अष्टाकपाल इष्यते ।
पुरोडाशोभवेदर्थो लुगण आत्वमष्टनः ॥

शूलोखाद्यत् । ४ । २ । १७

शूलोखात् संस्कृते यत्स्याच्छूल्यं शूलेन संस्कृतम् ।
उखायां संस्कृतं वस्तु भवेदुख्यं विचारय ।

दध्नष्ठक् । ४ । २ । १८

दध्नस्ठगिति वक्तव्यं दाधिकं दध्नि संस्कृतम् ।

उदश्वितोऽन्यतरस्याम् । ४ । २ । १९

उदश्वितश्च ठग् वा स्यादण् प्रत्ययोऽपि पक्षतः ।

इसुसुक्तान्तात्कः । ७ । ३ । ५१

इसुसुक्तान्तशब्देभ्यः परस्य ठस्य क इति ।
उदश्वित् तक्रमाख्यातं तत औदश्वित्क इति ॥
औदश्वितोऽपि पक्षे स्यादुदश्विति च संस्कृते ।
प्रतिपदोक्तमेवात्र गृह्यते इसुसोरिति ।
आशिषा चरतीत्यत्र आशिषिके न स्यात्ततः ॥
उषा चरति औषिकः शब्देऽपि ठस्य को नहि ।

दोष उपसंख्यानम् । वा

दोषोऽपि ठस्य कादेशो दोर्भ्यां चरति दौष्क इति ॥

क्षीराड्ढञ् । ४ । २ । २०

क्षीराड्ढञ् संस्कृतेऽर्थे स्यात् क्षैरेयी रूप मुच्यते ।

साऽस्मिन् पौर्णमासीति । ४ । २ । २१

सा-अस्मिन्निति सन्दर्श्य अण् प्रत्ययो विधीयते ।
पौषी पौर्णमासी अस्मिन् स पौषो मास उच्यते ॥
अश्वत्थादाग्रहाण्या सास्मिन्नर्थेतु ठग् भवेत् ।
आग्रहायणिको मासो मार्गशीर्षः प्रसिद्ध्यति ॥
आश्वत्थिकः प्रयोगोऽपि ठकि च प्रत्यये कृते ॥

विभाषा फाल्गुनी श्रवणा कार्तिकी चैत्रीभ्यः । ४ । २ । २३

फाल्गुन्याः श्रावणायाश्च कार्तिक्याष्ठग् विकल्पतः ।
चैत्र्याश्चापि विकल्पेन ठक् प्रत्ययोविधीयते ॥
श्रावणः श्रावणिकश्च कार्तिकिकोऽथ कार्तिकः ।
चैत्रिकश्चैत्र इत्येवं फाल्गुनिकश्च फाल्गुनः ॥
साऽस्मिन्नर्थेऽत्र ठक् प्रोक्तं पक्षेस्यादण् विधिरिह ।

साऽस्य देवता । ४ । २ । २४

अस्य सा देवता अर्थे भवेदणादि प्रत्ययः ।
इन्द्रोऽस्ति देवता अस्य ऐन्द्रं हविस्तदुच्यते ।
पाशुपतं हविस्तद्वद् बार्हस्पत्यं हविश्च तत् ॥

अत्र स्पष्टता—

त्यज्यमान द्रव्ये उद्देश्य विशेषो देवता मन्त्र स्तुत्या च ।
ऐन्द्रोमंत्रोऽपि तस्माद्धि आग्नेयो ब्राह्मणो ढका ।

कस्येत् । ४ । २ । २५

कशब्दादण् प्रत्ययःस्यादिदादेशोऽपि जायते ।
को ब्रह्मा देवता अस्य कायं हविस्तदुच्यते ॥

श्रीर्देवताऽस्य तच्छ्रायं हविरित्यपि साध्यताम् ।
यस्य लोप इति सूत्रात् परत्वादादिवृद्धिरिह ॥

शुक्राद्घन् । ४ । २ । २६

शुक्राद्घन् प्रत्ययस्तस्य इयादेशाच्च शुक्रियम् ।

अपोनप्त्रपान्नप्तृभ्यां घः । ४ । २ । २७

एभ्यो घप्रत्यय स्तस्मादपोनप्त्रियमुच्यते ।
अपान्नप्त्रियमपोनपादपान्नपाच्च निपातनात् ॥

छ च । ४ । २ । २८

छ प्रत्ययोऽपि एताभ्यामपोनप्त्रीयमादि च ।

शतरुद्राद्घश्च । वा ।

शतरुद्रादपि स्यातां घ छौ च प्रत्ययाविमौ ।
छे कृते क्षतरुद्रीयं घकृते शतरुद्रियम् ॥
शतं रुद्रा देवताऽस्य विग्रहो दर्श्यतामिह ।

महेद्राद्घाणौ च । ४ । २ । २९

महेद्राद्घो भवेदण् च छप्रत्ययोऽपि जायते ।
महेन्द्रियश्च माहेन्द्रं महेन्द्रीयं हविर्भवेत् ॥

सोमाट्टयण् । ४ । २ । ३०

सोमाट्टयण् प्रत्ययः स्याद्वै विग्रहः साऽस्य देवता ।
सोमोऽस्य देवता सौम्यं हविरत्र निगद्यते ॥
ऋचि सौमी प्रयोगः स्यादणि ङीप्च विधीयते ॥

वाय्वृतुपित्र्युषसो यत् । ४ ।.२ । ३१

वायोः ऋतोः पितुश्चैवमुषसो यद् विधीयते ।
वायव्यं स्यादृतव्यश्च उषस्यं रूप मुच्यताम् ॥

रीङृतः । ७ । ४ । २७

रीङृतः स्यादकृद्यादौ प्रत्ययेऽसार्वधातुके ।
यस्येति कृते लोपे पित्र्यं रूपं निगद्यते ॥

द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पति गृहमेधाच्छ च । ४ । २ । ३२

ग्रच्छौ च द्यावापृथिवीमरुत्व दग्नीषोमतः ।
वास्तोष्पतेर्गृहमेधादपि यच्छौ च प्रत्ययौ ॥
रूपं द्यावापृथिवीयं द्यावापृथिव्यमित्यपि ।
शुनासीर्यं शुनासीरीयं रूपं कथ्यतां द्वयम् ॥
मरुत्वत्यं मरुत्वयीयं विग्रहः साऽस्य देवता ।
अग्निषोम्य माग्निषोमीयं विग्रहः साऽस्य देवता ॥
वास्तोष्पत्यं गृहमेध्यं वास्तोष्पतीयमादि च ।
गृहमेधीयमत्रापि विग्रहः साऽस्य देवता ॥

अग्नेर्ढक् । ४ । २ । ३३

अग्ने ढंगिति वक्तव्य माग्नेयं हविरुच्यते ।

कालेभ्यो भववत् । ४ । २ । ३४

कालेभ्यो भववत् सर्वे प्रत्ययाः साऽस्य देवता ।
अर्थेऽपि प्रभवन्त्येव मासिकं प्रावृषेण्यमिति ॥

महाराजप्रोष्ठपदाट्ठञ् । ४ २ । ३५

महाराजात् प्रोष्ठपदाद् ठञ्प्रत्ययो विधीयते ।
माहाराजिकमित्येवं प्रौष्ठपदिकमिष्यते ॥

देवता द्वन्द्वे च । ७ । ३ । २१

ञिति णिति किति परे देवताद्वन्द्वतद्धिते ।
पूर्वोत्तरपदादेस्तु वृद्धिः स्यादाग्निमारुतम् ॥

नेन्द्रस्य परस्य । ७ । ३ । २२

परस्येन्द्रस्य वृद्धिर्न सोमेन्द्रस्तेन जायते ।
ऐन्द्राग्नोऽत्र परो नेन्द्रस्तस्माद् वृद्धिर्भवेदिह ॥

दीर्घाच्च वरुणस्य । ७ । ३ । २३

दीर्घात्परस्य वृद्धिर्न वरुणस्य पदस्य च ।
ऐन्द्रावरुणमित्येवं प्रयोगो जायते ततः ॥
आग्निवारुणीमनड्वाहीमालभेत भवेदिह ।
दीर्घात्परो न वरुणो वर्तते तेन हेतुना ॥

तदस्मिन् वर्तत इति नव यज्ञादिभ्य उपसंख्यानम् । वा

तदस्मिन् वर्तते चार्थे नवयज्ञादिके नहि ।
नावयज्ञिक इत्येवं पाकयज्ञिक इष्यते ॥

पूर्णमासादण् वक्तव्यः । वा

पूर्णमासादणेव स्यात् पूर्णो मासोऽस्ति यत्र सा ।
तिथिस्तु पौर्णमासी स्यात् सावधानं प्रयुज्यताम् ॥

पितृव्यमातुलमातामहपितामहाः । ४ । ३ । २६

पितृव्यो मातुलः शब्दो मातामहः पितामहः ।
निपात्यन्ते क्रमादेते ज्ञायतां दर्शितं यथा ॥

पितुर्भ्रातरि व्यत् । वा

पितुर्भ्रातरि जायेत-व्यत् व्यद्वा पितृव्य इति ।

मातुर्डुलच् । वा

मातुर्डुलच् प्रत्ययः स्यात् मातुर्भ्राता च मातुलः ।

पितरि मातृपितृभ्यां डामहच् प्रत्ययो भवेत् । वा

मातुः पिता मातामहः पितुः पिता पितामहः ।
मातरि षिद् विधीयेत मातामही पितामही ॥

अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः । वा

अवेर्दुग्धे सोढदूरमरीसचश्च प्रत्ययाः ।
अविसोढमविदूरमविमरीसमुच्यताम् ॥

तिलान्निष्फलात् पिञ्जपेजौ । वा

निष्फलार्थे तिलादत्र पिञ्जपेजौ च प्रत्ययौ ।
तिलपिञ्जस्तिलपेजो वन्ध्यस्तिलश्च कथ्यते ॥

पिञ्जश्छन्दसि डिच्च । वा

तिल्पिञ्जस्ततोरूपं डित्वाट्टिलोपकार्यतः ।

तस्य समूहः । ४ । २ । ३७

तस्य समूह इत्यर्थे भवेदण्प्रत्ययस्त्विह ।
काकानाञ्च समूहः स्यात् काकं वाकं वकस्य च ॥

भिक्षादिभ्योऽण् । ४ । २ । ३८

भिक्षादिभ्योऽण् समूहार्थे-भैक्षं भिक्षान्नमुच्यते ।
गर्भिणीनां समूहस्तु गार्भिणं रूपमणि कृते ॥

इनण्यनपत्ये । ६ । ४ । १६४

अण्यनपत्ये प्रकृत्या भवेदिन् प्रत्ययस्त्विह
युवतीनां समूहस्तु यौवनं जायते पदम् ।
शत्रन्तादनुदात्तादे रञि च यौवतंपदम् ॥

गोत्रोक्षोष्ट्रोरभ्रराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् । ४ । ३ । ३९

एभ्यश्चात्र समूहे वुञ् प्रत्ययो जायते सदा ।
गोत्रं लौकिकमेवात्र ग्राह्यं न पारिभाषिकम् ।
प्रवराध्याये परिगणितं पुत्रपौत्रादि कृत्स्नापत्यमित्यर्थः ।

युवोरनाकौ । ७ । १ । १

युवुप्रत्यययोरत्र क्रमादनो भवेदकः ।
ग्लौचुकायनीनां समूहो ग्लौचुकायनकं भवेत् ॥
उक्षाणां समूहः स्यादौक्षकं वुञि तद्धिते ।

प्रकृत्याऽके राजन्यमनुष्ययुवानः । वा

राजन्यश्च मनुष्यश्च प्रकृत्याऽके युवापि स्यात् ।
तस्माद्राजन्यकं रूपं मानुष्यकं प्रयुज्यते ॥
आपत्यस्य चेति यलोपः प्राप्तोऽनेन निवार्यते ।

वृद्धाच्चेतिवक्तव्यम् । वा

वृद्धादपि समूहे वुञ् वार्द्धकं साध्यते ततः ।

केदाराद्यञ्च । ४ । २ । ४०

केदाराद्यञ् वुञौ स्यातां कैदार्यं स्यात् कैदारकम् ॥

गणिकाया यञिति वक्तव्यम् । वा

गणिकायाः समूहे यञ् गाणिक्यं रूपमुच्यते ।

ठञ् कवचिनश्च । ४ । २ । ४१

कवचिनश्च ठञ् वाच्यं केदारादपि ठञ् पुनः ।
कवचिनां समूहस्तु कावचिकं प्रयुज्यताम् ।
केदाराणां समूहश्च कैदारिकं पदं भवेत् ।

ब्राह्मणमाणववाडवाद्यत् । ४ । २ । ४२

एभ्यस्त्रिभ्यः समूहे यत् प्रत्ययोऽत्र विधीयते ।
ब्राह्मण्यं माणव्यञ्च वाडव्यमिति जायते ॥

पृष्ठादुपसंख्यानम् । वा

पृष्ठादत्रोपसंख्यानं पृष्ठ्यं स्तोत्रविशेषकम् ।

ग्रामजनबन्धुभ्यस्तल् । ४ । २ । ४३

ग्रामाज्जनात् तथा बन्धोः समूहे तल् विधीयते ।
ग्रामता जनता रूपं बन्धुतापि च साध्यते ॥

गज सहायाभ्यां चेतिवक्तव्यम् । वा

गजात्तल् स्यात् सहायाच्च गजता स्यात् सहायता ।
अह्नः खः स्यात् क्रतावत्र अहीनः क्रतुरिष्यते ॥

आह्लस्तु खण्डिकत्वादञ् प्रत्यये च कृते भवेत् ।
अह्लष्टखोष्टिलोपः स्यात् तस्मादाह्लेऽञि नैव सः ॥

पर्श्वा णस् वक्तव्यः । वा

सिति च । १ । ४ । १६

पूर्वञ्च पदसंज्ञं स्यात् सिति च प्रत्यये परे ।
पर्शूणां समूहः स्यात् पार्श्वं णस्प्रत्यये सति ।
अभत्वादोर्गुणो नैव जायते ज्ञायतामिदम् ।

अनुदात्तादेरञ् । ४ । २ । ४४

अञ् प्रत्ययोऽनुदात्तादेः कापोतं मायूरमिति ।

खण्डिकादिभ्यश्च । ४ । २ । ४५

खण्डिकादेः समूहे स्यादण्प्रत्ययोऽत्र तद्धितः ।
खण्डिकानां समूहः स्यात् खाण्डिकं तत्प्रयुज्यताम् ॥

चरणेभ्यो धर्मवत् । ४ । २ । ४६

चरणवाचकशब्देभ्यो धर्मे ये प्रत्ययाः कृताः ।
ते भवन्ति समूहेऽपि छान्दोग्यं काठकं यथा ॥

अचित्तहस्तिधेनोष्ठक् । ४ । २ । ४७

अचित्तहस्तिधेनुभ्यष्ठक् समूहेऽत्र जायते ।
शाक्तिकं हास्तिकं रूपं धैनुकं ठस्य के कृते ॥

केशाश्वाभ्यां यञ्छावन्यतरस्याम् । ४ । २ । ४८

केशाश्वाभ्यां क्रमाद् यञ्छौ ठगणौ भवतः पुनः ।
कैश्यं कैशिकमित्येव मश्वीयमाश्वमित्यपि ॥

पाशादिभ्यो यः । ४ । २ । ४९

पाशादिभ्यश्च यः प्रोक्तः समूहे तद्धितोऽस्त्ययम् ।
पाश्या तृण्या तथा धूम्या वन्या वात्या प्रयुज्यते ॥

खलगोरथात् । ४ । २ । ५०

खलगोरथशब्देभ्यः समूहे यश्च प्रत्ययः ।
खल्या गव्या तथा रथ्या साधनीयाः कृतेऽत्र ये ॥

इनित्रकटयचश्च । ४ । २ । ५१

इनित्रकटयचश्चैते क्रमादेभ्यो भवन्ति वै ।
रूपं स्यात् खलिनी गोत्रा रथकट्या विशेषतः ॥

खलादिभ्य इनिर्वक्तव्यः । वा

खलादिभ्य इनिर्वाच्यो डाकिनी च कुटुम्बनी ।
अस्याकृतिगणत्वेन प्रयोगोऽन्योऽपि साध्यताम् ॥

विषयो देशे । ४ । २ । ५२

अणादिर्विषयो देशे षष्ठ्यन्तादेव जायते ।
शिवीनां विषयो देशः शैवः प्रयोग इष्यते ॥

राजन्यादिभ्यो वुञ् । ४ । २ । ५३

राज्यन्यादेस्तु वुञ् तस्य कः स्याद्राजन्यकं ततः ।

भौरिक्याद्यैषु कार्यादिभ्यो विधल्भक्तलौ ।४।२।५४

भौरिकाद्यैषुकार्यादे र्भवेतां विधल्भक्तलौ ।
भौरिकविधमाख्येयं भौलिकिविधमित्यपि ॥
स्यादैषुकारिभक्तश्च सारसायनभक्तमिति ।

सोऽस्यादि रितिच्छन्दसः प्रगाथेषु । ४ । २ । ५५

छन्दसस्तु प्रगाथेषु सोऽस्यादिरिति विग्रहे ।
अणिकृते च पाङ्क्तः स्यात् पङ्क्तिरादिस्तु अस्य वै ॥

स्वार्थे उपसंख्यानम् । वा

अण् स्वार्थेऽपि भवेदत्र त्रैष्टुभं त्रिष्टुबेव हि ।

संग्रामे प्रयोजनयोद्धृभ्यः । ४ । २ । ५६

सोऽस्य प्रयोजनं योद्धा संग्रामे यदि वा भवेत् ।
तदैवाण् प्रत्ययस्तस्माद् रूपं सौभद्रभारतौ ॥

प्रयोजनं सुभद्राऽस्य संग्रामस्येति विग्रहः ।
भारताः सन्ति योद्धारः संग्रामस्येति भारतः ॥

तदस्यां प्रहरणमिति क्रीडायां णः । ४ । २ । ५७

तदस्त्यस्यां प्रहरणं क्रीडायां तद्धितश्च णः ।
दण्डः प्रहरणमस्यां दाण्डा क्रीडैव कापि च ।

घञः सास्यां क्रियेति ञः । ४ । २ । ५८

क्रियावाचि घञन्ताञ्ञः सप्तम्यर्थेस्त्रियामिह ।
गतिकारकपूर्वस्य ग्रहणं घञ्ग्रहादिह ।

श्येनतिलस्य पाते ञे । ६ । ३ । ७१

श्येनस्य तिलशब्दस्य मुमागमोऽत्र ञे परे ।
पातशब्दे परे एव मुमागमश्च जायते ॥
श्यैनंपाता च मृगया तैलंपाता स्वधा भवेत् ।
श्येनपातो वर्ततेऽस्यां तिलपातः स्वधाविधौ ॥

तदधीते तद्वेद । ४ । २ । ५९

तदधीते च तद्वेद तात्पर्येऽणादिप्रत्ययः ।
अधीते व्याकरणं यो वेद वा विग्रहो यदा ।
वैयाकरणशब्दस्य सिद्धिरैजागमोऽणि वै ॥

क्रतूक्थादि सूत्रान्तात् ठक् । ४ २ । ६०

ठक्प्रत्ययः क्रतूक्थादि सूत्रान्तात् क्रियते पुनः ।
वेदतर्येवतात्पर्ये अथवाऽध्येतरि स च ॥
अग्निष्टोमञ्च यो वेत्ति स भवेदाग्निष्टोमिकः ।
वेत्ति यो वाजपेयं सः कथ्यते वाजपेयिकः ॥
अधीते वेद य उक्थं स भवेदौक्थिको बुधः ।
तिस्रोविद्यामधीते यः त्रैविद्यः स प्रकीर्तितः ॥

मुख्यार्थात्तूक्थशब्दाट्ठगणौ नेष्येते । वा

तद्धितार्थे द्विगावत्र द्विगोर्लुगनपत्य इति ।
अधीतेवेत्ति वा न्यायं स नैयायिक उच्यते ॥

अधीते वेत्ति यो वृत्तिं जनः स वार्त्तिको भवेत् ।
लोकायतमधीते सः लौकायितिक उच्यते ॥

सूत्रान्तात्त्वकल्पादे रे वेष्यते । वा

सूत्रान्तात् स्यादकल्पादेः प्रत्ययस्तेन हेतुना ।
काल्पसूत्रे न ठक्कार्यं स्याच्च सांग्रह सूत्रिकः ॥

विद्यालक्षण कल्पान्ताच्चेति वक्तव्यम् । वा

विद्यालक्षण कल्पान्ताद् तद्वेत्त्यर्थे च ठग् भवेत् ।
वेत्ति वायसविद्यां यः स च वायसविद्यिकः ॥
गोलक्षणमधीते स गौलक्षिणक उच्यते ।
आश्वलक्षिणकश्चैवं स्यात् पाराशरकल्पिकः ॥

अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम् । वा

विद्यान्तादङ्गक्षत्रधर्मपूर्वान्न ठग् भवेत् ।
आङ्गविद्यः क्षात्रविद्यो धार्मविद्यः प्रसिद्ध्यति ॥
त्रिविधा खलु या विद्या सा त्रिविद्या भवेदिह ।
तामधीतेऽथवा वेद त्रैविद्यः स बुधो भवेत् ॥

आख्यानाख्यायिकेतिहासपुराणेभ्यश्च । वा

आख्यानादिचतुर्भ्यष्ठक् क्रियतेऽनेन च पुनः ।
यावक्रीतिक इत्येवं भवेद्वासवदत्तिकः ॥
यवक्रीतमधीते वा वेत्तिविग्रह उच्यताम् ।
वासवदत्तामधिकृत्य कृता आख्यायिका वदेत् ॥
इतिहासमधीते य ऐतिहासिक उच्यते ।
पुराणं वेत्त्यधीते वा पौराणिकः प्रकीर्तितः ॥

सर्वादेः सादेश्च लुग्वक्तव्यः । वा

सर्वादेश्च तथा सादेः परस्य प्रत्ययस्य लुक् ।
सर्ववेदानधीते यः सर्ववेदश्च स भवेत् ॥
सर्वतन्त्रमधीयानः सर्वतन्त्रः प्रकीर्तितः ।
वार्त्तिकान्तमधीते यः सवार्त्तिक उदाहृतः ॥
द्विगोर्लुगनपत्ये तु द्वितन्त्रआदि उच्यते ।

इकन्पदोत्तरपदात् शतषष्टेः षिकन् पथः । वा

पूर्वपदिक उत्तरपदिकश्च प्रयुज्यताम् ।
शतपथिक इत्येवं शतपथिकी च स्त्रियाम् ॥

पुंसि षष्टिपथिकः स्यात् षष्टिपथिकी च स्त्रियाम ।
षिकन् षित्वेन ङीष्कार्यं जायते स्त्रीत्व बोधने ॥

क्रमादिभ्यो वुन् । ४ । २ । ६१

तद्वेद तदधीतेऽर्थे क्रमादिभ्यस्तु वुन् भवेत् ।
क्रमकः पदकस्तद्वत् मीमांसकश्च शिक्षकः ॥
क्रमं वा पदशिक्षे वा अधीतेवेत्ति विग्रहः ।

अनुब्राह्मणादिनिः ४ । २ । ६२

अनुब्राह्मणशब्दात्तु स्यादिनिः प्रत्ययः खलु ।
अनुब्राह्मणमधीते स भवेदनुब्राह्मणी ।
ब्राह्मण सदृशग्रन्थोऽनुब्राह्मणमुच्यते ।

वसन्तादिभ्यष्ठक् । ४ । २ । ६३

ढक् प्रत्ययो वसन्तादे र्वासन्तिकः प्रयुज्यते ।
अथर्वाणमधीतेऽर्थे आथर्वणिक उच्यते ॥
दाण्डिनायन इत्यादे र्न टिलोपोऽत्र जायते ॥

प्रोक्ताल्लुक् । ४ । २ । ६४

प्रोक्तार्थकात्परस्य स्यादध्येत्तृप्रत्थयस्य लुक् ।
घञर्थे कविधानेन स्याद्रूपं पणनं पणः ।
सोऽस्यास्तीति पणी तस्माद् गोत्रापत्ये च पाणिनः ॥

गाथिविदथिकोशिगणिपणिनश्च । ६ । ४ । ६४

गाथिविदथिनौ केशी गणी पणी तथैव च ।
एतेऽणि प्रकृत्याः स्युष्टिलोपो नहि पाणिने ॥
इञ्प्रत्ययस्ततो यूनि पाणिनिः साध्यते क्रमात् ।

ण्यक्षत्रियार्षञितो यूनि लुगणिञोः । २ । ४ । ५८

ण्यक्षत्रियार्षञितश्च यूनि लुगणि ञो भवेत् ।
कौरव्यश्च पिता पुत्रः पुत्रे प्रत्ययलुग् भवेत् ॥

अत्र स्पष्टता—

कुर्वादिभ्यो ण्य इति कौरव्ये मूलरूपं पिता, तस्य पुत्र इत्यर्थे जातस्येञो लुक् तेन पुत्रोऽपि कौरव्य एव भवेदितिभावः ।

श्वाफल्कोऽपि पिता पुत्रः स्यादणन्तादिञ् क्रमात् ।
ऋष्यन्धके न योऽणस्ति तस्मादिञ् जायतेऽस्य लुक् ॥
वासिष्ठ एव वासिष्ठः ऋष्यण् तत इञश्च लुक् ।
पुत्रोऽपि वासिष्ठः स्यादेवमन्यो विचार्यताम् ॥
पिता तैकायनिश्चैवं पुत्रोऽपि च तैकायनिः ।
फिञ् प्रत्ययस्तिकादिभ्यस्ततश्चाण् त: य लुग् भवेत् ।

सूत्राच्च कोपधात् । ४ । २ । ६४

सूत्राच्च कोपधादस्मादध्येतृवेदितृद्वये ।
समुत्पन्नस्य लुक्कार्यं प्रत्ययस्य च तेन हि ॥
अष्टकं पाणिनेः सूत्रं तदधीते विदन्ति ये ।
अष्टकास्ते च कथ्यन्ते ऽध्येतरि प्रत्ययस्य लुक् ॥

संख्याप्रकृतिकादेव । वा०

कालापकादिशब्देषु तस्मादेव न लुग्भवेत् ।

छन्दो ब्राह्मणानि च तद्विषयाणि । ४ । २ । ६६

प्रोक्तप्रत्ययकान्यत्र छन्दांसि ब्राह्मणानि च ।
तद्विषयाणि जायन्ते साध्येतृवेदितृकाः ॥
अधीयते कठप्रोक्तं कठा भवन्ति लुक्कृते ।

स्पष्टीकरणम्—

अत्र वैशम्पायनान्तेवासित्वाण्णिनिः तस्य कठचरकादिति लुक् ततोऽण्प्रत्ययस्तस्य प्रोक्ताल्लुक् ।

॥ इति रक्ताद्यर्थकाः ॥



# तद्धितेषु चातुरर्थिकाः

तदस्मिन्नस्तीति देशे तन्नाम्नि । ४ । २ । ६७

तदस्मिन्नस्ति तन्नाम्नि देशे अण् प्रत्ययो भवेत् ।
उदुम्बराः सन्ति देशेऽस्मिन् स औदुम्बर उच्यते ।।

तेन निर्वृत्तम् । ४ । २ । ६८

कुशाम्बेन च निर्वृत्ता कौशाम्बी नगरी क्वचित् ।

तस्य निवासः । ४ । २ । ६९

तस्य निवास इत्यर्थे भवेदण् प्रत्ययो विधिः ।
निवासोऽत्र शिवीनां हि शैवः स देश उच्यते ।।

अदूरभवश्च । ४ । २ । ७०

तस्यादूरभवश्चार्थे भवेदणिति प्रत्ययः ।
विदिशाया अदूरभवं नगरं वैदिशं भवेत् ।।
तदस्मिन्नस्ति प्रारभ्य तेन तस्यादूरभवः ।
चातुरर्थिकनामायं तद्धिते गण उच्यते ।।
चतुर्णामिह अर्थानां समाहारो विगृह्य च ।
चतुर्थी स्याद् भवास्तत्र चातुरर्थिकनामकाः ।।

ओरञ् । ४ । २ । ७१

ओरञ् स्यात् तेन कक्षेतुशब्दात् काक्षेतवं भवेत् ।
नद्यां मतुप् परत्वात् स्यादिक्षुमती तदा स्मृता ।।

मतोश्च बह्वजङ्गात् । ४ । २ । ७२

बह्वजङ्गं भवेद्यस्य मतुपः प्रत्ययस्य च ।
तदन्तादञ् विधातव्यः प्रत्ययोऽण् नात्र जायते ।
सैध्रकावतमित्येतत् तस्मादेव प्रसिद्ध्यति ।।

बह्वचः कूपेषु । ४ । २ । ७३

बह्वचस्त्वत्र कूपेऽर्थे भवेदञ् प्रत्ययः खलु ।
कूपो दीर्घवरत्रेण निर्वृत्तो दैर्घवरत्रकः ॥

उदक् च विपाशः । ४ । २ । ७४

विपाश उत्तरे कूले कूपार्थेष्वञ् च बह्वचः ।
दत्तेन यश्च निर्वृत्तो दात्तः कूपश्च स भवेत् ॥

सङ्कलादिभ्यश्च । ४ । २ । ७४

सङ्कलादिभ्य इत्यत्र कूपेष्विति निवर्तते ।
अञ् तद्धितस्तु निर्वृत्ते साङ्कलं पौष्कलं तथा ॥

स्त्रीषु सौवीर साल्व प्राक्षु । ४ । २ । ७६

स्त्री लिङ्गेष्वेषु देशेषु वाच्येष्वञ् चातुरर्थिकः ।
दत्तामित्रेण निर्वृत्ता दात्तामित्री पुरी स्मृता ॥
वैधूमाग्नी पुरी साल्वे माकन्दी प्राचि विश्रुता ।

सुवास्त्वादिभ्योऽण् । ४ । २ । ७७

सुवास्त्वादिभ्य इत्यत्राण् प्रत्ययश्चातुरर्थिकः ।
सुवास्तोरदूरभवं सौवास्तवमिति श्रुतम् ॥
वर्णोरदूरभवं वाच्यं वार्णवं प्रत्ययेऽणि वै ।

रोणी । ४ । २ ७८

रोणीशब्दात् तदन्ताच्च भवेदण् प्रत्ययो विधिः ।
रौण आजकरौणः स्यात् कूपाञः प्रवृत्तिर्नहि ॥

कोपधाच्च । ४ । २ । ७९

कोपधादण् विधातव्यः कूपोऽयं कार्णछिद्रकः ।
त्रिशङ्कुना च निर्वृत्तं त्रैशङ्कवमुदाहृतम् ॥
एवमेव निर्वृत्तेऽर्थे साध्यतां कार्कवाकवम् ।

वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठको-
रीहण कृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखि संकाशबलपक्ष

कर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः । ४ । २ । ८०

एभ्यः सप्तदशभ्यश्च शब्देभ्यश्चातुरर्थिकाः ।
वुञ् छणादि प्रत्यया जायन्ते क्रमश इह ॥
वुञ् स्यादहीरणादिभ्य आहीरणकमुच्यते ।
छण् प्रत्ययः कृशाश्वादेः कार्शाश्वीयमिति भवेत् ॥
ऋश्यादिभ्यस्तु कः प्रोक्तः ऋश्याद्रूपञ्च ऋश्यकम् ।
ठच् भवेत् कुमुदादेस्तु कुमुदिकं प्रयुज्यते ॥
कशादेरिलिरिण्टोऽस्ति काशिल श्चातुरर्थिकः ।
तदस्मिन्नस्ति तत्रापि तेन निर्वृत्तमादि च ॥
तस्य निवास इत्यादि दर्शितश्चातुरर्थिकः ।
सः प्रत्ययस्तृणादिभ्य स्तृणसं रूपमुच्यते ॥
प्रेक्षादिभ्यस्त्विनिर्वाच्यः प्रेक्षी सिद्धयति प्रेक्षया ।
अश्मादे रस्तु निर्वृत्ते अश्मरश्च प्रयुज्यताम् ॥
सख्यादिभ्यस्तु ढञ्प्रोक्तः साखेयं चातुरर्थिके ।
ण्य प्रत्ययश्च सङ्काशात् साकाश्यमुच्यतां बुधैः ॥
बलादेर्यश्च निर्वृत्ते बल्यं रूपं प्रयुज्यते ।
फग्भवेदिह पक्षादेः पाक्षायणः प्रकीर्तितः ॥

पथः पन्थ च । ग० सू०

पथः फक् प्रकृतेः पन्थः पान्थायनः प्रयुज्यताम् ।
कर्णादेः फिञित्येवस्यात् कार्णायनिरुदाहृतः ॥
सुतङ्गमेन निर्वृत्तं सौतङ्गमि रिञि कृते ।
प्रगद्यादिप्रकृतिभ्यः प्रागद्यमादि ञ्ये कृते ॥
फक् प्रत्ययो वराहादे वाराहकः प्रदर्शितः ।
ठग् यदा कुमुदादिभ्यः कौमुदिकः प्रदर्शितः ॥

जनपदे लुप् । ४ । २ । ८१

वाच्ये जनपदे शब्दात् लुप्यन्ति चातुरर्थिकाः ।

लुपि युक्तवद् व्यक्तिवचने । १ । २ । ५१

युक्तवद् व्यक्तिवचने लुपि च भवतः सदा ।
पञ्चालानां निवासोऽयं जनपदइति विग्रहे ।
पञ्चालाः कुरवो वङ्गा एवमङ्गाः कलिङ्गकाः ॥

तदशिष्यं संज्ञाप्रमाणत्वात् । १ । २ । ५३

संज्ञायाश्च प्रमाणत्वात् तदशिष्यमितीहवै ।
युक्तवद्वचनं नात्र कार्यमित्यर्थबोधनम् ॥

लुब्योगाप्रत्याख्यानात् । १ । २ । ५४

लुब् योगस्याप्रतीतेश्च सूत्रं लुप् जनपदे इति ।
वरणादेश्च लुप् कार्यं न विधेयमिति स्थितिः ॥

योगप्रमाणे च तदभावेऽदर्शनं स्यात् । १ । २ । ५५

यदि योगप्रमाणं स्यात् तदभावे न तद्भवेत् ।
विना क्षत्रियसंबन्ध मेते जनपदार्थकाः ॥

प्रधानप्रत्ययार्थवचनमर्थस्यान्य प्रमाणत्वात् ।१।२।५५

प्रधानं स्यात् प्रत्ययार्थं वचनमिति घोषणा ।
प्रत्याख्येया यतोऽर्थस्य लोकतः सिद्धिरस्ति वै ॥

कालोपसर्जने च तुल्यम् । १ । २ । ५७

कालोपसर्जने द्वेऽपि प्रत्याख्यायेऽप्रयोजनात् ।
लोकप्रसिद्धितः पूर्ववदेवात्रापि बोधनम् ॥

विशेषणानां चाजातेः । १ । २ । ५२

लुबर्थे लिङ्गवचने ये ते स्यातां तद्विशेषणे ।
उदाहरणमस्यास्ति पञ्चालाः सन्ति सुन्दराः ॥
गोदौ मनोहरौ तौ स्तः जात्यां न नियमोऽस्त्ययम् ।
तस्माद् भवति स ग्रामः पाञ्चालाश्च जनपदः ॥
भिन्नवचनप्रयोगो जातावस्ति विशेषणे ।

हरीतक्यादिषु व्यक्तिः । वा

हरीतक्यादिशब्देषु व्यक्ते रपि विशेषता ।
हरीतक्यादिसूत्रेण अण् प्रत्ययस्य लुब्भवेत् ॥
हरीतक्याः फलान्यत्र हरीतकस्त्वणो लुपि ।

खलतिकादिषु वचनम् । वा

खलतिकादिषु व्यक्ते वर्तते च विशेषता ।
खलतिकस्य कुध्रस्यादूरभवानि विग्रहे ॥
खलतिकं बनानि स्यु र्वरणादिभ्यश्च लुब् भवेत् ।

मनुष्यलुपि प्रतिषेधः । वा

मनुष्यलुपि निषेधो न लिङ्गादेश्च विशेषणे ।
लुबन्तस्य भवत्येव चञ्चा तृणमयः पुमान् ।

वरणादिभ्यश्च । ४ । २ । ८२

लुप्यन्ति वरणादिभ्यः प्रत्ययाश्चातुरर्थिकाः ।
वरणानामदूरभवं नगरं वरणा लुपि ॥

वरणादिश्च—

कटुवदरी शिरीषाः गोदौ खलतिकं गणे ।
शर्कराशब्दजातस्य लुब्वा स्याच्चातुरर्थिकः ॥

शर्कराया वा । ४ । २ । ८३

चातुरर्थिकनाभ्नश्च शर्करावहितस्य च ।
प्रत्ययस्य तद्धितस्य लुब् विकल्पेन जायते ॥

ठक्छौ च । ४ । २ । ८४

शर्कराशब्दतष्ठक्छौ प्रत्ययौ भवतोऽण्तथा ।
एषां लुप् स्याद्विकल्पेन तस्माद्रूपाणि षट् स्मरेत् ॥
शर्करा शार्करं रूपं शार्करिकं तृतीयकम् ।
शर्करीयं शर्करिकं षष्ठं शार्करकं भवेत् ॥

नद्यां मतुप् । ४ । २ । ८५

नद्यां मतुब् भवेदत्र प्रकृते चातुरर्थिके ।
मतुप्प्रत्ययतस्तस्मादिक्षुमतीति सिद्ध्यति ॥

मध्वादिभ्यश्च । ४ । २ । ८६

मध्वादिशब्दतश्चात्र मतुप्स्याच्चातुरर्थिकः ।
मधुमानिति प्रयोगो विदितश्चातुरर्थिकः ॥

कुमुदनडवेतसेभ्यो ड्मतुप् । ४ । २ ८७

कुमुद्वानथ वेतस्वान् नड्वान् सिद्धयेट्टिलोपतः ।
ड्मतुप्प्रत्ययस्त्वत्र क्रियते चातुरर्थिकः ।
"झयो" मादुपधायाश्च सूत्रद्वयेन मस्य वः ॥

महिषाच्चेति वक्तव्यम् । वा

महिषाच्च ड्मतुप् कार्यो महिष्मान् देश उच्यते ।

नडशादाड्ड्वलच् । ४ । २ । ८८

ड्वलच् स्यान्नडशादाभ्यां नड्वलः शाद्वलः पुनः ।

शिखाया वलच् । ४ । २ । ८९

शिखायास्तु वलच् कार्यं शिखावलं प्रसिद्धयति ।

उत्करादिभ्यश्छः । ४ । २ । ९०

छो भवेदुत्करादिभ्य उत्करीयं प्रयुज्यते ।

नडादीनां कुक् च । ४ । २ । ९१

नडादीनाञ्च छः कुक् च नडकीयमिति भवेत् ।

क्रुञ्चा ह्रस्वत्वं च । वा

क्रुञ्चायाश्छ स्तथा कुक्च ह्रस्वोऽपि जायते ततः ।
क्रुञ्चकीयः प्रयोगः स्यात् तद्धितेऽत्र विशेषतः ॥

तक्षन्नलोपश्च । वा

तक्षणश्छः कुक् नलोपश्च तक्षकीयः प्रकीर्तितः ।

विल्वकादिभ्यश्छस्य लुक् । ६ । ४ । १५३

नडाद्यन्तर्गता विल्वकादय स्तत्र छस्य च ।
लुग्विधानं तद्धितेऽत्र जायते तत एव हि ॥

श्लो० सि० पू० २६

सन्ति विल्वाश्च यस्यां सा विल्वकीया इति भवेत् ।
तस्यां भवाश्च कथ्यन्ते वैल्वका इति बुध्यताम् ।
भवाश्च वेत्रकीयायां कथ्यन्ते वेत्रका इह ॥
तस्यां भवा वैत्रकाः स्यु रिति स्पष्टार्थता भवेत् ।
छमात्रस्य यथा लोपो निवृत्तिर्मा कुको भवेत् ।
तस्माच्छस्येति च प्रोक्तं सूत्रेऽस्मिन्निति बुध्यताम् ॥

॥ इति चातुरर्थिकाः ॥



## अथ तद्धितेषु शैषिकाः

शेषे । ४ । २ । ९२

सूत्रं प्रवर्तते शेषे शेषे, जातश्च शैषिकः ।
शेषो भवत्यपत्यादि चातुर्थिक - भेदवान् ॥

इतः पूर्वन्तु ये केचिदर्था उक्ता न तेष्वयम् ।
गृह्यते उह्यते आदि तात्पर्ये शैषिको भवेत् ॥

चक्षुषा गृह्यते यच्च चाक्षुषं तद्भवेत्पदम् ।
चक्षुषोऽण् भवेदादेरचो वृद्धिश्च जायते ॥

गृह्यते श्रवणेनासौ श्रावण श्शब्द उच्यते ।
उपनिषदा गृह्यते औपनिषद उच्यते ॥

अणि परे भवेदादे रचोवृद्धिश्च साधने ।
क्षुण्ण उलूखले यस्तु औलूखलश्च यावकः ॥

अश्वैरुह्यत इत्यर्थे आश्वो रथः प्रकीर्तितः ।
चतुर्भिरुह्यते यच्च चातुरं शकटं मतम् ।

दृश्यते यच्चतुर्दश्यां रक्ष श्चातुर्दशं भवेत् ॥
अणादयस्तु शेषेऽर्थे विभिन्ने प्रभवन्त्यमी ।
विधिसूत्रमिदं शेषेऽधिकारो वा प्रकीर्तितः ॥

राष्ट्रावारपाराद् घखौ । ४ । १ । ९३

राष्ट्रादवारपाराद् घखौ स्यातां क्रमेण च ।
राष्ट्रियोऽवारपारीणः साध्यतां शेषविग्रहे ॥

अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् । वा०

विगृहीतादवारपाराद् विपरीताच्च छो भवेत् ।
पारादवारतश्चापि छ प्रत्ययोऽत्र जायते ॥

अवारीणश्च पारीणः पारावारीण इत्यपि ।

विभिन्न प्रकृते रत्र घादयः प्रत्ययाः स्मृताः ।
टचुटचुलन्ताश्च वक्ष्यन्ते तेषां जातादयोऽर्थकाः ॥

ग्रामाद् घखञौ । ४ । २ । ९४

घखञौ प्रत्ययौ ग्रामाद् ग्राम्यो ग्रामीण इत्यपि ।
ग्रामे जातो विग्रहोऽत्र दर्शनीयः सुसङ्गतः ॥

कत्त्र्यादिभ्यो ढकञ् । ४ । २ । ९५

कत्त्र्यादिभ्यो ढकञ् प्रोक्तो जाताद्यर्थे यथोचितम् ।
कुत्सितास्ते त्रयः प्रोच्य कत्त्रयः पदमिष्यते ।
कात्त्रेय स्तत्र जातः साध्यतां नागरेयकः ॥
ग्रामे जातो जनः प्रायो ग्रामेयको निगद्यते ।

कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु । ४ । २ । ९६

कुलात् कुक्षेश्च ग्रीवाया ढकञणावुभावपि ।
शुनि खड्गे अलङ्कारे क्रमाद् ढकञ् विधीयते ॥
श्वा कौलेयक आख्यातः कौलोऽन्यार्थे प्रयुज्यते ।
असिः कौक्षेयकः प्रोक्तः कौक्षोऽन्यश्च निगद्यते ॥
ग्रैवेयकस्त्वलङ्कारे ग्रैवोऽलङ्कारभिन्नके ।

अत्र स्पष्टता—

कुल कुक्षि ग्रीवाशब्देभ्यः क्रमश श्शुनि खड्गे अलङ्कारेऽर्थे ढकञ् प्रत्ययो भवति तस्यैयादेश आदिवृद्धौ च कृताया मुपर्युक्तरूपं पक्षेऽण् प्रत्यये कृते आदि वृद्धि रन्त्यलोपश्च जायते ।

नद्यादिभ्यो ढक् । ४ । २ । ९७

नद्यादिभ्यस्तु ढक् प्रोक्तो जातादौ ज्ञायतामिदम् ।
नादेयमथ माहेयं वाराणसेय मिष्यते ।

स्पष्टता—

नद्यां जातमितीह स्याद् मह्यां जातमिति पुनः ।
वाराणस्यां जातमिति विग्रहे ढग् विधीयते ॥
एयादेशो ढकश्चात्र वृद्धिरादे रचो भवेत् ।

दक्षिणा पश्चात् पुरसस्त्यक् । ४ । २ । ९८

दक्षिणाशब्दतः पश्चात् पुरसश्चापि त्यग् भवेत् ।
दाक्षिणात्यश्च पाश्चात्यः पौरस्त्य इति साध्यते ॥

त्यक् प्रत्ययोऽत्र जातादौ वृद्धिरादे रचः पुनः ।

कापिश्याः ष्फक् । ४ । २ । ९९

ष्फक् प्रत्ययस्तु कापिश्याः जातादौ कापिशायनम् ।
मधु द्रव्यं भवेदर्थो द्राक्षायां कापिशायनी ॥

स्पष्टता—

कापिशी—ष्फक् = फ – आयनादेशोऽन्त्यवर्णलोपश्चात्र ज्ञेयः ।

रङ्कोरमनुष्येऽण् च । ४ । २ । १००

रङ्कुशब्दादमनुष्ये भवेदण् प्रत्ययश्च ष्फक् ।
राङ्कवो गौरिति ख्यातो राङ्कवायण इत्यपि ॥

द्युप्रागपागुदक् प्रतीचो यत् । ४ । २ । १०१

दिवि जातं भवेद् दिव्यं प्राच्यमपाच्यमत्र च ।
उदीचि जातमित्यर्थे स्यादुदीच्यं पदं पुनः ॥
प्रतीच्यं प्रतीचि जात मित्यर्थे च प्रयुज्यते ।

कन्थायाष्ठक् । ४ । २ । १०२

कन्थायाष्ठक् प्रत्ययः स्याज्जातादौ कान्थिकः पदम् ।

वर्णौ वुक् । ४ । २ । १०३

वर्णौ वुक् च भवेदत्र तस्मात् सिद्ध्यति कान्थकम् ।

स्पष्टता—

वर्णु र्नदस्तस्य समीपदेशो वर्णुः, तद्विषयार्थवाचिकन्थाशब्दाद् वुक् स्यात् । यथाहि हिमवत्सु कान्थकं जातम् ।

अव्ययात्त्यप् । ४ । २ । १०४

अमेह् क्वतसित्रेभ्य एव । वा०

**अमेह् क्वतसित्रेभ्यः पञ्चभ्य स्त्यब्विधीयते ।**
**अव्ययात्त्यबिति सूत्रसारमेतन्निगद्यते ।**
**अमात्यः स्यादिहत्यश्च क्वत्य स्ततस्त्य एव च ।**
**तत्र जातस्तु तत्रत्यः पदं साधय पण्ठक ॥**

अव्ययानां भमात्रे टिलोपः । वा

**अव्ययानाञ्च भमात्रे टिलोपोऽनित्य इष्यते ।**
**आरातीय प्रयोगस्तु तस्मादेव सुसाध्यते ॥**

त्यब् ने र्ध्रुव इति वक्तव्यम् । वा

**ध्रुवार्थे जायते त्यब् नेर्नित्यः प्रयोग इष्यते ।**

निसो गते । वा

**निसो गते तु निष्टयः स्यात् त्यप्प्रत्ययविधानतः ॥**

ह्रस्वात्तादौ तद्धिते । ८ । ३ । १०१

**ह्रस्वादिणः परस्यात्र सस्य षस्तादितद्धिते ।**
**वर्णाश्रमात्परिभ्रष्टो निष्टय श्चाण्डाल इष्यते ॥**

अरण्याण्णः । वा

**णप्रत्ययस्त्वरण्यादारण्या वनसंभवाः ।**

दूरादेत्यः । वा

**दूरादागत इत्यर्थे दूरेत्य एत्य प्रत्ययात् ।**

उत्तरादाहञ् । वा

**औत्तराहो भवेदाहञ् प्रत्यये उत्तरादिह ।**

ऐषमोह्यः श्वसोऽन्यतरस्याम् । ४ । २ । १०५

**एषमोह्यः श्वसस्त्यब् वा पक्षे स्याताञ्च टयुटयुलौ ।**
**ऐषमस्त्यं तथा पक्षे ऐषमस्तनमिष्यते ।**

ह्यस्त्यं त्यपि भवेद्रूपं ह्यस्तनं ट्युटयुलोः सतोः।
श्वोजातं श्वस्त्यमथवा श्वस्तनं ट्युल् तनप्कृते।
शौवस्तिकं भवाद्यर्थे वक्ष्यते तत्प्रयुज्यते।

तीररूप्योत्तरपदादञ्ञौ । ४ । २ । १०६

तीररूप्योत्तर पदादञ् ञौ च प्रत्ययौ स्मृतौ।
शेषेऽर्थे काकतीरं बाल्वलतीरमित्यपि॥
शैवरुप्यं प्रयोगोऽपि जातार्थे साध्यतामिह।

दिक् पूर्वपदादसंज्ञायाम् । ४ । २ । १०७

दिक्पूर्वपदतो ञः स्यादसंज्ञायां स्थितौ सदा।
पौर्वशालस्तु पूर्वस्यां शालायां भव उच्यते।
पूर्वशाला पदादण् स्यादादिवृद्धिरिहान्त्यलुप्॥

मद्रेभ्योऽञ् । ४ । २ । १०८

मद्रान्तादञ् प्रत्ययः स्याज् जाताद्यर्थे विशेषतः।
प्रयोगः पौर्वमद्रः स्यादापरमद्र इत्यपि।

उदीच्य ग्रामाच्च बह्वचोऽन्तोदात्तात् । ४।२।१०९

अन्तोदात्ताच्च बह्वचोऽञ् उदीच्यग्रामवाचकात्।
जातं शिवपुरे यद्धि तच्छैवपुरमिष्यते॥

प्रस्थोत्तर पलद्यादिकोपधादण् । ४ । २ । ११०

प्रस्थोत्तर पदादेवं पलद्यादेश्च कोपधात्।
शेषेऽणि माहिषिप्रस्थो नैलीनकश्च पालदः॥

स्पष्टीकरणम्—

महिषिप्रस्थनाम्नि ग्रामे भवः। निलीनकनाम्नि ग्रामे भवः पलदिनाम्निग्रामे भव इति विग्रहः।

कण्ड्वादिभ्यो गोत्रे । ४ । २ । १११

गोत्रान्तो यश्च कण्ड्वादि स्तस्मादण् प्रत्ययः पुनः।
कण्वो भवति गर्गादि स्तच्छात्राः काण्वाः स्मृताः॥

इञश्च । ४ २ । ११२

शास्त्रीयं गोत्रमाश्रित्य भवेदिञ् प्रत्ययस्त्विह ।
तदन्तादण् विधीयेत दाक्षाः दाक्षेर्भवाः स्मृताः ॥
शास्त्रीय गोत्र वचनात् पाणिनीये नचाण् ततः ।

न द्व्यचः प्राच्यभरतेषु । ४ । २ । ११३

न द्व्यचः प्राच्यभरते भवत्यण् किन्तु छो भवेत् ।
प्राष्ठीयाः खलु काशीयाः प्रयोगाः प्रभवन्त्यमी ॥

वृद्धिर्यस्याचामादि स्तद्वृद्धम् । १ । १ । ७३

यत्पदेऽचां भवेद् वृद्धिरादिस्तद् वृद्धसंज्ञकम् ।

त्यदादीनि च । १ । १ । ७४

त्यदादीन्यपि वृद्धानि वृद्धाच्छः प्रत्ययो भवेत् ।
शालीयः खलु मालीय स्तदीय आदि साध्यताम् ॥

एङ् प्राचां देशे । १ । १ । ७५

वृद्धसंज्ञाविकल्पेन यस्याचामादि रेङ् भवेत् ।
प्राचां देशाभिधानं चेत् तदैवेदं प्रवर्तते ॥
रूपमेणीपचनीयो गोनर्दीय स्तथैव च ।
पक्षे स्यादेणीपचनो गौनर्दो भौजकट इति ॥
जाताद्यर्थे उपर्युक्त प्रयोगे छस्तथाऽण् भवेत् ।

वा नामधेयस्य । वा

विभाषा नामधेयस्य वृद्धसंज्ञा विधीयते ।
दैवदत्तस्तथा देवदत्तीयोऽपि प्रयुज्यताम् ॥

स्पष्टता—

अत्र देवदत्तादण् छप्रत्ययश्च क्रमेण भवति ।

भवतष्ठक्छसौ । ४ । १ । ११५

भवतष्ठक्छसौ स्यातां वृद्धादेवेति बुध्यताम् ।
भावत्को भवदीयोऽपि प्रयोगः क्रियते ततः ॥
शत्रन्तादवृद्धात्तु भवतः स्यादणि कृते ।

काश्यादिभ्यष्ठञ्ञिठौ । ४ । २ । ११६

**ठञ् ञिठौ प्रत्ययौ स्यातां काश्यादिभ्यश्च शैषिके ।**
**काशिकी काशिका रूपं वैदिकी वैदिका भवेत् ।।**

आपदादि पूर्वपदात्कालान्तात् । वा

**कालान्तादापदादि पूर्वपदाच्च ठञ्ञिठौ ।**
**स्यादापत्कालिकी रूपमापत्कालिका पक्षतः ।।**

वाहीकग्रामेभ्यश्च । ४ । २ । ११७

**वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ स्मृतौ ।**
**कास्तीरं नामवाहीक ग्रामोऽस्ति विदितः खलु ।।**
**कास्तीरकी तस्मिन् जाता कास्तीरिकापि कथ्यते ।**

विभाषोशीनरेषु । ४ । २ । ११८

**उशीनरेषु वा वृद्धसंज्ञकाद् ग्रामवाचिनः ।**
**ठञ् ञिठौ भवतो जाताद्यर्थे तद्धितप्रत्ययौ ।।**
**प्रयोगः सौदर्शनिकी सौदर्शनिकापि जायते ।**
**पक्षे सौदर्शनीया तु छप्रत्यये कृते भवेत् ।।**

ओर्देशे ठञ् । ४ । २ । ११९

**देशार्थकादुवर्णान्तात् ठञ्प्रत्ययस्तु जायते ।**
**जातो निषादकर्ष्वां यः स स्यान्नैषादकर्षुकः ।।**
**केऽणः सूत्रेण ह्रस्वोऽत्र क्रियते ज्ञायतामिदम् ।**

वृद्धात्प्राचाम् । ४ । २ । १२०

**वृद्धात्प्राचामिति सूत्रादुवर्णान्तादपीह ठञ् ।**
**आढकजम्बुको रूपं साध्यतां शाकजम्बुकः ।।**
**जातोऽस्ति मल्लवास्तौ यः स भवेन्माल्लवास्तवः ।**

धन्वयोपधाद्वुञ् । ४ । २ । १२१

**धन्वाद् योपधशब्दाच्च वुञ् वृद्धाद् देशवाचिनः ।**
**ऐरावतश्च धन्वोऽस्ति स्यादैरावतकस्ततः ।।**
**जातः साङ्काश्यदेशे यः स साङ्काश्यक उच्यते ।**

प्रस्थपुरवहान्ताच्च । ४ । २ । ११२

प्रस्थपुरवहन्ताच्च वृद्धाद्वुञ् देशवाचिनः ।
मालाप्रस्थक इत्येवं नान्दीपुरक ऊह्यताम् ॥
पैलूवहक ह्येषोऽस्ति प्रयोगश्शैषिकः स्मृतः ।

रोपधेतोः प्राचाम् । ४ । २ । १२३

रोपधेतोश्च वुञ्प्रोक्तो वृद्धात्प्राग् देशवाचिनः ।
रोपधः पाटलीपुत्रः ईतः काकन्दकीसुतः ॥

जनपदतदवध्योश्च । ४ । २ । १२४

जनपद तदवध्यो वृद्धाद्वुञ्प्रत्ययः पुनः
आदर्शकः प्रयोगस्तु त्रैगर्तकोऽपि साध्यताम् ॥

अवृद्धादपि बहुवचनविषयात् । ४ । २ । १२५

जनपदे तदवधौ बह्वर्थप्रतिपादकात् ।
वृद्धावृद्धोभयाद्वुञ् जायते प्रातिवाधकः ॥
अङ्गेषु जात इत्यर्थे आङ्गकः स्यादवृद्धतः ।
जनपदावधौ रूपमाजमीढक इष्यते ॥
वृद्धाज्जनपदादत्र दार्वकः कालञ्जरकः ।
जनपदस्तु दावोस्ति कालञ्जरस्तदवधिः ॥
एकशेषेण बहुत्वे भवेन्न वुञ् च क्वापि वै ।
कर्तव्यश्चैक शेषेण तासु भवश्च प्रत्ययः ।

कच्छाग्निवक्त्रवर्त्तोत्तरपदात् । ४ । २ । १२६

कच्छाग्निवक्त्र वर्त्ताः स्युः क्वाप्युत्तरपदे तदा ।
वृद्धाद् वुञ्स्यादवृद्धाच्च शब्दात्तु देशवाचिनः ॥
दारुकच्छक इत्येवं कालाग्नकः प्रसाध्यताम् ।
सैन्धुवक्त्रक इत्येवं बहुवर्तक इष्यते ॥

धूमादिभ्यश्च । ४ । २ । १२७

धूमादि देश वाचिभ्यो वुञ्प्रत्ययो विधीयते ।
धौमकस्तैर्थकश्चैवं प्रयोगः साध्यते ततः ॥

नगरात्कुत्सन प्रवीण्ययोः । ४ । २ । १२८

नगरात्कुत्सने ह्यर्थे प्रावीण्येऽपि च वुञ् भवेत् ।
नागरको भवेच्चौरः शिल्पी जनोऽपि कथ्यते ॥
कुत्सनाद्यर्थभिन्ने तु नागराः ब्राह्मणाः स्मृताः ।

अरण्यान्मनुष्ये । ४ । २ । १२९

अरण्याद् वुञ्मनुष्येऽर्थे णोऽरण्यादस्य बाधकः ।

पथ्यध्यायन्याय बिहारमनुष्यहस्तिष्विति वाच्यम् । वा

पथ्यध्याये विहारेऽर्थे न्याये हस्तिनि वाऽत्र वुञ् ।
तस्मादधोधृताश्शब्दाः साध्यन्ते कोविदैरिह ॥
आरण्यको भवेत् पन्था न्यायोऽध्यायो गजादिकः ।

वा गोमयेषु । वा

गोमयार्थे विभाषा वुञ् आरण्यकाश्च गोमयाः ।
आरण्या अथवा पक्षे रूपं णप्रत्यये सति ॥

विभाषा कुरुयुगन्धराभ्याम् । ४ । २ । १३०

कुरुयुगन्धराभ्यां वुञ् विभाषैव च जायते ।
कुरोर्वुञ् कौरवकः स्यादण् प्रत्यये च कौरवः ।
यौगन्धरक इत्येवं यौगन्धरो युगन्धरात् ॥

मद्रवृज्योः कन् । ४ । २ । १३१

मद्रवृज्योस्तु कन्कार्यं जनपदे वुञ् न जायते ।
मद्रेषु वृजिषु जातो मद्रको वृजिको भवेत् ॥

कोपधादण् । ४ । २ । ३२

कोपधादण् भवेदत्र माहिषिकः पदं ततः ॥
महिषिकोनाम देश स्तत्र भवश्च विग्रहः ॥

कच्छादिभ्यश्च । ४ । २ । २ । १३३

कच्छादिदेशवाचिभ्यो भवेदण् न वुञादयः ।
काच्छःकच्छेषु जातः स्याज्जातः सिन्धुषु सैन्धवः ॥

मनुष्यतत्स्थयो र्वुञ् । ४ । १३४

मनुष्य तत्स्थयो वुञ् स्यात् कच्छाद्यणोऽपवादतः ।
काच्छकस्तु भवेत् कच्छे जातो मानव एव हि ॥
काच्छकं हसितं लोके प्रयोगोऽपि च दृश्यते ।

अपदादौ साल्वात् । ४ । २ । १३५

साल्वाद् वुञपदादौ साल्व ो ब्राह्मणादिकः ।
पदातौ साल्व एव स्याद् व्रजति स प्रयुज्यते ॥

गोयवाग्वोश्च । ४ । २ । १३६

गो यवाग्वोश्च वुञ् कार्यः काच्छाद्यणोऽपवादतः ।
साल्वको गौरिति ज्ञेयो यवागूः साल्विका भवेत् ॥

गर्त्तोत्तरपदाच्छः । ४ । २ । १३७

गर्त्तोत्तराच्च देशे छो वृकगर्तीयमुच्यते ।
अत्रोत्तरपदाख्यानं बहुच्पूर्वनिवृत्तये ॥

गहादिभ्यश्च । ४ । २ । १३८

छप्रत्ययो गहादिभ्यो गहीयस्ते न सिद्धयति ।

मुखपार्श्वतसो लोपः । ग. सू.

मुखपार्श्वद्वयाच्छः स्यात् तस्प्रत्ययान्ततः सदा ।
मुखतीयं पार्श्वतीयं टिलोपेनात्र साध्यते ।

कुग् जनस्य परस्य च । ग. सू.

गहादिछे कृते कार्यं कुग् जनस्य परस्य च ।
स्वस्य देवस्य शब्दस्य कुगागमोऽत्र जायते ॥
जनकीयं परकीयं देवकीयं स्वकीयमिति ।

वेणुकादिभ्यश्छण् वाच्यः । ग. सू.

छण् भवेद् वेणुकादिभ्यो वैणुकीयं पदं ततः ।
वैत्रकीयमथौत्तर पदकीयं छणि कृते ।

## प्राचां कटादेः । ४ । २ । १३९

प्राग्देशाच्च कटादेश्छः कटनगरीयमुच्यते ।
कटघोषीयमित्येवं कटपल्वलीयमपि ॥

## राज्ञः क च । ४ । २ । १४०

राज्ञः कचेति सूत्राच्छस्तत्परे कश्च जायते ।
राज्ञः सम्बन्धि जातं वा राजकीयं प्रयुज्यते ॥

## वृद्धादनेकान्त खोपधात् । ४ । २ । १४१

अकइक एतदन्तात् खोपधाद्देशवाचिनः ।
वृद्धाच्छ प्रत्यये जाते ब्राह्मणकीय उच्यते ॥
ब्राह्मणको जनपद स्तस्माद् ब्राह्मणकः स्मृतः ।
एवं शाल्मलकीयः स्यादयोमुखीय इति ॥

## कन्थापलदनगरग्रामह्रदोत्तरपदात् ।४।२।१४२

कन्थादि पञ्चकोत्तर पदाच्छो देशवासिनः ।
वृद्धादेवेति विज्ञेयं दाक्षिकन्थीयमुच्यते ।
रूपं दाक्षिपलदीयं दाक्षिग्रामीयमादि च ॥

## पर्वताच्च । ४ । २ । १४३

पर्वतादपि छः कार्ये जातादौ च विशेषतः ।
पर्वतीयः प्रयोगोऽयं जातादौ साध्यते ततः ॥

## विभाषाऽमनुष्ये । ४ । २ । १४४

अमनुष्ये विभाषा छः पक्षेऽण् प्रत्ययोऽपि च ।
फलानि पार्वतीयानि पार्वतान्यपि तानि च ।
मनुष्ये पर्वतीयः स्याद् ब्राह्मणः क्षत्रियादि च ।

## कृकण पर्णाद् भारद्वाजे । ४ । २ । १४५

भारद्वाजे च यौ देशौ ताभ्यां छः प्रत्ययो भवेत् ।
कृकणपर्ण शब्दाभ्यां पर्णीयं कृकणीयमिति ॥
भारद्वाजाच्च भिन्नेऽर्थे कार्कणं पार्णमिष्यते ।

युष्मदस्मदीरन्यतरस्यां खञ्च । ४ । ३ । १

खञ् घौ स्यातां विकल्पेन शैषिकौ युष्मदस्मदोः ।
युवयोरथ युष्माकं युष्मदीयः प्रयुज्यते ॥
आवयोऽथ अस्माक मस्मदीयः सखाऽगतः ।
अण्प्रत्ययोऽपि स्यादाभ्यां तत्पश्चाद् युष्मदस्मदोः ॥

तस्मिन्नणि च युष्माकास्माकौ । ४ । ३ । २

आदेशस्तु तयोरेव खञ्यणि क्रियते तदा ।
युष्माको युष्मदः स्यादस्मदोऽस्माक इष्यते ॥
यौष्माकीणश्च यौष्माकः प्रयोगः क्रियते पुनः ।
आस्माकीनस्तथाऽऽस्माकः प्रयोगौ द्वावुदाहृतौ ॥

तवकममकावेकवचने । ४ । ३ । ३

तवकममकादेशौ खञ्यणि युष्मदस्मदोः ।
एकत्वार्थकयोरेव तावकीनश्च तावकः ॥
ममायं मामकीनः स्यान्मामकोऽपि प्रयुज्यते ।

प्रत्ययोत्तर पदयोश्च । ७ । २ । ९८

प्रत्ययोत्तरपदयो र्मावध्यो र्युष्मदस्मदोः ।
एकार्थवाचिनोरेव त्वमौ च भवतः सदा ॥
तव अयं त्वदीयः स्यान्मदीयो मम एष च ।
त्वत्पुत्रस्तवपुत्रस्तु मत्पुत्रो ममपुत्रकः ॥

अर्धाद्यत् । ४ । ३ । ४

अर्धाद्यत् प्रत्ययः स्वार्थे प्रयोगोऽर्ध्यस्ततोभवेत् ।

परावराधमोत्तम पूर्वाच्च । ४ । ३ । ५

एभ्यो यत्प्रत्ययः कार्यो विग्रहः स्यादयमिति ।
परार्ध्यमपरार्ध्यञ्च अधमार्ध्यमिति पुनः ॥

दिक्पूर्वपदाट्ठञ् । ४ । ३ । ६

दिक्पूर्वपदतः स्यातां ठञ्यतौ प्रत्यावुभौ ।
पौर्वाधिकमिति वाच्यं पूर्वार्ध्यमिति च भवेत् ॥

ग्रामजनपदैकदेशादञ्ठञौ । ४ । ३ । ७

अञ्ठञौ भवतो ग्रामजनपदैकदेशतः ।
दिक्पूर्वादथ अर्धान्तादेव पश्यत्वधः पदम् ॥
अस्माकं जनपदस्य ग्रामस्य वेति विग्रहे ।
पौर्वार्द्धाः पौर्वार्द्धिकाश्च रूपमञि ठञि भवेत् ॥

मध्यान्मः । ४ । ३ । ८

मध्यान्मः क्रियते जाते भवे वा मध्यमः पदम् ।

असांप्रतिके । ४ । ३ । ९

अः स्यात्साम्प्रतिके अर्थे मध्योऽयं जन उच्यते ॥
उत्कर्षापकर्षहीने मध्यो विद्वानिहास्ति सः ॥
मध्यं दारु तदेव स्यात् ह्रस्वं दीर्घञ्च यन्नहि ।

द्वीपादनुसमुद्रं यञ् । ४ । ३ । १०

समुद्रस्य समीपे यो द्वीपस्तस्माद् यञ्भवेत् ।
द्वैप्यं तत्रभवं वस्तु द्वैप्याऽन्यार्थके भवेत् ॥

कालाट्ठञ् । ४ । ३ । ११

कालवाचकशब्दाट्ठञ् प्रत्ययोऽत्र विधीयते ।
ठस्येको मासिकं रूपं मासे जातश्च विग्रहः ॥
संवत्सरे भवं प्रोक्तं सांवत्सरिकमादि च ।
सायंप्रतिकश्च पौनः पुनिकः कालिकोऽपि स्यात् ॥
शार्वर औषसो रूपं प्राक्कालीनं तथेदृशः ।
अपभ्रंशा इमे शब्दाः प्रामाणिकस्य सम्मते ॥

तस्मात्—

शार्वरस्य तमसो निवृत्तये कालिदास वचनं न शोभनम्ः अनुदितौषसराग इति भारवेर्वचनं, तथा समानकालीनं प्राक्कालीनमिति नैयायिकानां प्रयोगश्च सर्वमसाध्वेवेति ।

श्राद्धे शरदः । ४ । ३ । १२

शरदष्ठन् भवेच्छ्राद्धे श्राद्धं शारदिकं ततः ।
भक्त्या सम्पाद्यमानं तत् पित्र्यं कर्म च पार्वणम् ॥

विभाषा रोगातपसोः । ४ । ३ । १३

ठञणौ शरदः स्यातां रोगार्थे आतपेऽपि च ।
शारदिकश्शारदो वा रोगो वा आतपो भवेत् ।

निशाप्रदोषाभ्याञ्च । ४ । ३ । १४

निशा प्रदोष शब्दाभ्यां ठञणौ भवतः सदा ।
नैशिकं नैशमित्यत्र निशि जातञ्च विग्रहः ॥
प्रादोषिकं प्रदोषेषु जातं प्रादोषमस्ति वा ।

श्वसस्तुट् च । ४ । ३ । १५

श्वसस्तुट् स्याद् विकल्पेन ठञ् प्रत्ययश्च जायते ।

द्वारादीनाञ्च । ७ । ३ । ४

द्वारादीनां भवेदैजागमः किन्तु न वृद्धिरिह ।
शौवस्तिकं च श्वोजातं दारिद्रयं मुनिवैभवम् ।
द्वारि जातं भवेदत्र दौवारिकमिति पुनः ।
द्वार स्वरश्च स्वाध्याया व्यल्कशो मृदु स्वस्ति श्वन् ॥
स्व स्वर् श्वः स्फ्यकृत् स्वादु द्वारादिगणवर्तिनः ।
एतेषां नहि वृद्धिः स्यात् किन्त्वैजागम इष्यते ॥

संधिवेलाद्यृतु नक्षत्रेभ्योऽण् । ४ । ३ । १६

संधि वेलादिशब्देभ्यः ऋतु वाचकतस्तथा ।
नक्षत्रवाचिशब्देभ्य श्शैषिकोऽण् प्रत्ययो भवेत् ॥
सान्धिवेलं तथा ग्रैष्मं तैषं क्रमादुदाहरेत् ।
सन्धि वेला तु सन्ध्या स्याद मावास्यात्रयोदशी ॥
चतुर्दशी पौर्णमासी प्रतिपच्चापि कथ्यते ।

संवत्सरात्फलपर्णयोः । ग. सू.

संवत्सरादणेव स्यात् फले च पर्वणि पुनः ।
सांवत्सरं फलं पर्वं सांवत्सरिकमन्यथा ॥

प्रावृष एण्यः ४ । ३ । १७

प्रावृषश्च भवेदेण्यः प्रावृषेण्यः पदं ततः ।

वर्षाभ्यष्ठक् । ४ । ३ । १८

वर्षाभ्यष्ठगिति प्रोक्तं वर्षासु साधु वार्षिकम् ।

सर्वत्राण् च तलोपश्च । ४ । ३ । २२

सर्वत्राण् च तलोपश्च हेमन्तात् हैमनं भवेत् ।
पक्षे ऋत्वण् चकारेण हैमन्तमपि जायते ॥
सायञ्चिरंप्रगेप्राह्णे चतुर्भ्यं ष्टु ष्टुलौ च द्वौ ।
तुट् कार्यं च भवेदत्र एतेभ्योऽव्ययशब्दतः ॥
सायन्तनं पदं तस्मात् चिरन्तनं प्रगेतनम् ।
प्राह्णेतनमव्ययात्तु दोषातनं दिवातनम् ॥

चिरपरुत्परादिभ्यस्त्नो वक्तव्यः । वा

चिरपरुत् परारिभ्य स्त्नः प्रत्ययश्च जायते ।
चिरत्नं स्यात्परुत्नश्च परारित्नमिदं पुनः ॥

अग्रादि पश्चाड्डिमच् । वा

अग्रादितश्च पश्चाच्च डिमच् प्रत्यय इष्यते ।
अग्रिममादिमं रूपं पश्चाद्भवश्च पश्चिमम् ॥

अन्ताच्च । वा

अन्तादपि डिमच् कार्यमन्तिमं स्यात्पदं ततः ।

विभाषा पूर्वाह्णापराह्णाभ्याम् । ४ । ३ । २४

पूर्वाह्णादपराह्णाच्च टचुटचुलौ वाऽत्र तुड् भवेत् ।
पक्षे ठञिति वक्तव्यं पूर्वाह्णतनमिष्यते ॥
अपराह्णेतनं रूपं पौर्वाह्णिकमिति पुनः ।

तत्र जातः । ४ । ३ । २५

तत्र जातश्च विग्रहे सप्तम्यन्तसमर्थतः ।
जायन्तेऽपत्यविकाराद्यर्थकाः प्रत्यया इह ॥
स्रुघ्ने जातो भवेत् स्रौघ्न औत्सः स्यादणि च भवे ।

श्लो० सि० पू० २७

राष्ट्राद्घन् राष्ट्रियः स्यादियादेशोऽत्र घस्य वै ।
रूपमवारपारीणः खप्रत्यये कृते भवेत् ॥

प्रावृषष्टप् । ४ । ३ । २६

एण्यापवादभूतोऽत्र प्रावृषष्ठब् विधीयते ।
प्रावृषि जातमित्यर्थे प्रावृषिकः प्रयुज्यते ॥

संज्ञायां शरदो वुञ् । ४ । ३ । २७

संज्ञायां शरदोवुञ्स्याद् ऋत्यणस्त्वपवादतः ।
शारदकाश्च दर्भाः स्युर्मुद्गा माषादय इह ।

उत्तरपदस्य । ७ । ३ । १०

उत्तरपदस्य च सूत्रमधिकारोऽस्ति केवलम् ।
हनस्त इति प्रागेव ज्ञायतामिति पाठकैः ॥

अवयवादृतोः । ४ । ३ । ११

ञिति णिति किति परे तद्धिते च विशेषतः ।
अचामादेरचोवृद्धिः स्यात् पूर्वावयवादृतोः ॥
पूर्ववार्षिक इत्येव मपरहैमनस्ततः ।

अत्र विशेषः—

ऋतोर्वृद्धिमद्विधावयवानामिति तदन्तविधिः पूर्वत्र ।
इह तु न अवयत्वाभावात् ॥

सुसर्वार्धाज्जनपदस्य । ७ । ३ । १२

सुसर्वार्द्धात्परस्यात्र वृद्धिर्जनपदस्य ।
सुपाञ्चालक इत्येवं सर्वपाञ्चालकः पुनः ॥
अर्धपाञ्चालके शब्दे वुञ् स्याज्जनपदादितः ।

सुसर्वार्धदिक्शब्देभ्यो जनपदस्येति तदन्तविधिः । वा

तदन्तविधिमाश्रित्य त्रिषु वुञ् च विधीयते ।

दिशोऽमद्राणाम् । ७ । ३ । १३

दिग् वाचकाज्जनपद वाचिनो वृद्धिरिष्यते ।
अभद्रस्येति वक्तव्यं पूर्वपाञ्चालकस्ततः ॥
पौर्वपाञ्चाल इत्यादौ दिगर्थो नात्र विद्यते ।

प्राचां ग्रामनगराणाम् । ७ । ३ । १४

प्राचां ग्रामनगराणा मङ्गानामवयवस्य च ।
वृद्धिर्दिशः परेषां पूर्वेषुकामशमो भवेत् ॥
पूर्वेषुकामशम्यान्तु भवो विग्रह उच्यताम् ।

पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् । ४।३।२८

वुन् पूर्वाह्णाऽपराह्णाभ्यामार्द्रामूलप्रदोषतः ।
वुन्नवस्करतोऽपीह पूर्वाह्णकोऽपराह्णकः ॥
आर्द्रको मूलकोऽवस्करकः प्रदोषकस्तथा ।

पथः पन्थ च । ४ । ३ । २९

पथोवुन्प्रत्ययः पन्थादेशश्च प्रकृतेरिह ।
पन्थकः पथिजातः स्याद् वुनश्चाको विधीयते ॥

अमावास्याया वा । ४ । ३ । ३०

वुन् भवेच्च विकल्पेन अमावास्यक इष्यते ।
पक्षे स्यादामावास्यः प्रत्ययेऽणि च कृते ॥

अ च । ४ । ३ । ३१

अः प्रत्ययोऽपि जायेत स्यादमावास्य इत्यपि ।

सिन्ध्वपकाराभ्यां कन् । ४ । ३ । ३२

स्यात्सिन्ध्वपकराभ्यां कन् सिन्धुकोऽपकरक इति ।

अणञौ च । ४ । ३ । ३३

सिन्धोरणपकरादञ् क्रमेण जायते इह ।
सैन्धवः स्याद्भवः सिन्धौ आपकरोऽपकरे भवः ॥

श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्त
विशाखाऽषाढा बहुलाल्लुक् । ४ । ३ । ३४

श्रविष्ठाफल्गुनी तिष्याऽनुराधा च पुनर्वसुः ।
विशाखा बहुला स्वातिर्हस्तोऽषाढेति गण्यताम् ॥
एभ्यो नक्षत्रवाचिभ्यो जातार्थे प्रत्ययस्य लुक् ।

लुक् तद्धितलुकि । १ । २ । ४९

तद्धितलुकि सत्युपसर्गनस्य विधीयते ।
स्त्रीप्रत्ययस्य लुक् तस्माच्छ्रविष्ठः फल्गुनी भवेत् ॥
रेवतीरोहिणी चित्रा शब्देभ्यः प्रत्ययाः स्त्रियाम् ।
लुक्कृतेऽप्यत्र ङीष्कार्यं तस्मात् प्रकृतिरूपिका ॥

चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् । वा

चित्रायामियं जाता चित्रा एव पदं भवेत् ।
रेवत्यामियं जाता रूपं तत्रापि रेवती ॥
रोहिण्यां खलु या जाता रोहिणी सा निगद्यते ।

फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ । वा

फल्गुन्याश्च अषाढायाः टानौ तु भवतः स्त्रियाम् ।
फल्गुनी स्यादषाढा च भवस्तत्रेति विग्रहे ॥

श्रविष्ठाषाढाभ्यां छण्वक्तव्यः । वा ।

छण् प्रत्ययः श्रविष्ठाऽषाढाभ्यां जायते भवे ।
श्राविष्ठीयः पदं तस्मादाषाढीयः पदं ततः ॥

जे प्रोष्ठपदानाम् । ७ । ३ । १८

प्रोष्ठपदेति शब्देऽत्र ञितिणिति किति परे ।
अचामादेरचो वृद्धि र्जातार्थे क्रियतामिह ॥
प्रोष्ठपदासु सञ्जातः प्रोष्ठपादो वटुरयम् ।

स्थानान्तगोशालखरशालाच्च । ४ । ३ । ३४

स्थानान्तादथ गोशालात् खरशालादपि तथा ।
जातार्थं प्रत्ययस्यैव लुग्वा भवति बुध्यताम् ॥
गोस्थानः खरशालश्च गोशालो लुकि च कृते ।
शालायां क्रियते ह्रस्वस्तत्पुरुषे विशेषतः ॥

वत्सशालाभिजिदश्वयुक्शतभिषजो वा । ४।३।३६

वत्सशालाऽभिजिद्भ्याश्च लुग् जातार्थस्य वा भवेत् ।
अश्वयुक् शतभिषग्भ्याश्च लुग्वा भवति च पुनः ॥
वत्सशालो लुकि कृते वात्सशालो यदा न लुक् ।
एवमन्यप्रयोगोऽपि साधनीयो विचक्षणैः ॥

जातार्थे प्रतिप्रसूतोऽण् वा ङिद् वक्तव्यः । वा

जातार्थे प्रतिप्रसूतोऽण् ङिद्वा स्यादन्तिमे पदे ।
शातभिषस्तथा शातभिषजः शतभिषक् पुनः ॥

नक्षत्रेभ्यो बहुलम् । ४ । ३ । ३७

नक्षत्रेभ्यश्च बहुलं जातार्थप्रत्ययस्य लुक् ।
रोहिणी रौहिण शब्दो जातार्थे शैषिके भवेत् ॥

कृतलुब्धक्रीतकुशलाः । ४ । ३ । ३८

तत्र कृतोऽथवा लुब्धः क्रीतोऽस्ति कुशलोऽथवा ।
अण् प्रत्ययस्तु जायेत स्रौघ्नः स्रुघ्ने कृतोऽस्ति यः ॥

प्रायभवः । ४ । ३ । ३९ ।

तत्र प्रायभवस्त्वर्थे स्रौघ्न एवाणि तद्धिते ।

उपजानूपकर्णोपनीवेष्ठक् । ४ । ३ । ४०

उपजानूपकर्णोपनीवेष्ठक् प्रत्ययो भवेत् ।
औपजानुक इत्येवमौपकर्णिक इष्यते ॥
औपनीविक इत्यस्य साधनं ठकि प्रत्यये ।

सम्भूते । ४ । ३ । ४१

सम्भूतेऽप्यण् प्रत्ययः स्यात् स्रौघ्नः स्रुघ्ने समभवत् ।

कोशाड्ढञ् । ४ । ३ । ४२

कोशाड् ढञ् प्रत्ययस्तेन कौशेयं वस्त्रमुच्यते ।

कालात्साधु पुष्यत्पच्यमानेषु । ४ । ३ । ४३

कालादण् भवेत्साधौ पच्यमाने च पुष्यति ।
हेमन्ते साधुरस्त्येषो हैमन्तः प्राकार इति ।
शरदि ये च पच्यन्ते शारदाः शालेयः स्मृताः ॥
वसन्ते यानि पुष्यन्ति वासन्त्यश्च कुन्दलताः ।

उप्ते च । ४ । ३ । ४४

उप्यन्ते येऽत्र हेमन्ते हैमन्तास्ते यवाः स्मृताः ।

आश्वयुज्या वुञ् । ४ । ३ । ४५

वुञ् भवेदाश्वयुज्या वै उप्तेऽर्थे प्रकृतेरिह ।
स्युराश्वयुजका माषा आश्वयुज्यां भवन्ति ते ॥
ठञोऽपवादभूतोऽयं वुञ्प्रत्ययोऽत्र जायते ।

ग्रीष्म वसन्तादन्यतरस्याम् । ४ । ३ । ४६

ग्रीष्मादथ वसन्ताच्च वुञ् प्रत्ययो विभाषया ।
ग्रैष्मकं वुञि रूपं स्यादणि ग्रैष्मं प्रयुज्यते ॥
वासन्तकञ्च वासन्त मुप्ताद्यर्थे वुञादिना ।

देयमृणे । ४ । ३ । ४७

देयमृणे च तात्पर्ये कालाद्वुञ् प्रत्ययो भवेत् ।
मासे देयमृणं प्रोक्तं मासिकं नियमात्तु यत् ॥

कलाप्यश्वत्थयवबुसाद्वुन् । ४ । ३ । ४८

कलापिन स्तथाऽश्वत्थाद् यवबुसाच्च वुञ् भवेत् ।
कलापकमृणं किञ्चिदश्वत्थकमृणं पुनः ।
यवबुसकमृणं तद् यदा यवबुसं भवेत् ॥

अत्र स्पष्टता—

मयूराः कलापिनो भवन्ति
यस्मिन् काले तत्र देयमृणमित्यर्थः।
यदा अश्वत्थाः फलन्ति तत्काले देयमृणमित्यर्थः।
यदा यववुसमुत्पद्यते तत्र काले देयमृणमितिभावः।

ग्रीष्मावरसमाद्वुञ् । ४ । ३ । ४९

ग्रीष्मावरसमाद्वुञ् स्याद् देयेऽर्थे ग्रैष्मकं भवेत्।
ऋणमावरसमकं देयमागामिनि समे ॥

सांवत्सराग्रहायणीभ्यां ठञ्च । ४ । ३ । ५०

सांवत्सरिकमित्येवं सांवत्सरकमुच्यते ॥
ऋणमाग्रहायणिक माग्रहायणकं पुनः ।
ठञ्वुञौ विहितावत्र तस्माद्रूपं द्वयं वदेत्।

व्याहरति मृगः । ४ । ३ । ५१

सप्तम्यन्तादणादिः स्याद् व्याहरति मृगो यदि।
निशायां व्याहरति यो नैशो मृगश्च नैशिकः॥

तदस्य सोढम् । ४ । ३ । ५२

तदस्यसोढमित्यर्थे कालादणादयः स्मृताः।
अधीते यो निशायां स नैशो नैशिक उच्यते॥

तत्र भवः । ४ । ३ । ५३

तत्रभव इतीहार्थे भवेदण् घश्च प्रत्ययः।
स्रौघ्नः स्रुघ्ने भवः प्रोक्तो राष्ट्रे भवश्च राष्ट्रियः॥

दिगादिभ्यो यत् । ४ । ३ । ५५

यत् क्रियते दिगादिभ्यो दिश्यं कर्ण्यमुदाहृतम्।

शरीरावयवाच्च । ४ । ३ । ६२

शरीरावयवाद्यत् स्याद् दन्त्यं दन्ते भवं स्मृतम्।
कर्णेभवं भवेत् कर्ण्यं तथैवोष्ठ्यमिति स्मृतम्।

प्राचां नगरान्ते । ४ । ३ । २४

प्राचां देशे नगरान्ते पूर्वोत्तरपदस्य च ।
आदेरचो ञिति णिति किति च वृद्धिरिष्यते ।
भवो यः सुह्मनगरे स भवेत् सौह्मनागरः ॥

जङ्गलधेनुबलजान्तस्य विभाषितमुत्तरम् ।५।३।२५

जङ्गलान्तस्य धेन्वन्त वलजान्तस्य च पुनः ।
आदेरचो भवेद् वृद्धि र्नित्यं पूर्वे परे तु वा ॥
कौरुजङ्गलमित्येवं कौरुजाङ्गलमित्यपि ।
विग्रहोऽत्रविधातव्यो भवं यत् कुरुजङ्गले ॥
वैश्वधेनवमुच्येत तथैव वैश्वधेनुकम् ।
सौवर्णवलजं प्रोक्तं सौवर्णवालजं तथा ॥

दृति कुक्षिकलसि बस्त्यस्त्यहेर्ढञ् । ४ । ३ । ५५

दृतिकुक्षिकलशिभ्यो वस्तेरस्तेरहेश्च ढञ् ।
दार्तेयमथ कौक्षेयं कालशेयमिति भवेत् ॥
भवं वस्तुनि वास्तेय मास्तेयमाहेयमिति ।

ग्रीवाभ्योऽण् च । ४ । ३ । ५७

ग्रीवाया अण् ढञौ स्यातां ग्रैवं ग्रैवेयमित्यपि ।

गम्भीराञ्ञ्यः । ४ । ३ । ५८

ञ्यः प्रत्ययस्तु गम्भीराद् गाम्भीर्यमिति जायते ।

पञ्चजनादुपसंख्यानम् वा.

पञ्च जनादपि ञ्यः स्यात् पाञ्चजन्य स्ततो भवेत् ।

अव्ययीभावाच्च । ४ । ३ । ४९

परिमुखं भवश्चार्थे पारिमुख्यमुदाहृतम् ।

परिमुखादिभ्य एवेष्यते । वा.

तस्मात्स्यादौपकूलोऽत्र ञ्यः प्रत्ययो न जायते ।

अन्तः पूर्वपदाट्ठञ् । ४ । ३ । ६०

अन्तःपूर्वपदाच्छब्दाद् ठञेव जायते इह ।
अव्ययीभावत एवान्तर्वेश्मिकमिष्यते ॥
अन्तर्वेश्मं वेश्मनीति तत्र भवं च विग्रहः ।
आन्तर्गणिकमप्यत्र ठञि च प्रत्यये कृते ॥

अध्यात्मादेष्ठञिष्यते । वा.

अध्यात्मं भवमुच्चार्य आध्यात्मिकं भवेदिह ।
अध्यात्मश्चाकृतिगण स्तस्मादन्यत्र ठञ् पुनः ।

अनुशतिकादीनाञ्च । ७ । ३ । २०

उभयोः पदयो र्वृद्धिः स्यादनुशतिकादिषु ।
ञिण्णित्कित्तद्धितेष्वेव तस्मात् स्यादाधिभौतिकम् ॥
आधिदैविक मैहलौकिकञ्च पारलौकिकम् ।

देविकाशिंशपाऽदित्यवाड् दीर्घसत्रश्रेयसामात्।७।३।१

ञिति णिति कृति परे प्राप्तां वृद्धिं निषिध्य च ।
एतेषाञ्च पञ्चाना मात्वमादेरचो भवेत् ॥
दाविकं शांशपश्चैवं दात्यौहं श्रायसं भवेत् ।
शालयो दाविकाकूलाः दार्घसत्रञ्च साध्यताम् ॥
भवा ये देविकामूले दीर्घसत्रे भवञ्च यत् ।

ग्रामात्पर्यनुपूर्वात् । ४ । ३ । ६१

ग्रामात्पर्यनुपूर्वाट्ठञव्ययीभावतः पुनः ।
परिग्रामं भवं तत्र पारिग्रामिकमुच्यते ॥
अनुग्रामं भवश्चात्र आनुग्रामिक एव हि ।

जिह्वामूलाङ्गुलेश्छः । ४ । ३ । ६२

जिह्वामूलाङ्गुलेश्छः स्यात् जिह्वामूलीयमुच्यते ।
अङ्गुलीयमिदं तावदङ्गुलौ भवमुच्यते ।

वर्गान्ताच्च । ४ । ३ । ६३

वर्गान्तादपि छः प्रोक्त स्तत्रभवश्च विग्रहः ।
कवर्गीयं चवर्गीयं टवर्गीयमिति तथा ।

अशब्दे यत्खावन्यतरस्याम् । ४ । ३ । ६४

अशब्देऽर्थे च यत्खौ स्त श्छः प्रत्ययोऽपि पूर्वतः ।
मद्वर्ग्यो मद्वर्गीणश्च मद्वर्गीयोऽपि जायते ॥

कर्णललाटात् कनलंकारे । ४ । ३ । ६५

कर्णात् तथा ललाटात् कन् स्यादलङ्कारबोधने ।
कर्णिका कर्णभूषास्ति ललाटिकाऽपि भूषणे ।

तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ।४।३।६६

तस्य व्याख्यानमित्यर्थे व्याख्यातव्यनामतः ।
अण् प्रत्ययस्ततः सौपस्तैङः कार्तो ग्रन्थ इति ।
सुपां तिङां कृतामेषां व्याख्यानमिति विग्रहः ।
सुप्सु भवं भवेत् सौपं तैङं तिङ्सु भवं स्मृतम् ॥

बह्वचोऽन्तोदात्ताट्ठञ् । ४ । ३ । ६७

बह्वचष्ठञ् भवेदन्तोदात्तादेवेति निश्चयात् ।
षात्वणत्विक आख्यातो व्याख्याने षत्वणत्वयोः ।

ऋतुयज्ञेभ्यश्च । ४ । ३ । ६८

ठञ् भवेत् ऋतु यज्ञेभ्यः आग्निष्टोमिक इष्यते ।
व्याख्यानमग्निष्टोमस्य तत्रभवस्तु विग्रहः ॥

वाजपेयिक आख्येयः पाकयज्ञिक इत्यपि ।
नावयज्ञस्य व्याख्याने ग्रन्थः स्यान्नावयज्ञिकः ॥

अध्यायेष्वेवर्षेः । ४ । ३ । ६९

अध्यायोर्थः समायाति तदर्षेष्ठञ् विधीयते ।
व्याख्याने वा भवेऽध्यायो वासिष्ठिकः प्रयुज्यते ॥

वसिष्ठेन च यो दृष्टो मन्त्रो वसिष्ठ उच्यते ।
तस्य व्याख्यानमथवा तत्रभवश्च विग्रहः ॥

पौरोडाशात् पुरोडाशात् ष्ठन् । ४ । ३ । ७०

पौरोडाशात् पुरोडाशात् ष्ठन् प्रत्ययो विधीयते ।
पौरोडाशिक इत्येवं पुरोडाशिक उच्यताम् ॥

छन्दसो यदणौ । ४ । ३ । ७१

छन्दसो यदणौ स्यातां छन्दस्य श्छान्दसस्तथा ।

द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् । ४ । ३ । ७२

द्व्यजृद्ब्राह्मणशब्देभ्य ऋक्प्रथमाध्वरादपि ।
पुरश्चरणनाम्नोऽपि ठक्प्रत्ययो विधीयते ॥
पाशुकेऽत्र द्व्यचः ष्ठक् स्याच्चातुर्होतृक इष्यते ।
ब्राह्मणिकस्य च पश्चादार्चिकादिश्च साध्यते ॥
प्राथमिकश्चाऽऽध्वरिकः पौरश्चरणिकइति ।
आख्यातिको भवेदत्र नामिक इति साध्यते ॥

अणृगयनादिभ्यः । ४ । ३ । ७३

ऋगयनादिशब्देभ्यो भवेदण् प्रत्ययस्त्विह ।
ठजादेरपवादोऽयमार्गयनश्च सिद्ध्यति ॥
प्रयोगश्चौपनिषदो वैयाकरण इष्यते ।
ऋक्संहिता ऋगयनं तस्य व्याख्यान मुच्यते ।
तत्र भवोऽस्ति विग्रहः प्रत्ययोऽण् च विधीयते ॥

तत आगतः । ४ । ३ । ७४

तत आगत इत्यर्थे स्त्रौघ्नः स्त्रुघ्नात्समागते ।

ठगायस्थानेभ्यः । ४ । ३ । ७५

ठगायस्थानवाचिभ्यः शौण्डिकः शुण्डिकागतः ।
कार्कणस्तैर्थं इत्यादि साध्यतां तत आगते ॥

विद्यायोनिसंबधेभ्यो वुञ् । ४ । ३ । ७७

विद्यायोनिसंबन्धाद् वुञ् प्रत्ययो भवेदिह ।
आगतो य उपाध्यायादौपाध्यायिक इष्यते ॥
पितामहादागतेऽर्थे पैतामहक उच्यताम् ।

ऋतष्ठञ् । ४ । ३ । ७८

ऋतष्ठञ् प्रत्ययः प्रोक्तो होतृकं भ्रातृकं द्वयम् ।
होतुरागतमित्यत्र भ्रातुरागतमुच्यताम् ।

पितु र्यच्च । ४ । ३ । ७९

पितुर्यद्वुञ्द्वयं प्रोक्तं रीङृतश्च विधीयते ।
यस्येति च प्रवृत्याऽत्र पित्र्यं वुञि च पैतृकम् ॥
पितुरागतमित्यत्र विग्रहः क्रियतामिह ।

गोत्रादङ्कवत् । ४ । ३ । ८०

गोत्रादण् भवेदङ्कवदिति विग्रहो यदा ।
विदेभ्य आगतं वैदं गार्गं दाक्षमिति पुनः ॥

नञः शुचीश्वर क्षेत्रज्ञ कुशलनिपुणानाम् ।७।३।३०

आदेरचो वृद्धिरिह शुचीश्वरक्षेत्रज्ञकुशल निपुणस्य।
नञः परस्य च नियमः पूर्वपदे किन्तु वा वृद्धिः ॥
अशुचौ भवमाशौच मशौचमपि कथ्यते ।
आनैश्वर्यमनैश्वर्यमाक्षेत्रज्ञमिदं पुनः ॥
आकौशलमकौशलमानैपुणमनैपुणम् ।

हेतु मनुष्योभ्योऽन्यतरस्यां रूप्यः । ४ । ३ । ८१

रूप्यः स्यात्प्रत्ययो हेतो र्मनुष्यादपि वा ततः ।
समादागत मित्यत्र समरूप्यं समीपमपि ॥
विषमादागतं वस्तु विषमरूप्यमुच्यते ।
विषमीयमपि प्रोक्तं गहादित्वाद् यदाऽत्र छः ॥
देवदत्तरूप्यमिदं देवदत्तीयमित्यपि ।
दैवदत्तमपि प्रोक्तमण्यदाऽत्र विधीयते ॥

मयट् च । ४ । ३ । ८२

समाद्विषमशब्दाच्च देवदत्तान्मयड्भवेत् ।
समादागतमित्यर्थे सममयं प्रयुज्यते ॥

एवं विषममयं स्याद् देवदत्तमयं तथा ।
समीयं विषमीयश्च देवदत्तीयमाद्यपि ।
गहादित्वाच्छ प्रत्ययः पक्षेऽत्र जायते पुनः ।

प्रभवति । ४ । ३ । ८३

ततश्च प्रभवत्यर्थे भवेदण् प्रत्ययः सदा ।
हिमवतः प्रभवति गङ्गा हैमवती भवेत् ॥

विदूराञ् ञ्यः । ४ । ३ । ८४

विदूराञ् ञ्यः प्रयोक्तव्यो विदूराद् यः प्रभवति ।
वैदूर्यो मणिरुच्येत पदादौ वृद्धिरिष्यते ॥

तद्‌गच्छति पथि दूतयोः । ४ । ३ । ८५

तद्‌गच्छति समुच्चार्यं भवेदण् पथिदूतयोः ।
स्रुघ्नं गच्छति स स्रौघ्नः पन्था दूतोऽथवा भवेत् ।

अभिनिष्क्रामति द्वारम् । वा.

अभिनिष्क्रामति द्वारं तदिति विग्रहेऽण् भवेत् ।
अभिनिष्क्रामति स्रुघ्नं स्रौघ्नं रूपं प्रयुज्यते ॥
द्वारञ्च कान्यकुब्जस्य स्रौघ्नमस्तीति बुध्यताम् ।

अधिकृत्य कृते ग्रन्थे । ४ । ३ । ८७

अधिकृत्य कृतो ग्रन्थ स्तदिति विग्रहेऽत्र छः ।
शारीरिकमधिकृत्य कृतश्शारीरकीय इति ॥
भाष्यं शारीरकमिति स्यादभेदोपचारतः ।

शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः । ४ । ३ । ८८

शिशुक्रन्दसमसभद्वन्द्वेन्द्रजननात्तु छः ।
शिशुक्रन्दमधिकृत्य कृतो ग्रन्थोऽस्ति य इह ॥
स भवेच्छिशुक्रन्दीयो ग्रन्थएवेति बुध्यताम् ।
यमसभीय इत्येषः शब्दोऽपि छे च प्रत्यये ॥
किरातश्च अर्जुनश्च तौ किरातार्जुनौ स्मृतौ ।
तावधिकृत्य काव्यं यत् तत् किरातार्जुनीयकम् ॥
विरुद्धभोजनीयञ्च आकृतिगणतो भवेत् ।

सोऽस्य निवासः । ४ । ३ । ८९

सोऽस्य निवास इत्यर्थे देशादेरण् विधीयते ।
स्रौघ्नः स्रुघ्ने निवासोऽस्य स्रुघ्नदेशभवो जनः ॥

अभिजनश्च । ४ । ३ । ९०

सोऽस्याभिजन इत्यर्थे स्रौघ्न एव भवेदणि ।
स्रुघ्नोऽभिजन इत्येवं विग्रहश्चात्र जायते ॥
स्वयमागत्य वसति स निवास इह स्मृतः ।
अभिजनस्तु स प्रोक्तो यत्र पूर्वज आगतः ॥

आयुधजीविभ्यश्छः पर्वते । ४ । ३ । ९१

छः स्यादायुधजीविभ्यः प्रथमादिह पर्वतात् ।
हृद्गोलोऽभिजनः श्रुघ्नो येषामायुधजीविनाम् ।
हृद्गोलीयास्त एव स्यु रन्योऽप्येवंविधो भवेत् ॥

शण्डिकादिभ्यो ञ्यः । ४ । ३ । ९२

ञ्यो भवेच्छण्डिकादिभ्यः पूर्वत्राभिजने पुनः ।
शण्डिकोऽभिजनो यस्य शाण्डिक्यः स च कथ्यते ॥

सिन्धुतक्षशिलादिभ्योऽणञौ । ४ । ३ । ९३

सिन्धुतक्षशिलादिभ्यो भवेतामणजाविह ।
अण् भवेदत्र सिन्ध्वादे स्तक्षशिलादितश्च अञ् ।
सिन्धुरभिजनो यस्य स सैन्धव उदाहृत। ॥
तक्षशिलाऽभिजनोऽस्य सच ताक्षशिलो भवेत् ।

तूदीसलातुरवर्मतीकूचवाराड् ढक्छण्ढञ्यकः । ४ । ३ । ९४

तूदीसलातुरादेवं वर्मतीकूचवारतः ।
ढक्छणौ ढञ्यकौ प्रोक्तौ क्रमादेव विधीयते ।
सलातुरे च शोऽप्यस्ति कस्यापि मतमस्तिवै ।
तूदी अभिजनो यस्य स तौदेयः प्रकीर्तितः ॥
शलातुरमभिजनो यस्य स इति विग्रहे ।
शालातुरीय आख्यातः पाणिनि र्मुनिरस्त्यसौ ॥
वर्मत्यभिजनो ·यस्य वार्मतीयः स उच्यते ।
कूचवारोऽभिजनोऽस्य कौचवारः स उच्यते ।

भक्तिः । ४ । ३ । ९५

भक्तिः सोऽस्य समुच्चार्यं क्रियतेऽण् प्रत्ययः पुनः ।
स्रुघ्नो भक्तिरस्येति स्रौघ्नः प्रयोग इष्यते ।
भज्यतेसेव्यते भक्तिः सेवनीयश्च यद् भवेत् ॥

अचित्ताददेशकालाट्ठक् । ४ । ३ । ९६

अचित्तादिह ठक् प्रोक्तो देशकालभिदावतः ॥
अपूपा भक्तिरस्येति स आपूपिक उच्यते ।
पायसं भक्तिरस्येति पायसिकः प्रयुज्यते ॥

महाराजाट्ठञ् । ४ । ३ । ९७

ठञ् प्रत्ययो महाराजात् माहाराजिक इष्यते ।

वासुदेवार्जुनाभ्यां वुन् । ४ । ३ । ९८

आभ्यां वुन् प्रत्ययः कार्यो वासुदेवक उच्यते ॥
अर्जुनको ऽप्यनेनैव वुन् प्रत्यये कृते ।

गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् । ४ । ३ । ९९

बहुलं वुञ् भवेद् भक्तौ गोत्रक्षत्रियनामतः ।
ग्लौचुकायनकः प्रोक्तो नाकुलिकोऽपि सिद्धयति ॥
जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानाम् ।

बहुवचने । ४ । ३ । १००

जनपदस्वामिशब्दानां बहुत्वे च विवक्षिते ।
कार्यं जनपदवत्सर्वं प्रत्ययः प्रकृतिस्तथा ॥
अङ्गाः जनपदो भक्ति रस्येत्याङ्गक उच्यते ।
अङ्गा वा क्षत्रिया भक्ति विग्रहेऽप्याङ्गकः स्मृतः ॥

**स्पष्टीकरणम्—**

भक्तिरित्यादि तात्पर्ये बहुवचने च विग्रहे जनपदस्वामिवाचकेभ्यो जनपद्वद् वुञादि भवति ।

तेन प्रोक्तम् । ४ । ३ । १०१

तेन प्रोक्तं समुच्चार्यं छः प्रत्ययो विधीयते।
प्रोक्तं पाणिनिना यच्च पाणिनीयं तदेव वै ॥

तित्तिरवरतन्तुखण्डिकोखाच्छण् । ४ । ३ । १०२

तित्तिरे र्वरतन्तोश्च खण्डिकोखाच्च छण् भवेत्।
प्रोक्तं तित्तिरिणाऽधीते तैत्तिरीयस्तु स भवेत् ॥

काश्यपकौशिकाभ्यामृषिभ्यां णिनिः। ४ । ३ । १०३

ऋषिभ्यां काश्यपकौशिकाभ्याञ्च णिनि रिष्यते।
अधीते काश्यपेन प्रोक्तं काश्यपिनश्च ते ॥
ऋषिणा कौशिकेनोक्त मधीयते कौशिकिनः ॥

कलापिवैशम्पायनान्तेवासिभ्यश्च । ४ । ३ । १०४

कलापिनश्च ये छात्राः स्यु वैंशम्पायनस्य च।
तेभ्यो णिनि विधीयेत तेन प्रोक्तञ्च विग्रहे ॥

कलाप्यन्तेवसद्भ्यस्तु प्रोक्तं हरिद्रुणा वचः।
अधीयते बुधा हारिद्रयिणस्ते भवन्ति वै ॥
तुम्बुरो स्तौम्बुरविण उलपादौलपी भवेत्।
वैशम्पायन छात्रात्तु प्रयोग श्चावलम्बिनः ॥
आलिङ्गिनः प्रयुज्यन्तां कामलिनश्च ताण्डिनः।

पुराण प्रोक्तेषु ब्राह्मणकल्पेषु । ४ । ३ । १०५

तृतीयान्ताण्णिनिः प्रोक्ते पुराणप्रोक्तबोधने ॥
ब्राह्मणकल्पबोधेऽपि णिनिरत्र विधीयते।
पुराणेन चिरत्नेन मुनिना च प्रोक्ता इति ॥

ब्राह्मणे—

भल्लुना प्रोक्तमित्यर्थे भाल्लविनो भवन्ति ते।
शाट्यायनेन च प्रोक्ताः शाट्यायनिनो भवन्ति च।

कल्पे पिङ्गेन च प्रोक्तः पैङ्गीकल्प उदाहृतः ॥
पुराणेत्याद्यभावेतु याज्ञवल्कानि आदिषु।

दोषः स्यादाश्मरथेऽत्र कल्पे तस्मान्निगद्यते।
आपत्यस्येति यलोपो जायतेऽणि च कृते॥

शौनकादिभ्यश्छन्दसि । ४ । ३ । १०६

छन्दसि शौनकादिभ्यो णिनिःप्रोक्तमिति स्थितौ।
शौनकिनश्च ते सन्ति शौनकोक्तमधीयते॥

कठचरकाल्लुक् । ४ । ३ । १०७

कठचरकात्परस्यात्र लुक् प्रोक्तस्य कलापिना।
कठास्तथैव चरकाः प्रत्ययस्य लुकि कृते॥

कलापिनोऽण् । ४ । ३ । १०८

कलापिनोऽण् च कालापा स्तेन प्रोक्तमधीयते।
अण् प्रत्यये टिलोपोऽत्र भवेन्नान्तस्य वार्त्तिकात्॥

अत्र टिलोपकार्याय वार्त्तिकम्—

नान्तस्यटिलोपे सब्रह्मचारिपीठसर्पिकलापि कौथुमितैतिलिजाजलिलाङ्गलि शिलालिशिखण्डि सूकरसद्मसुपर्वणामुपसंख्यानम् । वा

नान्तस्य च टिलोपेऽत्र पीठसब्रह्मचारिणौ।
कलापी कौथुमी सर्पिस्तैतिलि र्जाजलिः पुनः॥
लाङ्गली च शिलाली च शिखण्डी सूकरस्तथा।
अस्ति सद्म सुपर्वापि टिलोपे गणिता इमे॥
एतेषामपि टिलोपः स्यादणि प्रत्यये कृते।

छगलिनो ढिनुक् । ४ । ३ । १०९

छगलिनो ढिनुक् प्रोक्तश्छागलेयी ततो भवेत्।
प्रोक्तं छगलिनाऽधीते विग्रहोऽत्र प्रदर्श्यताम्॥

पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः । ४ । ३ । ११०

पाराशर्यशिलालिभ्यां णिनिरेव विधीयते।
भिक्षो र्नटस्य सूत्रेऽर्थे तेनप्रोक्तश्च विग्रहः॥

पाराशर्येण प्रोक्तं तद् भिक्षुसूत्रमधीयते।
पाराशरिण इष्यन्ते शैलालिनो नटाः स्मृताः॥

कर्मन्दकृशाश्वादिनिः। ४। ३। १११

कर्मन्दादथ कृशाश्वादिनिः प्रत्यय इष्यते।
भिक्षुनटोभयस्यैव सूत्रेप्रोक्ते च विग्रहे॥
कर्मन्देन च यत्प्रोक्तं सूत्रं तावदधीयते।
कर्मन्दिनस्तु ते सन्ति भिक्षवः कथिताः पुनः॥
कृशाश्व प्रोक्तसूत्रस्याध्ययने स्युः कृशाश्विनः।

तेनैकदिक्। ४। ३। ११२

तेनैकदिगिति बोधे तृतीयान्तादणादयः।
सुदाम्ना अद्रिणा एकदिगिति विग्रहेऽण् यदा॥
सौदामनी भवेद्रूप मेवमन्योऽपि साध्यताम्।

तसिश्च। ४। ३। ११३

तसिरपि भवेदत्र तेनैकदिगिति क्रमे।
विग्रहः पीलुमूलेन एकदिक् पीलुमूलतः॥

उरसो यच्च। ४। ३। ११४

उरसो यत् तसिश्चापि तेनैकदिगिति क्रमे।
उरस्यश्च उरस्तश्च उरसा एकदिग् भवेत्॥

उपज्ञाते। ४। ३। ११५

तृतीयान्तादुपज्ञाते छप्रत्ययो विशेषतः।
पाणिनिना उपज्ञातं पाणिनीयं प्रसिद्ध्यति॥
आत्मना ज्ञातमेवात्र उपज्ञातं विदु र्बुधाः।

कृते ग्रन्थे। ४। ३। ११६

कृते ग्रन्थे विग्रहेऽत्र भवेदण् प्रत्ययस्त्विह।
वररुचिना कृतो ग्रन्थो वाररुचः प्रसिद्ध्यति॥

संज्ञायाम्। ४। ३। ११८

तेन कृतं समुच्चार्यं संज्ञायामण् विधीयते।
मक्षिकाभिः कृतं द्रव्यं माक्षिकं मधु कथ्यते।।

कुलालादिभ्यो वुञ् । ४ । ३ । ११८

वुञ् प्रत्ययः कुलालादेः कृतं तेनेतिविग्रहे।
कौलालकं कुलालेन कृतं किञ्चन वस्तु च।।
वरुणेन कृतं द्रव्यं वस्तु वारुणिकं भवेत्।

क्षुद्राभ्रमर वटर पादपादञ् । ४ । ३ । ११९

क्षुद्रादिभ्यस्तु चतुर्भ्यस्तु भवेदञ् प्रत्ययस्त्विह।
संज्ञायां प्रकृतावेव तेन कृते च विग्रहे।।
क्षुद्राभिः कृतमुच्चार्य क्षौद्रं पदञ्च साध्यते।
भ्रामरं वाहरञ्चापि पादपं साध्यतामिह।

तस्येदम् । ४ । ३ । १२०

तस्येदमिति भाषित्वा प्रत्ययोऽण् च विधीयते।
उपगोरिदमस्तीति भवेदौपगवं पदम्।।

वहेंस्तुरणिट् च । वा

संवोढुः स्वं सांवहित्रं वहेस्तुरणिट्चकृते।

अग्नीधः शरणेरण्भंच । वा

अग्नीधश्शरणेरण्भं कार्यमाग्नीध्रमिष्यते।
भत्वेन घस्यजश्त्वमित्येवात्र विशेष्यता।।

समिधामाधाने षेण्यण् । वा

आधाने समिधां षेण्यण् सामिधेन्यस्ततो भवेत्।
षित्वान्ङीष् सामिधेनी इह प्रयोगः प्रसिद्ध्यति।।

रथाद्यत् । ४ । ३ । १२१

रथ्यं रथस्य चक्रं स्याद् रथाद्यदत्र जायते।

पत्रपूर्वादञ् । ४ । ३ । १२२

पत्र पूर्वाद्रथाद्यञ् स्यात् पत्रं वाहनमुच्यते।
इदमाश्वरथस्योक्त्वा आश्वरथम् प्रकीर्तितम्।।

पत्राध्वर्युपरिषदश्च । ४ । ३ । १२३

पत्राध्वर्यु परिषदोऽञ् प्रत्ययो जायते परम् ।
पत्राद् वाह्य एवार्थे विधीयतोऽञिति स्थितिः ॥
अश्वस्येदं वहनीय माश्वं रूपमुदाहृतम् ।
अध्वर्योरिदं वस्तु भवे दाध्वर्यवं किल ॥
पारिषदं परिषदामिदमस्तीति विग्रहे ।

हलसीराट्ठक् । ४ । ३ । १२४

ठग् भवेद्धल सीराभ्यां हालिकं सैरिकं स्फुटम् ।
हलस्येदं च सीरस्य विग्रहो दर्श्यतामिह ॥

द्वन्द्वाद्वुन् वैरमैथुनिकयोः । ४ । ३ । १२५

वैरे च मैथुने वाच्ये द्वन्द्वा द्वुन् प्रत्ययो भवेत् ।
कुत्स कुशिकिका, काकोलूकिका विदिता खलु ॥
मैथुनोऽर्थोऽस्ति पूर्वेऽत्र परे च वैर मस्ति वै ।

वैरे देवासुरादिभ्यः प्रतिषेधः । वा

वैरे देवा सुरादिभ्यो वुञ् प्रत्ययो न जायते ।
तस्मादण्विधानेन दैवासुरं पदं भवेत् ॥

गोत्रचरणाद्वुञ् । ४ । ३ । १२६

वुञ् भवेद् गोत्रचरणादौपगवकमुच्यताम् ।

धर्माम्नाययोरिति वक्तव्यम् । वा

धर्मे तथा च आम्नाये चरणात् तेन काठकम् ।

सङ्घाङ्कलक्षणेष्वञ्यञिञामण् । ४ । ३ । १२७

सङ्घाङ्कलक्षणघोषेष्वञ्यञिञन्तशब्दतः ।
अण् प्रत्ययो विधातव्यो गार्गो दाक्षश्च सिध्यति ॥
तेनाधीत मिति प्रोच्य प्रत्ययोऽत्र विधीयते ।

शाकलाद्वा । ४ । ३ । १२८

शाकलादण् विकल्पेन पक्षे वुञ् चरणाद् भवेत् ।
शाकलाः शाकलैः प्रोक्तमधीयते भवन्ति ते ।।
तेषां सङ्घोऽथ घोषो वा शाकलः परिकीर्तितः ।
पक्षे वुञ् शाकलकः स्याल्लक्षणे शाकलं भवेत् ।।

छन्दोगौक्थिक याज्ञिक बह्वृचनटाञ्ज्यः । ४।३।१२९

छन्दोगौक्थिकशब्दाभ्यां याज्ञिकाद्बह्वृचादपि ।
नट शब्दाद् विधीयेत ञ्यः प्रत्ययो विचक्षणैः ।।
छन्दोगानामिदं तावच् छान्दोग्य मुच्यते वुधैः ।
औक्थिक्यमथ याज्ञिक्यं वाह्वृच्यं नाट्यमित्यपि ।।
नटानां धर्मं आम्नायो विग्रहो दर्श्यतामिह ।
याज्ञिकस्य नटस्येदं विग्रह श्च भविव्यति ।।

न दण्डमाणवान्तेवासिषु । ४ । ३ । १३०

सन्ति दण्डप्रधाना ये त एव दण्डमाणवाः ।
तेषु शिष्येषु सत्स्वत्र वुञ् प्रत्ययो न जायते ।।
दाक्षीणामिमे दाक्षा गोत्रे वुञ् प्रत्ययो नहि ।
दाक्षाश्चदण्ड माणवाः शिष्या भवन्ति प्रायशः ।

रैवतिकादिभ्यश्च । ४ । ३ । १३१

छः स्याद्रैवतिकादिभ्य स्तस्येदमिति विग्रहे ।
अयं रैवतिकीयोऽस्ति वैजवापीय उह्यताम् ।।

कौपिञ्जलहास्तिपदादण् । ४ । ३ । १३२

कौपिञ्जलात् तथा हास्तिपदादण् प्रत्ययः पुनः ।
कुपिञ्जलस्य अपत्यं कौपिञ्जलश्च जायते ।
अण् निपातनतः पूर्वं तदन्तादण् पुनर्भवेत् ।।
तस्येदमिति तात्पर्ये स्यादणन्तादणेव हि ।
हास्तिपादोऽप्यणन्तादण् प्रत्ययेनात्र सिद्धयति ।।
गोत्रवुञोऽपवादोऽयमणस्तीति विभाव्यताम् ।

आथर्वणिकस्येकलोपश्च । ४ । ३ । १३३

आथर्वणिकशब्दादण् इक लोपः सहैव स्यात् ।
आथर्वणोभवेत्कर्म आम्नायो वा विभाव्यताम् ॥
चरणवुञोऽपवादः प्रत्ययोऽणिह जायते ॥

इति तद्धितेषु शैषिकप्रकरणम्



# अथ तद्धितेषु प्राग्दीव्यतीयप्रकरणम्

## तस्य विकारः । ४ । ३ । १३४

षष्ठ्यन्ताच्च विकारे स्युरणादि प्रत्यया इह ।
तस्य विकारः सूत्रस्य तात्पर्यमिदमस्ति वै ॥

## अश्मनो विकारे टिलोपो वक्तव्यः । वा

अश्मनस्तु विकारे स्यादण् टिलोपोऽपि जायते ।
अश्मनो विकार आश्मो भास्मनो मार्तिकस्तथा ॥
चर्मणस्तु विकारे स्याच्चार्मः कोशार्थ वोधने ।
टिलोप उपसंख्यानादण्भवेत् प्रत्ययोऽपि च ॥

## अवयवे च प्राण्योषधिवृक्षेभ्यः । ४ । ३ । १३५

विकारेऽवयवे प्राण्योषधिवृक्षत्रयादिह ।
अणेव स्याच्च मायूरो मौर्वं पैप्पलमादि च ॥
मयूरस्यावयवः कार्यो विकारो वाऽत्र विग्रहः ।
मौर्वं काण्डं भवेद् भस्म पैप्पलं साध्यतामिह ॥

## बिल्वादिभ्योऽण् । ४ । ३ । १३६

बिल्वादिभ्योऽणिति प्रोक्तं बैल्वं रूपमुदाहरेत् ।
व्रीहिः काण्डो मसूरश्च मुद्गगोधूमवेणवः ।
कर्पासी पुनरिक्षुश्च बिल्वादिगणवर्तिनः ॥
एतेभ्योऽत्र विकारे स्यादण् प्रत्ययो विशेषतः ।

## कोपधाच्च । ४ । ३ । १३७

कोपधादण् विकारे स्यात् तार्कवं तैत्तिडीकमिति ।

## त्रपुजतुनोः षुक् । ४ । ३ । १३८

अण् भवेत् त्रपुनः षुक् च जतुनोऽप्यण् षुगागमः ।
त्रापुषं जातुषं रूपं विकारे तस्य जायते ॥

ओरञ् । ४ । ३ । १३९

उकारान्ताद्विकारेऽर्थे अञ् भवेद्दैवदारवम् ।
भद्रदारो विकारस्तु भाद्रदारवमुच्यते ॥

अनुदात्तादेश्च । ४ । ३ । १४०

अञ् प्रत्ययोऽनुदात्तादे र्दाधित्थं कापित्थमिति ।

पलाशादिभ्यो वा । ४ । ३ । १४१

पलाशादे विकल्पेनाण् पालाशं कारीरमिति ।

शम्याः ष्लञ् । ४ । ३ । १४२

विकारेऽवयवे शम्याः ष्लञ् शामीलं भस्म उच्यते ।
षित्वान् ङीषिति शामीली स्रुक् होमकरणं स्मृतम् ॥

मयड् वैतयो र्भाषायामभक्ष्याच्छादनयोः । ४ । ३ । १४३

सर्वाभ्यश्च प्रकृतिभ्यो विकारेऽवयवे पुनः ।
मयड् वा जायते किन्तु भक्ष्याच्छादनयो र्नहि ।
अश्मनस्तु विकारः स्यादाश्ममयमाश्मनम् ॥
अभक्ष्येति निषेधे न मौद्गः सूपोऽत्र नाऽभवत् ।
आच्छादनेऽपि नायं स्यात् कार्पासमाच्छादने ॥

नित्यं वृद्धशरादिभ्यः । ४ । ३ । १४४

विकारेऽवयवे नित्यं मयड् वृद्धशरादितः ।
आम्रमयं शरमयं दर्भमयञ्च मृन्मयम् ॥

एकाचो नित्यम् । वा

एकाचो नित्यमेव स्यात् त्वङ्मयं वाङ्मयमिति ।
कथं तर्हि भवेदाप्यम्मय मित्येतदुच्यताम् ॥
तस्ये दमित्यणन्तात्स्वार्थे ष्यञ् प्रत्ययेन स्यात् ॥
अपामिदं भवेदापं ततः स्वार्थे ष्यञि कृते ।
आप्यञ्च सिद्धचतीत्यतदर्थं न कष्टकल्पना ॥

गोश्च पुरीषे । ४ । ३ । १४५

गोः पुरीषे मयण् नित्यं गोमयं विदितं बहु ।

पिष्टाच्च । ४ । ३ । १४६

पिष्टादपि मयट् कार्यं भस्म पिष्टमयं भवेत् ॥

संज्ञायां कन् । ४ । ३ । १४७

पिष्टात् कन् स्याच्च संज्ञायां पिष्टकोऽपूप इष्यते ।

व्रीहेः पुरोडाशे । ४ । ३ । १४८

पुरोडाशे मयड् व्रीहे व्रीहिमयः पदं ततः ।
अन्यार्थे व्रैहमित्येव प्रयुच्यतेऽपण्डितैः ॥

असंज्ञायां तिलयवाभ्याम् । ४ । ३ । १४९

असंज्ञायां मयड् वाच्यं तिलमयं यवमयम् ।
संज्ञायामणेव स्यात् तैलं यावक उच्यते ॥

तालादिभ्योऽण् । ४ । ३ । १५२

अञ्मयटौ प्रबाध्यैव तालादिभ्योऽण् विधीयते ।
तालाद्धनुषि तालं स्यादन्यत्र तालमयमिति ॥ ग०
अणि कृते भवेदैन्द्रायुधमिति प्रयुज्यते ॥

जातरूपेभ्यः परिमाणे । ४ । ३ । १५३

जातरूपस्य पर्यायात् परिमाणेऽण् विधीयते ।
हाटकस्तापनीयोऽस्ति सौवर्णे निष्क उच्यते ॥

प्राणिरजतादिभ्योऽञ् । ४ । ३ । १५४

प्राणिनो रजतादेश्च भवेदञ् प्रत्ययः खलु ।
शौकं वाकं प्रसाध्यात्र राजतं शैशकं वदेत् ॥

ञितश्च तत्प्रत्ययात् । ४ । ३ । १५५

विकारावयवे यो ञित् तदन्तादञ् तदर्थयोः ।
शामीलस्य विकारोऽपि शामीलमिति कथ्यते ॥

दाधित्थमथ कापित्थ मेवमेव सुसाधयेत् ।

क्रीतवत्परिमाणात् । ४ । ३ । २५६

क्रीतवत्परिमाणात्स्युः प्रत्ययाश्च ठगादयः ।
नैष्कं निष्केन क्रीतं स्याद् विकारस्तस्य नैष्किकः ।
शतिकः शत्य इत्यादि साध्यते यट्ठगादिना ॥

उष्ट्राद्वुञ् । ४ । ३ । १५७

उष्ट्राद्वुञ् विधातव्यमौष्ट्रकं रूपमिष्यते ।

उमोर्णयो र्वा । ४ । ३ । १५८

भवेतामणञौ वुञ् च प्रत्ययोऽपि उमोर्णयोः ।
औममौमक मित्येव मौर्णमौर्णकमिष्यते ॥

एण्या ढञ् । ४ । ३ । १५९

एण्या ढञ् प्रत्ययो ज्ञेय एणेयमिति साध्यताम् ।

गोपयसो र्यत् । ४ । ३ । १६०

गोपयसो र्यदेवास्ति गव्यं पयस्यमिष्यते

द्रोश्च । ४ । ३ । १६१

द्रोश्च सूत्रेण यत्कार्यं द्रव्यं द्रोर्यति च कृते ।

माने वयः । ४ । ३ । १६२

माने वयो भवेद् द्रोश्च द्रुवयं रूपमुच्यते ।
यौवतं द्रुवयं पाय्यमिति माने प्रदर्शितम् ॥

फले लुक् । ४ । ३ । १६३

विकारेऽवयवे जातः प्रत्ययो लुक्यति फले ।
आमलक्याः फलं ज्ञेय मामलकमिदं त्वया ॥

प्लक्षादिभ्योऽण् । ४ । ३ । १६४

प्लक्षादिभ्यो न लुग् वाच्यं प्लाक्षमण्प्रत्ययेन स्यात् ।

न्यग्रोधस्य च केवलस्य । ७ । ३ । ५

न्यग्रोधस्य न वृद्धिः स्यात् किन्त्वैजागम इष्यते ।
नैयग्रोधं फलं प्रोक्तं विकारेऽवयवेऽपि तत् ॥

जम्ब्वा वा । ४ । ३ । १६५

जम्ब्वा अण् स्याद्विकल्पेन जाम्बवं जम्बु इत्यपि ।
लुप्चेति जायते लुब्वा फलार्थं प्रत्ययस्य च ॥

लुप् च । ४ । ३ । १६६

जम्ब्वाः फल प्रत्ययस्य लुब् विकल्पेन जायते ।
जम्ब्वाः फलं भवेज्जम्बू र्युक्तवद्वचनं लुपि ॥

फलपाकशुषामुपसख्यानम् । वा

लुक्कार्यस्योपसंख्यानं फलपाकशुषामपि ।
प्रत्यये सति लुप् तस्य मुद्गास्तथाच व्रीहयः ॥

पुष्पमूलेषु बहुलम् । वा

पुष्पमूलेषु बहुलं लुब् भवेदिति बुध्यताम् ।
विदारी मल्लिका जाती तस्याः पुष्पे फलेऽपि च ॥
पाटलानीह साल्वानि बहुलान्नहि लुग् भवेत् ।
अशोकं करवीरञ्च लुकं कृत्वा प्रयुज्यते ॥

हरीतक्यादिभ्यश्च । ४ । ३ । १६७

हरीतक्यादि शब्देभ्यो लुप्यति फलप्रत्ययः ।
हरीतक्यः प्रयुज्यन्ते हरीतक्याः फलान्यपि ॥

कंसीय परशव्ययो र्यञञौ लुक् च । ४ । ३ । १६८

कंसीयपरशव्याभ्यां यञञौ भवतः पुनः ।
छयतोरत्रलोपोऽपि क्रियते पूर्वजातयोः ॥

हितं कंसाय कंसीयं छप्रत्ययेन जायते।
ततो यञि कृते रूपं कांस्यमेवं प्रसिद्ध्यति॥
परशवे हितं वाच्यं परशव्यं स्वरूपतः।
विकारस्तस्य कथ्येत पारशवो विचक्षणैः॥

इति तद्धितेषुप्राग्दीव्यतीय प्रकरणम्



# अथ तद्धितेषु ठगधिकारः

प्राग्वहतेष्ठक् । ४ । ४ । १

तद्वहतीत्यतः पूर्वं ठगधिकार इष्यते ।

तदाहेति माशब्दादिभ्य उपसंख्यानम् । वा

तदाह विग्रहः कार्यंष्ठक् प्रत्ययविधाविह ।
माशब्दः कारि यआह स स्यान्माशब्द कारिकः ॥
नित्यश्शब्दस्तु यः प्राह स भवेन्नैत्यशब्दिकः ।
कार्यश्शब्दस्तुयः प्राह स विज्ञ कार्यशब्दिकः ॥

स्वागतादीनाञ्च । ७ । ३ । ७

स्वागतादि गणान्तानां नैजागमो विधीयते ।
स्वागतमिति य आह स्वागतिकः स उच्यते ॥
साध्वरिकः प्रयोगोऽपि ठकि ऐजागमं विना ।

अत्र विशेषः—

स्वस्येदं विग्रहे सौवं रूपं द्वारादि पाठतः ॥
स्वापतेयं ढकि कृते अत्राप्यैजागमो नहि ।
स्वपतौ साधुरित्येवं विग्रहः परि दर्शितः ॥
स्वाराज्यमिति वक्तव्य मैजागमं विनैव हि ।
स्वाङ्गिर्व्याङ्गि स्तथाऽन्यश्च सिद्धयतीञि कृते पुनः ।
स्वाङ्गस्यापत्यमित्येवं व्यङ्गस्यापत्यमुच्यताम् ॥
ऐजागम निषेधस्तु प्रकृताविह वर्तते ।
व्यवहारेण चरति स भवेद् व्यावहारिकः ॥

आहौ प्रभूतादिभ्यः । वा

आह अर्थे प्रभूतादेष्ठक् प्रत्ययस्तु जायते ।
प्रभूतमाह स एव प्राभूतिको निगद्यते ॥
पार्याप्तिको भवेदेवं पर्याप्तिमाह विग्रहे ।

पृच्छतौ सुस्नातादिभ्यः । वा

पृच्छतौ विग्रहे सुस्नातादिभ्यष्ठग् विधीयते ।
सुस्नातं पृच्छतीत्यर्थे सौस्नातिकः प्रयुज्यते ॥
पृच्छति सुखशयनं सौखशायनिकश्च सः ।
अनुशतिकादिपाठाद् वृद्धिः स्यादुभये पदे ॥

गच्छतौ परदारादिभ्यः । वा

गच्छतौ परदारादे ष्ठक्कृते पारदारिकः ।
गच्छति गुरुतल्पं यः स भवेद् गौरुतल्पिकः ॥

तेन दीव्यति खनति जयति जितम् । ४ । ४ । २

तेन दीव्यति जितं वा खनतीत्यादिविग्रहे ।
ठक् क्रियते ततो रूपमाक्षिक आभ्रिकस्तथा ॥
अक्षै र्दीव्यति पूर्वस्मिन् विग्रहो दर्श्यतामिह ।
अभ्र्या खनति यः सोऽत्र आभ्रिको जन उच्यते ॥
अक्षै र्जितमाक्षिकं स्याट् ठक् प्रत्ययः प्रवर्तते ।
अभ्रिः स्त्री काष्ठकुद्दालः कोशोऽत्र स्मर्यतां पुनः ॥

संस्कृतम् । ४ । ४ । ३

तेन संस्कृतमुच्चार्य ठक्प्रत्ययो विधीयते ।
दध्ना संस्कृतमित्येव दाधिकं वस्तु कथ्यते ॥
संस्कृतं यन्मरीचेन वस्तु मारीचिकं च तत् ।

कुलत्थकोपधादण् । ४ । ४ । ४

कुलत्थ कोपधादण् स्याट् ठक् नैवात्र प्रवर्तते ।
कुलत्थैः संस्कृतं वस्तु कौलत्थं परिकीर्तितम् ॥
संस्कृतं तिन्तिडीकेन तैन्तिडीकमुदाहरेत् ।

तरति । ४ । ४ । ५

तरति विग्रहे ठक् स्याद् औडिपिकस्तु नाविकः ।

गोपुच्छाच्च । ४ । ४ । ६

गोपुच्छाट् ठञेव स्याद् गौपुच्छिकाः मुमूर्षवः ॥

नौद्व्यचष्ठन् । ४ । ४ । ७

नौद्व्यचष्ठन्निति प्रोक्तं नाविको घटिकस्तथा ।
बाहुभ्यां तरतीत्यत्र बाहुका बाहुकोऽथवा ॥

चरति । ४ । ४ । ८

चरत्यर्थे तृतीयान्ताद् ठक् प्रत्ययः पुनः स्मृतः ।
हास्तिकस्तु भवेदत्र यश्च तरति हस्तिना ॥
चरति शकटेनात्र शाकटिकस्तु मादृशः ।

आकर्षात् ष्ठल् । ४ । ४ । ९

आकर्षेण चरत्यर्थे आकर्षिकस्तु ठक्कृते ।
निकषोपल आकर्ष स्तेन चरति विग्रहः ॥

पर्पादिभ्यः ष्ठन् । ४ । ४ । १०

पर्पादिभ्यः ष्ठनेव स्याच्चरतीति च विग्रहे ।
पर्पेण चरतीत्यर्थे पर्पिकः पर्पिकी पुनः ॥
चरन्ति पङ्गवो येन तत्काष्ठं पर्पमुच्यते ।
अश्विको रथिकश्चापि तेन चरतिविग्रहे ॥

श्वगणाट्ठञ्च । ४ । ४ । ११

श्वगणाद् ठञ् विधातव्यं श्वगणिका प्रयुज्यते ।
चकारात् ष्ठन्न्नविज्ञेयमस्योदाहरणं पुनः ॥

श्वादेरिञि । ७ । ३ । ८

श्वादेरिञि भवेन्नैजागमोऽत्रेति विचारयेत् ।
श्वभस्त्रस्यापत्यमुक्त्वा श्वाभस्त्रिः साध्यतामिह ॥
श्वादंष्ट्रिरपि जायेत तदादिविधिबोधनात् ।
ऐजागमनिषेधस्तु श्वादेरिञीति सूत्रतः ॥

इकारादावितिवाच्यम् । वा

स्वागणिकः स्वागणिकी चरति श्वगणेन वा ।

स्वर्गणिकः स्वर्गणिकीरूपमत्रापि जायते ॥
ऐजागम निषेधस्तु श्वादेरित्येव जायते ।

पदान्तस्यान्यतरस्याम् । ७ । ३ । ९

पदान्तस्यान्यतरस्यामैजागमो विधीयते ।
श्वादेरङ्गस्य एवायमैजागमो विकल्पतः ।
श्वापदस्य इदमिति शौवापदश्च श्वापदम् ॥

वेतनादिभ्यो जीवति । ४ । ४ । १२

तेन जीवति इत्यर्थे वेतनादेस्तु भवेत् ।
वैतनिकः सएवात्र यो वेतनेन जीवति ॥
धनुषा जीवतीत्यर्थे धानुष्कश्च प्रयुज्यते ।

वस्नक्रयविक्रयाट्ठन् । ४ । ४ । १३

एभ्यष्ठन् प्रत्ययः कार्य स्तेन जीवति विग्रहे ।
वस्निकस्तु स एव स्यात् वस्नेन जीवति च यः ॥
क्रयविक्रयग्रहणं संघातविगृहीतार्थम् ।
क्रयिको विक्रयिकश्च क्रयविक्रयिकस्तथा ।
रूपत्रयं प्रयोक्तव्यं तेन जीवति विग्रहे ॥

आयुधाच्छ च । ४ । ४ । १४

छठनौ आयुधात् स्यातां जीवति तेन विग्रहे ।
छकृते आयुधीयः स्यादायुधिकष्ठनि कृते ॥

हरत्युत्सङ्गादिभ्यः । ४ । ४ । १४

उत्सङ्गादितृतीयान्ताद् ठक् प्रत्ययो विधीयते ।
उपादत्ते नयति वा तात्पर्यं हरतेरिह ॥

भस्त्रादिभ्य स्ठन् । ४ । ४ । १६

भस्त्रादिभ्यस्ठनेव स्याद् भस्त्रया हरति भस्त्रिकः ।
षित्वान्ङीष् भस्त्रिकीति प्रयोक्तुं शक्यते बुधैः ॥

विभाषा विवधात् । ४ । ४ । १७

विविधाद् ष्ठन् विकल्पेन पक्षे ठगपि जायते ।
विविधेन चरति सः विविधिको वैयधिकः ॥
एकदेशविकृतस्यानन्यत्वाद् वीवधादपि ।
वीवधिको वैवधिकी कथ्यते भारवाहके ॥
वद्धशिक्ये उभयतः स्कन्धकाष्ठे तु वीवधः ।

अण् कुटिलिकायाः । ४ । ४ । १८

अण् भवेत् कुटिलिकायाः कौटिलिकश्च साध्यते ।
मृगान् हरति वाऽङ्गारान् कुटिलिकयेति विग्रहः ।
व्याधानां गतिविशेषः कुटिलिका निगद्यते ॥
तस्मात् कौटिलिको व्याधः कर्मारो वाऽत्र बुध्यताम् ।

निर्वृत्तेऽक्षद्यूतादिभ्यः । ४ । ४ । १९

अक्षद्यूतादिशब्देभ्य ठक् निर्वृत्तेऽत्र जायते ।
अक्षद्यूतेन निर्वृत्तं वैरं स्यादाक्षद्यूतिकम् ॥

त्रेर्मम् नित्यम् । ४ । ४ । २०

त्रिप्रत्ययान्तप्रकृतिकतृतीयान्तस्थितौ सदा ।
मप् प्रत्ययश्च निर्वृत्ते जायते नित्यमेव हि ॥
कृत्या निर्वृत्तमेवात्र कृत्त्रिमं परिकीर्तितम् ।
निर्वृत्तं यच्च पाकेन पक्त्रिमं कथ्यते च तत् ॥

भावप्रत्ययान्तादिमप् वक्तव्यः । वा

भावप्रत्ययशब्दान्तादिमप् प्रत्यय इष्यते ।
पाकिमं त्यागिमं रूपं निर्वृत्तं तेन तेन हि ॥
अपमित्ययाचिताभ्यां क्रमात् स्याताञ्च कक्कनौ ।
अपमित्येति ल्यबन्तं गृह्यते सूत्रदर्शिते ॥
अपमित्य च निर्वृत्त मापमित्यकमुच्यते ।
याचितेन च निर्वृत्ते याचितकं प्रयुज्यते ।

संस्कृते । ४ । ४ । २२

संसृष्टेऽर्थे तृतीयान्तात् तद्धितष्ठग् विधीयते ।
दध्ना संसृष्टमित्यत्र दाधिकं कथ्यते बुधैः ॥

चूर्णादिनिः । ४ । ४ । २३

चूर्णादिनिस्तु जायेत अपूपाश्चूर्णिनः स्मृताः ।
विग्रहः क्रियतामत्र चूर्णैः संसृष्ट ईदृशः ॥

लवणाल्लुक् । ४ । ४ । २४

लवणाल्लुग् भवेदत्र संसृष्टप्रत्ययस्य च ।
लवणेन च संसृष्टो लवणः सूप उच्यते ॥

मुग्दादण् । ४ । ४ । २५

मुग्दादण् भवेदत्र मौग्द ओदन उच्यते ।

व्यञ्जनैरुपसिक्ते । ४ । ४ । २६

व्यञ्जनैरुपसिक्ते ठक् तस्यैकश्च विधीयते ।
दध्ना यदुपसिक्तं स्यात् तद् दाधिकमुदाहृतम् ॥

ओजः सहोऽम्भसा वर्तते । ४ । ४ । २७

एभ्यष्ठग् भवेदत्र वर्तते इतिविग्रहे ।
ओजसा वर्तते योऽत्र शूर औजसिकः स्मृतः ॥
सहसा वर्तते योऽत्र चौरः साहसिको भवेत् ।
अम्भसा वर्तमानस्तु मत्स्य आम्भसिको भवेत् ॥

तत्प्रत्यनुपूर्वमीपलोमकूलम् । ४ । ४ । २८

द्वितीयान्ताद्ध्रुवेदस्माद् वर्ततेऽर्थे च ठक् सदा ।
क्रियाविशेषणत्वाच्च द्वितीयाऽत्र विधीयते ॥
प्रतीपं वर्तते योऽत्र शत्रुः प्रातीपिको भवेत् ।
अन्वीयं वर्तते यस्तु स आन्वीयिक उच्यते ॥
वर्तते प्रतिलोपं यः स भवेत्प्रातिलोमिकः ।
प्रातिकूलिक इत्यत्र साध्यतामानुकूलिकः ॥

परिमुखञ्च । ४ । ४ । २९

परिमुखं वर्तमानः पारिमुखिक उच्यते ।
पारिपार्श्विकशब्दोऽपि वर्ततेऽर्थे ठकि कृते ॥
वर्तते यः परिमुखं परिपार्श्वं विगृह्यते ।

## प्रयच्छति गर्ह्यम् । ४ । ४ । ३०

गर्ह्यं प्रयच्छतीत्यर्थे द्वितीयान्ताच्च ठग् भवेत् ।
द्वैगुणिकस्तु स प्रोक्तो द्विगुणं यः प्रयच्छति ।।
त्रैगुणिकस्त्रिगुणार्थं यः प्रयच्छति तत्र वै ।

## वृद्धे वृ्धुषिभावो वक्तव्यः । वा

वृद्धे वृ्धुषिभावोऽपि ठकि च प्रत्यये कृते ।
वार्धुषिकः प्रयोक्तव्यो गर्ह्ये वणिग्जनादिके ।।
वृद्ध्यर्था वृद्धिरेवात्र तां प्रयच्छति विग्रहः ।

## कुसीद दशैकादशात् ष्ठन्ष्ठचौ । ४ । ४ । ३१

ष्ठन् कुसीदाद् भवेदत्र दशैकादशतस्तु ष्ठच् ।
कुसीदिकः प्रयोगः स्याद् दशैकादशिक स्तथा ।।
कुसीदं वृद्धिराख्याता तदर्थं यः प्रयच्छति ।
कुसीदिकः कुसीदकी पुंसि वा कथ्यते स्त्रियाम् ।।
दशैकादशान् प्रयच्छति विग्रहः क्रियतामिह ।
उत्तमर्णो धनस्वामी कथ्यते तादृशो जनः ।।
दशैकादशिकः पुंसि दशैकादशिकी स्त्रियाम् ।

## उञ्छति । ४ । ४ । ३२

तदुञ्छति समुच्चार्य ठक् प्रत्ययो विधीयते ।
बदराण्युञ्छति योऽत्र बादरिकश्च स स्मृतः ।।

## रक्षति । ४ । ४ ३३

तं रक्षति समुच्चार्य ठक् प्रत्ययो विधीयते ।
समाजं रक्षति योऽत्र सामाजिकः पदं भवेत् ।।

## शब्ददर्दुरं करोति । ४ । ४ । ३४

करोति विग्रहं कृत्वा ठग् भवेच्छब्ददर्दुरात् ।
शब्दं करोति यः कश्चित् स च शाब्दिक उच्यते ।।
दार्दुरिको भवेत्कुम्भकारः करोति दर्दुरम् ।
वाद्यभाण्डं पात्रमेकं दार्दुरं वस्तु कथ्यते ।।

पक्षिमत्स्य मृगान् हन्ति । ४ । ४ । ३५

पक्षिणं हन्ति मत्स्यं वा मृगं हन्तीतिविग्रहे ।
ठक्प्रत्ययो विधीयेत स्वरूपग्रहणं भवेत् ॥
पर्यायस्यापि ग्रहणं ठक्प्रत्ययविधाविह ।
मत्स्य पर्यायमध्ये तु मीनस्यैव ग्रहो भवेत् ॥
पाक्षिणः पक्षिणो हन्ति शाकुनिकोऽपि साध्यताम् ।
मात्स्यिकं मैनिकं रूपं मत्स्यं मीनश्च हन्तरि ॥
मार्गिको मृगहन्ता स्यान्मृगं हन्तीतिविग्रहे ।
एवं हारिणिकः प्रोक्तः सारङ्गिकः पदं तथा ॥

परिपन्थश्च तिष्ठति । ४ । ४ । ३६

तिष्ठति परिपन्थं यो हन्ति वा इति विग्रहे ।
ठक्प्रत्ययो द्वितीयान्ताच्चौरेऽर्थे पारिपन्थिकः ॥
पन्थानं वर्जयित्वैव व्याप्य वा तिष्ठति क्वचित् ।
हन्ति यः परिपन्थं सः पारिपन्थिक उच्यते ॥

माथोत्तरपदपदव्यनुपदं धावति । ४ । ४ । ३७

तं धावति समुच्चार्य प्रत्ययष्ठग् विधीयते ।
धावति दण्डमाथं यः स भवेद् दाण्डमाथिकः ॥
दण्डाकारस्तु यः पन्थाः स दण्डमाथ उच्यते ।
धावत्यनुपदं यश्च स आनुपदिकः स्मृतः ॥

आक्रन्द्राट्ठञ्च । ४ । ४ । ३८

आक्रन्द्रादिह ठञ्ठक् च धावत्यर्थे विधीयते ।
आक्रन्दं दुखिनां स्थानं धावत्याक्रन्दितो जनः ॥

पदोत्तरपदं गृह्णाति । ४ । ४ । ३९

पदोत्तरपदं किञ्चिद् गृह्णाति विग्रहेऽत्र ठक् ।
पूर्वपदं स गृह्णाति पौर्वपदिक उच्यते ॥
एवमौत्तरपदिकः स्यादुत्तरपदग्रहे ।

प्रतिकण्ठार्थललामञ्च । ४ । ४ । ४०

एभ्यष्ठक् क्रियते गृह्णात्यर्थे पदस्य साधने ।
प्रतिकण्ठश्च गृह्णाति प्रातिकण्ठिक उच्यते ।।
अर्थं गृह्णाति तात्पर्ये आर्थिकष्ठकि च कृते ।
लालामिको ललामं गृह्णाति स च कथ्यते ।।

धर्मं चरति । ४ । ४ । ४१

चरति धर्ममुच्चार्य ठक्प्रत्ययेन धार्मिकः ।

अधर्माच्चेति वक्तव्यम् । वा

अधार्मिकस्त्वधर्मं चरति विग्रहे भवेत् ।

प्रतिपथमेति ठंश्च । ४ । ४ । ४२

एति प्रतिपथं प्रातिपथिक ष्ठनि च कृते ।

समवायान् समवैति । ४ । ४ । ४३

समवैतीति तात्पर्ये समवायाट्ठगुच्यते ।
समवायान् समवैति समूहं समवैति वा ।।
सामवायिक इत्येवं सामूहिकश्च साध्यते ।

परिषदो ण्यः । ४ । ४ । ४४

समवैति परिषदं पारिषद्यस्तु ण्ये कृते ।

सेनाया वा । ४ । ४ । ४५

सेनाया ण्यठकौ स्यातां सैन्या वा सैनिका ततः ।

संज्ञायां ललाटकुक्कुटचौ पश्यति । ४ । ४ । ४६

तं पश्यति विग्रहेऽत्र ललाटकुक्कुटीद्वयात् ।
ठक्प्रत्ययश्च संज्ञायां जायते रुपमीदृशम् ।।
ललाटं पश्यतीत्युक्त्वा लालाटिकश्च साध्यते ।
लालाटिकः प्रभो र्भालदर्शी कार्याक्षमो जनः ।।
कौक्कुटिको भवेद् भिक्षुः पश्यति कुक्कुटीं यतः ।

तस्य धर्म्यम् । ४ । ४ । ४७

तस्य धर्म्यं समुच्चार्य ठक्प्रत्ययो विधीयते।
आपणिकमापणस्य धर्म्यमुच्चार्य साध्यताम् ॥

अण् महिष्यादिभ्यः । ४ । ४ । ४८

धर्म्येऽर्थेऽण् स्यान्मनुष्यादे र्माहिषंरूपमुच्यते।
महिष्या धर्म्यमुच्चार्य प्रत्ययश्चाण् प्रदर्शितः ॥
यजमानस्य धर्म्यं यद् याजमानं तदुच्यते।

ऋतोऽञ् । ४ । ४ । ४९

ऋदन्तादञ् भवेद् धर्म्ये यातुर्धर्म्यं यात्रमिति ।

नराच्चेति वाच्यम् । वा ।

नरादञ् जायते धर्म्ये नारी धर्म्या नरस्य च ।
विशसितुरिड्लोपश्चाञ्च वक्तव्यः । वा
धर्म्यं विशसितु र्लोके वैशस्त्रं प्रतिपाद्यते ।
प्रथममञ् विशसितुरिड्लोपोऽपि विधीयते ॥

विभाजयितु र्णिलोपश्चाञ्च वाच्यः । वा ।

विभाजयितुरञ् कार्यं णेर्लोपोऽपि विधीयते।
विभाजयितुश्च धर्म्यं वैभाजित्रं प्रयुज्यते ॥

अवक्रयः । ४ । ४ । ५०

ठक् प्रत्ययस्तु षष्ठ्यन्तादवक्रयेऽर्थे विधीयते।
आपणिकः करः प्रोक्तो ग्राह्यो राज्ञाऽपणस्य वै ॥

तदस्य पण्यम् । ४ । ४ । ५१

तदस्य पण्यमित्यर्थे ठक्प्रत्ययो विधीयते।
अपूपाः पण्यमस्यात्र आपूपिकः प्रयुज्यते ॥
हट्टे प्रसारितं वस्तु विक्रेतुं पण्यमुच्यते।

लवणाट्ठञ् । ४ । ४ । ५२

ठञ्भवेल्लवणात्पण्ये लावणिकः पदं ततः।
लवणः पण्यमस्येति विग्रहोऽत्र प्रदर्श्यताम् ॥

किसरादिभ्य ष्ठन् । ४ । ४ । ५३

ष्ठन् भवेत् किसरादिभ्यः किसरकः किसरकी ।
उसीरको नलदकः सर्वे सुगन्धिवाचिनः ॥

शलालुनोऽन्यतरस्याम् । ४ । ४ । ५४

शलोलुनो विकल्पेन ष्ठन्ठकावित्युभौ स्मृतौ ।
शलालुकः शलालुकी शालालुकोऽपि जायते ॥
शलालुरपि सुगन्धि द्रव्यवाचि पदं स्मृतम् ।
तदस्य पण्यमित्येव विग्रहः परिकीर्तितः ॥

शिल्पम् । ४ । ४ । ५५

तदस्य शिल्पमित्यर्थे ठग्भवेदिह तेन च ।
मृदङ्गवादनं शिल्प मस्येति मार्दाङ्गिकः स्मृतः ॥

मड्डुकझर्झरादन्यतरस्याम् । ४ । ४ । ५६

अण्शिल्पेऽर्थे विकल्पेन मड्डुकझर्झरद्वयात् ।
माड्डुको झार्झरश्चैवं माड्डुकिकष्ठकि कृते ।
झार्झरिकोऽपि पक्षे स्याट् ठकि च प्रत्यये कृते ॥

प्रहरणम् । ४ । ४ । ५७

अस्य प्रहरणं वाच्ये ठगेव प्रत्ययो भवेत् ।
असिः प्रहरणं यस्य स आसिकः प्रसिद्ध्यति ॥
धनुः प्रहरणमस्येति धानुष्कोऽपि प्रयुज्यते ।

परश्वधाट्ठञ् च । ४ । ४ । ५८

परश्वधाट्ठञिति स्यात् पारश्वधिक उच्यते ।

शक्तियष्टचोरीकक् । ४ । ४ । ५९

शक्तियष्टचो र्भवेदीकक् शाक्तीकः शक्तिशस्त्रभृत् ।
यष्टिः प्रहरणं यस्य याष्टीको यष्टिधारकः ॥

अस्ति नास्ति दिष्टं मतिः । ४ । ४ । ६०

अस्ति नास्ति तथा दिष्टं मतिरस्येति विग्रहे ।
आस्तिको नास्तिकश्चैवं दैष्टिकः पदमिष्यते ॥
अस्तीश्वरो मति र्यस्य श्रद्धालुरास्तिको जनः ।
नास्तीश्वरो मतिर्यस्य नास्तिको वेदनिन्दकः ॥
दिष्टमिति मतिर्येषां दैष्टिका भाग्यवादिनः ।

शीलम् । ४ । ४ । ६१

तदस्य शीलमित्यर्थे ठक् प्रत्ययश्च जायते ।
अपूपभक्षणं शीलमस्य आपूपिकः स्मृतः ॥

छत्रादिभ्यो णः । ४ । ४ । ६२

णः स्याच्छत्रादिशब्देभ्य श्छात्र श्छत्राच्च णे कृते ।
गुरुदोषावरणं छत्रं तच्छीलेमिति विग्रहः ॥

कार्मस्ताच्छील्ये । ४ । ४ । १७२

कार्यः सिद्ध्यति ताच्छील्ये कर्मणो णे टिलोपतः ।
नस्तद्धिते च इत्येव सिद्ध्येत् किमर्थमुच्यते ?
ताच्छीशिकेऽत्र णे यस्मादण्कार्यं स्यादतः कृतम् ॥
तेन स्यात्तापसी चौरी प्रयोगो ङीपि च कृते ॥
ताच्छील्यं यत्र नैवास्ति तत्र कार्मण उच्यताम् ।

कर्माध्ययने वृत्तम् । ४ । ४ । ६३

प्रथमान्ताच्च षष्ठ्यर्थे ठक्प्रत्ययो विधीयते ।
अध्ययने च या वृत्ता क्रिया सा प्रथमार्थके ॥

सारांशः—

यस्याध्ययननिष्ठस्य परीक्षासमये यदि ।
अशुद्धोच्चारणं जातं तादृशार्थेऽत्र ठग्भवेत् ॥
ऐकान्यिकस्तु स प्रोक्तो यस्याशुद्धं सकृद् भवेत् ।
एकमन्यद्विगृह्येति तद्धितार्थसमास ठक् ॥

बह्वच्पूर्वपदाट्ठञ् । ४ । ४ । ६४

ठञ् स्याद् वह्वच्पूर्वपदाद् द्वादशान्विक उच्यते।
अस्याधीतपरीक्षायामपपाठाश्च द्वादश ॥
द्वैयन्यिकस्तथात्रैयन्यिकोऽपि कोऽपि पाठकः।

हितं भक्षाः । ४ । ४ । ६५

हितं भक्षा विग्रहे ठक् प्रत्ययः क्रियते पुनः ॥
आपूपिका इमे विप्रा लेखकोऽप्यस्य च पुनः।
अपूपभक्षणं मह्यं हितमस्तीति निश्चितम् ॥

तदस्मै दीयते नियुक्तम् । ४ । ४ । ६६

तदस्मै दीयते युक्तं ठक् प्रत्ययोऽत्र जायते।
नियतं दीयते अस्मै अग्रभोजनमित्यसौ ॥
आग्रभोजनिकः प्रोक्तो ब्राह्मणो ग्रामयाजकः।

श्राणामांसौदनाट्टिठन् । ४ । ४ । ६७

श्राणामांसौदनादत्र नियुक्ते प्रत्ययष्टिठन्।
ङीबर्थश्च टकारोऽत्र उच्चारणकृते च इः ॥
नियुक्तं दीयते अस्मै श्राणा स श्राणिको भवेत्।
मासौदनं नियुक्तं वै दीयतेऽस्मै तदा टिठन्।
मासौदनिक इष्येत औदनिकश्च मासिकः ॥

भक्तादणन्यतरस्याम् । ४ । ४ । ६८

भक्तादण्स्याद्विभाषैव पक्षे ठगिति जायते।
भक्तमस्मै नियुक्तं वै दीयते भाक्त भाक्तिकौ ॥

तत्र नियुक्तः । ४ । ४ । ६९

तत्र नियुक्त इत्यर्थे ठक् प्रत्ययः प्रवर्तते।
आकरे यो नियुक्तोऽस्ति स आकरिक उच्यते ॥
आकरः खनिरित्यत्र बुध्यतामर्थचिन्तकैः।

अगारान्ताट्ठन् । ४ । ४ । ७०

अगारान्ताच्च ठन्प्रोक्तो देवागारिक उच्यताम्।
देवागारे नियुक्तस्य नामास्ति ज्ञायतामिदम् ॥

## अध्यायिन्यदेशकालात् । ४ । ४ । ७१

निषिद्धदेशकालस्य वाचकाट् ठग्विधीयते ।
अध्येतरि च तात्पर्ये श्माशानिक स्ततो भवेत् ॥
योऽधीते श्मशाने स श्माशानिक इहोच्यते ।
चतुर्दश्यामधीते य श्चातुर्दशिक उच्यते ॥

## कठिनान्त प्रस्तार संस्थानेषुव्यवहरति । ४ । ४ । ७२

कठिनान्ताच्च प्रस्तारात् संस्थानाट्ठग्विधीयते ।
तत्र व्यवहरत्यर्थे वांशकठिनकः स्मृतः ।
यो व्यवहरति वंशकठिने बुध्यते स च ॥
या क्रियाऽत्र यथाकार्या तां तथैवानुतिष्ठति ।
प्रास्तारिकस्तु प्रस्तारे व्यवहरति स उच्यते ॥
यज्ञः प्रस्तार आख्यातः कुशलस्तत्र कथ्यते ।
संस्थाने व्यवहरति स सांस्थानिक उच्यते ॥
संस्थानं संनिवेशोऽत्र ज्ञायतामर्थचिन्तकैः ।

## निकटे वसति । ४ । ४ । ७३

निकटे वसति बोधे भिक्षु र्नैकटिको भवेत् ।
ठक्प्रत्यय इकादेशो वृद्धिरप्यत्र जायते ॥

## आवसथात् ष्ठल् । ४ । ४ । ७४

ष्ठल्स्यादावसथशब्दाद् वसतौ निकटेऽथवा ।
षित्वान्ङीष् तेन वक्तव्या स्त्रियामावसथिक्यपि ॥
आकर्षात्पर्पादे र्भस्त्रादिभ्यः कुसीदसूत्राच्च ।
आवसथात् किसरादेः षितः षडेते ठगधिकारे ॥
षडिति सूत्रषट्केन विहितानां ग्रहो भवेत् ।
प्रत्ययाः सप्त सन्त्यत्र षित इति विभाव्यताम् ॥

इति ठकोऽवधिः समाप्तः ।

## अथ प्राग्घितीयाः

### प्राग्घिताद्यत् । ४ । ४ । ७५

प्राग्घिताद् यद्विधानेन प्राग्घितीयाः प्रकीर्तिताः ।
अर्थस्तद्वहतीत्यादि विग्रहादवबुध्यताम् ।।
तस्मै हितमिति सूत्रात् प्राग्यदधि क्रियते ।

### तद्वहति रथयुगप्रासङ्गम् । ४ । ४ । ७६

रथं युगञ्च प्रासङ्गं वहति समुदीर्य च ।
रथ्यो युग्यश्च प्रासङ्ग्यः साध्यते यद्विधानतः ।।
एतैस्तु बुध्यते वोढाऽनड्वानेव जनैरिह ।
वत्सानां दमनायात्र स्कन्धे काष्ठञ्च यद्धृतम् ।
तस्य नामास्ति प्रासङ्गस्तं वहतीति विग्रहः ।।

### धुरो यड्ढकौ । ४ । ४ । ७७

धुरो यड्ढग्द्वयं प्रोक्तं वहति समुदीर्य वै ।
हलि च सूत्रतचात्र दीर्घो नास्ति निषेधतः ।।

### न भकुर्छुराम् । ८ । २ । ७९

कुर्छुरोरुपधायाश्च भस्य दीर्घो न जायते ।
तस्माद् धुर्यश्च धौरेयः प्रयोगो यति च कृते ।।

### खः सर्वधुरात् । ४ । ४ । ७८

सर्वधुराद् विधीयेत खः प्रत्ययो विशेषतः ।
सर्वधुरां वहतीति सर्वधुरीण इष्यते ।।

### एकधुराल्लुक् च । ४ । ४ । ७९

एकधुरादिह लुक् स्यादेकधुरीणः खे कृते ।
खस्य लोपे भवेदेकधुर एव प्रयुज्यते ।।

शकटादण् च । ४ । ४ । ८०

शकटादण् विधातव्यश्शकटं वहति शाकटः ।

हलसीराट्ठक् । ४ । ४ । ८१

हलात् सीराच्च ठक्कार्यं हलं वहति हालिकः ।
सीरं वहति तत्र स्यात् सैरिकः कृषको जनः ॥

संज्ञायां जन्या । ४ । ४ । ८२

जन्या भवति संज्ञायां जनीं वहति विग्रहे ।
जनी वधूरिति ख्याता जन्या मातुः सखी स्वसा ।

विध्यत्यधनुषा । ४ । ४ । ८३

विध्यतीति समुच्चार्य द्वितीयान्ताच्च यद्भवेत् ।
करणं न धनुस्तत्र यदि चेज्जायते खलु ॥
पादौ विध्यन्ति पद्याः स्युः शर्कराः कुशकण्टकाः ।

धनगणं लब्धा । ४ । ४ । ८४

लब्धा धनं गणञ्चार्थे यत्प्रत्ययो विधीयते ।
धनं लब्धा स धन्यः स्याद् गण्यो लब्धा गणं पुनः ॥

अन्नाण्णः । ४ । ४ । ८५

अन्नाण्णः स्याच्च लब्धार्थे आन्नो लब्धाऽन्नमुच्यते ।

वशंगतः । ४ । ४ । ८६

वशशब्दाच्च यत्कार्यं गतार्थेऽत्र विशेषतः ।
वश्यः परेच्छया कार्यं करोति न निजेच्छया ॥

पदमस्मिन् दृश्यम् । ४ । ४ । ८७

पदमस्मिन्नस्तिदृश्यं पद्यः कर्दम उच्यते ।

मूलमस्यावर्हि । ४ । ४ । ८८

मूलमावर्हि येषां ते मूल्या मुद्गादयः स्मृताः ।

मूलोत्पाटनतश्चान्यद्रीत्या यस्य न संग्रहः।
तदेवार्वाहि विज्ञेयं तदर्थे यद् विधीयते॥

संज्ञायां धेनुष्या। ४। ४। ८९

संज्ञायामत्र धेनुष्या स्वार्थे यत् प्रत्यये कृते।
षुगागमोऽत्र जायेत धेनुष्या बन्धके स्थिता॥

गृहपतिना संयुक्ते ञ्यः। ४। ४। ९०

गृहपते र्भवेदत्र ञ्यः प्रत्ययो विशेषतः।
गार्हपत्यो भवेदग्नि र्यजमानेन संयुतः॥

नौवयोविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्या-नाम्यसमसमितसस्मितेषु। ४। ४। ९१

नौर्वयो विषमित्यादिशब्देभ्यो यद्विधीयते।
तार्यतुल्यादिभावेषु क्रमशस्तत्प्रदर्श्यते॥

उदाहरणानि—

नावा तार्यं भवेन्नाव्यं नदनद्योर्जलं क्वचित्।
वयस्यो वयसा तुल्यः प्राप्यं धर्मेण धर्म्यमिह॥
विष्यो विषेण वध्यः स्यान् मूल्यमायाम्यमुच्यते॥
समो मूलेन मूल्यः स्याद् द्विधा तात्पर्यमुच्यताम्।
सीतया समितं क्षेत्रं सीत्यं समीकृतं स्थलम्॥
तुलया संमितं तुल्यमुदाहरणं क्रमेण वै॥

धर्मपथ्यर्थन्यायादनपेते। ४। ४। ९२

धर्मपथ्यर्थन्यायाद्यत् प्रत्ययो मिलितार्थके।
धर्म्यं धर्मादनपेतं पथ्यमेवं हि साध्यते।
पथोऽनपेतमित्येवं विग्रहः क्रियतामिह॥
अर्घादत्रानपेतं हि स्यादर्घ्यमिति बुध्यताम्।
न्यायादत्रानपेतस्य न्याय्यमित्युच्यते सदा॥

छन्दसो निर्मिते। ४। ४। ९३

छन्दसो निर्मितेऽर्थे यच् छन्दस्यमिच्छया कृतम् ।

उरसोऽण् च ४ । ४ । ९४

उरसोऽण् निमित्तेऽर्थे यत्प्रत्ययोऽपि जायते ।
उरसा निर्मितः पुत्र औरसः कथ्यते बुधैः ॥
उरस्योऽपि सुतः प्रोक्तो यत्प्रत्ययो यदा भवेत् ।

हृदयस्य प्रियः । ४ । ४ । ९५

हृदयस्य प्रियो योऽस्ति स हृद्यो देश उच्यते ।
हृदयस्य हृदादेशो यति च प्रत्यये परे ॥

बन्धने चर्षौ । ४ । ४ । ९६

हृदयशब्दात् षष्ठ्यन्ताद्बन्धने यद्विधीयते ।
अभिधेये च वेदार्थे विशेषेण प्रयुज्यते ॥
वशीकरणमन्त्रार्थे हृद्यो हृदयबन्धनम् ।
संज्ञाधिकार संबन्धाद् वसिष्ठादावृषौ न यत् ॥

मतजनहलात्करणजल्पकर्षेषु । ४ । ४ । ९७

मतजनहलाद् यत्स्यात् करणे जल्पकर्षयोः ।
मतस्य करणं मत्यं जन्यो जल्पे जनस्य च ॥
हल्यो हलस्य कर्षः स्यात् करणं साधनं स्मृतम् ।

तत्र साधुः । ४ । ४ । ९८

तत्र साधुः समुच्चार्य सप्तम्यन्तपदाच्च यत् ।
अग्रे साधुर्भवेदग्र्यः सामन्याः सामसाधवः ॥
प्रकृतिभावकार्यं स्यादन्नन्तस्यात्र यति परे ।
साधुः कर्मणि कर्मण्यः शरण्यः शरणे च सः ॥
ये चाभावकर्मणोश्च प्रकृत्या एव तिष्ठति ।

प्रतिजनादिभ्यः खञ् । ४ । ४ । ९९

खञ् स्यात्प्रति जनादिभ्यः साधुः प्रतिजनञ्च यः ।
साधुः प्रतिजनं योऽत्र प्रातिजनीन उच्यते ॥

वीप्सायामव्ययीभावो जनो जनः प्रतिजनम् ।
संयुगे साधुरुच्चार्यं सांयुगीनस्तु साध्यताम् ॥
साधुः सर्वजने प्रायः सार्वजनीन उच्यते ।
साधुर्विश्वजने घोऽत्र वैश्वजनीन इष्यते ॥

भक्ताण्णः । ४ । ४ । १००

भक्ताण्णस्तत्र साध्वर्थे भाक्ताश्च शालयः ।

परिषदो ण्यः । ४ । ४ । १०१

परिषदो ण्यणौ स्यातां तत्र साधुरितिस्थितौ ।
पारिषद्यः परिषदि साधुः पार्षद इत्यपि ॥

कथादिभ्यष्ठक् । ४ । ४ । १०२

कथादिभ्यस्तत्रसाधुरर्थेठक्प्रत्ययो भवेत् ।
कथायां साधुरेवात्र काथिकः प्रथितो भुवि ॥

गुडादिभ्यष्ठञ् । ४ । ४ । १०३

गुडादिभ्यष्ठञेव स्याद् गुडे साधुश्च गौडिकः ।
सक्तुषु साधवो लोकेसाक्तुकाः प्रथिता यवाः ॥

पथ्यतिथि वसति स्वपतेर्ढञ् । ४ । ४ । १०४

पथ्यतिथिवसतिषु स्वपतौ साधुवोधने ।
एभ्यो ढञ्विधातव्यः पाथेयं पथि साधु यत् ॥
अतिथौ साधु यद्वस्तु तदातिथेयमुच्यते ।
स्वापतेयं धनं प्रोक्तं स्वपतौ साधुरुच्यताम् ॥
वसनं वसतिस्तत्र साधुरित्येव मुच्यताम् ।
वासतेयी भवेद्रात्रि र्ढकएयः सदैव च ॥

सभाया यः । ४ । ४ । १०५

यः प्रत्ययः सभाशब्दात् सभ्याः सभासु साधवः ।

समानतीर्थे वासी । ४ । ४ । १०७

**निवृत्तं साधुरित्यत्र वासीति कथितं यतः ।**
**वासी समानतीर्थे यः स सतीर्थ्यो यति कृते ।।**
**तीर्थे गुरौ समानं यो वसति तत्र कथ्यते ।**

समानोदरे शयित ओचोदात्तः । ४ । ४ । १०८

**समाने उदरे योऽत्र शयितस्तस्य बोधकः ।**
**समानोदर्यशब्देन भ्राता स्वस्यैव बुध्यते ।।**

सोदराद्यः । ४ । ४ । १०९

**सोदराद्यो भवेदत्र सोदर्यः स्यात्सहोदरः ।**
**समानस्य सहादेशः पक्षे सादेश इत्यपि ।।**
**समानमुदरं यस्य विग्रहोऽत्र प्रदर्श्यताम् ।**

**इति प्राग्घितीयास्तद्धिताः ।**

# अथ छयद्विधिः

प्राक् क्रीताच्छः । ५ । १ । १

तेन क्रीतमितिसूत्रात् प्राक् स्यातां छयताविह ।

उगवादिभ्यो यत् । ५ । १ । २

उवर्णान्ताद् गवादिभ्यो यत्स्याच्छस्यापवादतः ॥
गवादिगणसूत्रेऽत्र नाभि नभश्च वर्तते ।

नाभिनभश्च । वा

नाभिशब्दो यतं लब्ध्वा नभादेशं लभेत सः ।
रथाङ्गं नाभिरित्यस्ति नभ्योऽक्षो नभ्यमञ्जनम् ॥

शुनः सम्प्रसारणं वा च दीर्घत्वम् । ग० सू०

शुनो यत् सम्प्रसारणं दीर्घत्वं वा विधीयते ।
शुनो हितं भवेच्छून्यं शुन्यं वा द्विविधं वदेत् ॥

ऊधसोऽनङ् । ग० सू०

ऊधसोऽनङ् विधीयेत यत्प्रत्ययोऽपि जायते ।
ऊधन्यः प्रकृतिभावात् सिद्ध्यति ऊधसे हितः ॥

कम्बलाच्च संज्ञायाम् । ५ । १ । ३

संज्ञायां कम्बलाद् यत्स्यात् कम्बल्यं कम्बलहितम् ।

विभाषा हविरपूपादिभ्यः । ५ । १ । ४

विभाषा हविषो यत् स्यादपूपादेरपि तथा ।
आमिक्ष्यं दधिवक्तव्य मामिक्षीयमित्यपि ॥
आमिक्षायै हितं विज्ञैर्विग्रहोऽत्र प्रदर्शितः ।
तण्डुलाः स्युः पुरोडाश्याः पुरोडाशीय इत्यपि ॥
अपूपेभ्यो हितं वस्तु अपूपीयमपूप्यमिति ।

तस्मै हितम् । ५ । १ । ५

तस्मै हितं समुच्चार्य छप्रत्ययो विकल्पतः ।
हितो वत्साय वत्सीयो गोधुग्जनो निगद्यते ।
शङ्कव्यं दारु गव्यश्च हविष्यं साध्यतां हिते ॥

शरीरावयवाद्यत् । ५ । १ । ६

शरीरावयवाद्यत् स्याद्धितेऽर्थे च विशेषतः ।
दन्तेभ्यश्च हितं दन्त्यं कण्ठ्यं कण्ठहितं भवेत् ॥
हितमोष्ठाय ओष्ठ्यं स्यादेवमन्योऽपि साध्यताम् ।

नस् नासिकायाः । वा

नासिकाया नसादेशो यत्प्रत्ययोऽपि जायते ।
नासिकायै हितं नस्यं नाभ्यं पूर्वेण यत्कृते ॥
शरीरावयवो नाभिर्विग्रहो नाभये हितम् ।

ये च तद्धिते । ६ । १ । ६१

शिरसश्च भवेच्छीर्षन् यादौ तद्धितप्रत्यये ।
शीर्षण्यः प्रकृतिभावाच्छिरोरक्षकवाससि ॥

वा केशेषु । वा०

केशार्थेषु विकल्पेन शीर्षन् स्याच्छिरस इह ।
शीर्षण्याश्च शिरस्याश्च केशा भवन्ति बुध्यताम् ॥

अचि शीर्ष इति वाच्यम् । वा

शीर्षादेशस्तु शिरसः स्यादजादौ च तद्धिते ।
स्थौल्यशीर्षं प्रयोगस्तु तस्येदमणि च कृते ॥
स्थूल शिरस इदं स्याद्विग्रहोऽत्र विचार्यताम् ।

खलयवमाषतिलवृषब्रह्मणश्च । ५ । १ । ७

खलाद् यवाद् वृषान्माषात् तिलाद् ब्रह्मपदाच्च यत् ।
हितं खलाय खल्यं स्याद् यव्यं माष्यं हितेऽत्र यत् ॥
तिल्यं वृष्यञ्च ब्रह्मण्यञ्चाद्रथ्यापि च सिद्धयति ।

अजाविभ्यां थ्यन् । ५ । १ । ८

अजादवेर्हितं तस्मै तात्पर्ये थ्यन् विधीयते ।
अजेभ्यश्च हिताऽजथ्या अविथ्या अवये हिता ॥

आत्मन्विश्वजनभोगोत्तरपदात् खः । ५ । १ । ९

आत्मनश्च विश्वजनाद् भोगोत्तरपदाच्च खः ।

आत्माऽध्वानौ खे । ६ । ४ । १६९

आत्माध्वानौ विशेषेण प्रकृत्या भवतोऽत्र खे ।
आत्मनीयं तथा विश्वजनीनमिति साध्यते ॥

कर्मधारयादेवेष्यते ।

कर्मधारयतो भिन्ने छप्रत्ययश्च जायते ।
तत्पुरुषे बहुव्रीहौ विश्वजनीनमिष्यते ॥

पञ्चजनाच्च उपसंख्यानम् । ग० सू०

हितं पञ्चजनेभ्यो यत् पञ्चजनीनमुच्यते ।
रथकारपञ्चमा ये चत्वारो वर्णवाचिनः ।
पञ्चजनाश्च ते सन्ति तेभ्यो हितञ्च विग्रहः ॥

सर्वजनाट्ठञ् खश्च । वा

सर्वजनहिते ठञ्खौ सार्वजनिक इष्यते ।
पक्षे सर्वजनीनोऽपि गद्ये पद्ये प्रयुज्यते ॥

महाजनाट्ठञ् । वा

महाजनाट्ठञित्येव माहाजनिक उच्यते ।
प्रयोगो मातृभोगीणः पितृभोगीण इत्यपि ।
राजभोगीणस्तु राज्ञे हितमर्थे प्रयुज्यते ॥

आचार्यादणत्वञ्च । वा

आचार्यादणत्वं खे प्रत्यये च प्रयुज्यते ।
रूपमाचार्यभोगीन आचार्यस्य हिते भवेत् ॥

सर्वपुरुषाभ्यां णढञौ । ५ । १ । १०

सर्वाण्णो वेति वाच्यम् । वा

णढञौ क्रमशः सर्वात् पुरुषादत्र जायते ।
सर्वस्मै हितमुच्चार्यं सार्वं सर्वीयमित्यपि ।

पुरुषाद्वधविकारसमूहतेन कृतेषु । वा

पुरुषाड्ढञ्वधे ह्यत्र समूहादावपि पुनः ।
पौरुषेयः पुरुषस्य वधो विकार उच्यते ।।

स्पष्टीकरणम्—

अत्र तस्येदमिति अण्प्राप्तः,
प्राणिरजतादिभ्य इत्यञ्प्राप्तः,
पुनः समूहार्थेऽप्यण्प्राप्तः
सर्वं प्रबाध्य ढञ् प्रत्ययश्च जायते ।

माणवचरकाभ्यां खञ् । ५ । १ । ११

माणवाच्चरकात् खञ् स्यात् तस्मै हितञ्च विग्रहः ।
माणवीनं तथा रूपं चारकीणं प्रयुज्यते ।।

तदर्थं विकृतेः प्रकृतौ । ५ । १ । १२

विकृतेश्छो विधीयेत तदर्थः प्रकृतिर्यदि ।
अङ्गारेभ्यस्तु काष्ठानि आङ्गारीयाणि तानि वै ।।

प्राकारस्य च सन्त्येताः प्राकारीयाश्च इष्टकाः ।
शङ्कवे हितमस्तीति शङ्कव्यं दारु भाषितम् ।।

छदिरुपधिलेर्ढञ् । ५ । १ । १३

छदिरुपधिवले ढञ् विकृतावेव जायते ।
तृणानि छादिषेयाणि बालेयाश्चात्र तण्डुलाः ।।
उपधेरिह स्वार्थे ढञ् औपधेयं रथाङ्गमिति ।

ऋषभोपानहो ञ्यः । ५ । १ । १४

ऋषभोपानहो ञ्यः स्यादार्षभ्यो वत्स उच्यते ।
औपनह्यो भवेन्मुञ्जश्च चर्मणि स्यान्नपुंसकम् ॥
छस्यापवादभूतोऽयं कथितोऽस्तीति बुध्यताम् ।

चर्मणोऽञ् । ५ । १ । १५

चर्मणो विकृते रञ् स्याद् वार्ध्रं चर्म निगद्यते ।
वर्ध्रैयं इदमितीह स्याद् विग्रहो वार्ध्रसाधने ॥

तदस्य तदस्मिन् स्यादिति । ५ । १ । १६

तदस्य च तदस्मिन् वा विग्रहे प्रत्ययश्च छः ।
इष्टकानां भवेदासां प्राकार इति विग्रहे ॥
छप्रत्यये कृते रूपं प्राकारीयाश्च इष्टकाः ।
प्रासादो भवेदस्य प्रासादीयं च दारु तत् ॥

परिखायाः ढञ् । ५ । १ । १७

परिखायाः ढञित्येव तदस्येत्यादिविग्रहे ।
पारिखेयी तु सा भूमिः परिखा यत्र जायते ॥
छयतोरवधिः पूर्णश्शङ्करस्य प्रसादतः ।

॥ इति छयद्विधिः ॥



# अथ तद्धितेष्वार्हीयाः

प्राग्वतेष्ठञ् । ५ । १ । १८

तदर्हतीत्यादितात्पर्ये प्राग्वते ष्ठञ् विधीयते ।

आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् । ५ । १ । १९

गोपुच्छादथ संख्यायाः परिमाणान्न ठञ् भवेत् ।
तदर्हति सूत्रपर्यन्तं ठञोऽधिक्रियते परम् ॥
मध्ये ठगधिकारोऽस्ति गोपुच्छादेश्च नैव ठक् ।

अत्र श्लोकवार्तिकम्—

ऊर्ध्वमानं किलोन्मानं परिमाणन्तु सर्वतः ।
आयामस्तु प्रमाणं स्यात् संख्या वाह्या तु सर्वतः ॥
तुलारोपणमुन्मानं प्रस्थादि परिमाणकम् ।
हस्तो वितस्तिकाण्डादि प्रमाणमिह कथ्यते ॥

असमासे निष्कादिभ्यः । ५ । १ । २०

निष्कादिभ्योऽसमासे ठक् स्यादार्हीयादि बोधने ।
नैष्किकं पाणिकं वस्तु माषिकं पादिकादिकम् ॥
निष्कं माषं पणं पादं मूल्यमर्हति विग्रहः ।

परिमाणान्तस्या संज्ञाशाणयोः । ७ । ३ । १७

संज्ञायाः शाणतो भिन्ने वाच्ये ञिदादि प्रत्यये ।
उत्तरपदस्य वृद्धि र्यथा परमनैष्किकः ॥
असंज्ञाग्रहणेनात्र तदन्तविधिरुह्यते ।
यवाऽपूप्यं सुगव्यश्च साध्यते यति प्रत्यये ॥

इत ऊर्ध्वं तु संख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते तच्चालुकि । वा

संख्यापूर्वपदानाञ्च तदन्तग्रहणं पुनः ।
प्राग्वतेरिष्यते तच्चाऽलुकि स्थले ठञादयः ॥

पारायणिकस्तु संख्यातो यः परायणमर्हति ।
द्वैपारायणिकः शब्दस्त्रैपारायणिकोऽपि स्यात् ॥

अर्धात्परिमाणस्य पूर्वस्य तु वा । ७ । ३ । २६

अर्द्धात् परस्य नित्यं स्याद् वृद्धिः पूर्वस्य वा भवेत् ।
परिमाणपदस्यैव ञितिणितिकिति परे ॥
अर्द्धद्रोणेन यत्क्रीतं तदार्द्धद्रौणिकं भवेत् ।
पक्षेऽर्द्धद्रौणिकं वाक्ये प्रयोगः स्वेच्छया भवेत् ॥

नातः परस्य । ७ । ३ । २७

नातःपरस्य वृद्धिः स्यात् परिमाणार्थकस्य वै ।
पूर्वपदस्य अर्द्धस्य वा वृद्धिरिष्यते खलु ॥
आर्द्धप्रस्थिकमाख्यातमर्द्धप्रस्थिकमित्यपि ।

शताच्च ठन्यतावशते । ५ । १ । २१

शताच्च ठन्यतौ प्रोक्तौ अशते इति बोधने ।
शतेन क्रीतं शतिकं शत्यं वा प्रतिपाद्यताम् ॥
परिमाणं शतं यस्य सङ्घस्तु शतकः स्मृतः ।
ठन्यतौ न समासे स्तो द्विशतकं कनि कृते ॥

संख्याया अतिशदन्तायाः कन् । ५ । १ । २२

अतिशदन्तसंख्याया, आर्हीये कन् विधीयते ।
पञ्चकः पञ्चभिः क्रीतो बहुको बहुभिस्तथा ॥
त्यन्ता च सप्ततिः संख्या तस्याः साप्ततिको भवेत् ।
चात्वारिंशत इत्यादि शदन्ताया उदाहृतिः ॥

वतोरिड् वा । ५ । १ । २३

वत्वन्तात् परस्यात्र कन इड्वा विधीयते ।
तावतिकश्च तावत्कस्तावता क्रीतमुच्यताम् ॥

विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम् । ५ । १ । २४

विंशतेस्त्रिशतश्चात्र संज्ञाभिन्ने च ड्वुन् भवेत् ।
संज्ञायाश्च कनेव स्यात् त्रिंशत्कश्च प्रसिद्धयति ॥

कंसाट्टिठन् । ५ । १ । २५

**कंसाट् टिठन् प्रयोक्तव्यं कंसिकः कंसिकी तथा ।**

अर्द्धाच्चेति वक्तव्यम् । वा

**अर्द्धाच्चापि टिठन्कार्यं मर्द्धिकः अर्द्धिकी पुनः ।।**

कार्षापणाट्टिठन् वाच्यः । वा

**कार्षापणादपि टिठन् कार्षापणिक उच्यते ।**
**पक्षे कार्षापणिकीति टोङीबर्थ इह स्मृतः ।।**

प्रतिरादेशश्च वा । वा

**प्रकृतेः प्रतिरादेशः प्रतिकः प्रतिकी ततः ।**

शूर्पादञन्यतरस्याम् । ५ । १ । २६

**शूर्पादञ् विकल्पेन शौर्पं शौर्पिकमत्र वा ।**

शतमान विंशतिक सहस्रवसन्तादण् । ५ । १ । २७

**सहस्राच्छतमानाच्च वसनाद्विंशतेस्तथा ।**
**चतुर्भ्यः स्यादणेवात्र साहस्रं रूपमिष्यते ।।**
**वासनं वसनैः क्रीतं वैंशितिकञ्च विंशतेः ।**
**शतमानेन यत् क्रीतं शातमानं तदुच्यते ।।**

अध्यर्द्धपूर्वाद् द्विगो र्लुगसंज्ञायाम् । ५ । १ । २८

**द्विगोरध्यर्द्ध पूर्वाच्च आर्हीयस्य परस्य लुक् ।**
**असंज्ञायामिति वाच्यं द्विकंसं रूपमुच्यते ।।**
**अध्यर्द्धकंसमित्यत्र संज्ञा पाञ्चकपालिकम् ।**

विभाषा कार्षापणसहस्राभ्याम् । ५ । १ । २९

**कार्षापणसहस्राभ्यां परस्य लुग् विकल्पतः ।**
**अध्यर्द्ध कार्षापणमध्यर्द्ध कार्षापणिकमपि ।।**
**द्विकार्षापणमित्येवं द्विकार्षापणिकमपि ।**
**टिठनः प्रत्ययस्यात्र लुग्विकल्पेन जायते ।।**

अध्यर्धप्रतिकं पक्षे द्विप्रतिकमपि भवेत् ।
एवमध्यर्द्धसहस्रं साहस्रं वा प्रयुज्यते ॥
द्विसहस्रञ्च साहस्रं द्वयमपि प्रयुज्यते ।

द्वित्रिपूर्वान्निष्कात् । ५ । १ । ३०

द्वित्रिपूर्वाद् भवेन्निष्काद् विभाषा प्रत्ययस्य लुक् ।
द्विनिष्कञ्च त्रिनिष्कञ्च द्विनैष्किकं त्रिनैष्किकम् ॥

बहुपूर्वाच्चेति वक्तव्यम् । वा

बहुनिष्कं प्रयोगः स्यात् तथा च बहुनैष्किकम् ।

विस्ताच्च । ५ । १ । ३१

विस्ताद् द्वित्रिबहुपूर्वादार्हीयस्य लुगत्र वा ।
द्विविस्तञ्च त्रिविस्तञ्च द्विवैस्तिकं त्रिवैस्तिकम् ॥

विंशतिकात् खः । ५ । १ । ३२

विंशतिकाद् भवेत् खश्च अध्यर्द्धपूर्वकाद् द्विगोः ।
अध्यर्द्धविंशतिकीनं द्विविंशतिकीनमिति ॥
तेन क्रीतं पूर्वरीत्या विग्रहस्य प्रदर्शनम् ।

खार्या ईकन् । ५ । १ । ३३

अध्यर्द्धादि पूर्वाया खार्या ईकन् विधीयते ।
रूपमध्यर्द्धखारीकं द्विखारीकमपि भवेत् ॥

केवलाच्चेति वक्तव्यम् । वा

खार्या क्रीतञ्च खारीकं द्विखारीकमपि भवेत् ।

पणपादमाषशताद्यत् । ४ । १ । ३४

आर्हीये यद् विधातव्यं पणपादादित इह ।
अध्यर्द्धादिकपूर्वत्वं वर्तते यदि पूर्ववत् ॥
अध्यर्द्धपण्यमित्येवं द्विपण्यमपि जायते ।
अध्यर्द्धपाद्यमित्येवं द्विपाद्यमपि जायते ॥

यस्येति चात्र लोपस्य स्थानिवद्भाव इष्यते ।
पादः पदिति तस्मान्न प्रवर्तते यति परे ॥
पद्यत्यतदर्थे सूत्रे प्राण्यङ्गस्य ग्रहान्न तत् ।

शाणाद्वा । ५ । १ । ३५

शाणाद् यत्ठनावेतौ प्रत्ययौ भवत इह ।
अध्यर्द्धशाण्य मध्यर्द्धशाणमपि प्रयुज्यते ॥
यत् स्यात्पक्षेऽत्र ठण्प्रोक्तं ठञो लुक् च प्रवर्तते ।

द्वित्रिपूर्वादण् च ।

शाणादित्येव वक्तव्यं चकाराद्यत्प्रवर्तते ।
द्वित्रिपूर्वाच्च शाणादण् यदपि क्रियते पुनः ।
द्वैशाणं च द्विशाण्यश्च द्विशाणमपि जायते ॥

अत्र विशेषः—

इह ठञादयः प्रोक्ता स्त्रयोदश च प्रत्ययाः ।
तेषामर्थाः समर्थाश्च विभक्तयोऽपि दर्शिताः ॥
ये यथाऽकाङ्क्षिताः सर्वे सन्त्युक्ताः पश्यत क्रमात् ।

तेन क्रीतम् । ५ । १ । ३७

तेन क्रीतं विग्रहे ठञ् गौपुच्छिकमुदाहृतम् ।
प्रास्थिकं साप्ततिकञ्च नैष्किकमादि साधयेत् ॥
गोपुच्छेनाथप्रस्थेन सप्तत्या निष्कतस्तथा ।
क्रीतमिति विग्रहोऽत्र दर्शनीयस्तु पाठकैः ॥

इद् गोण्याः । १ । २ । ५०

तद्धिते लुकि गोण्या इद् भवति दृश्यतामधः ।
पञ्चभिरिह गोणाभिः क्रीताः स्युः पञ्चगोणयः ॥

तस्य निमित्तं संयोगोत्पातौ । ५ । १ । ३८

तस्य निमित्तमुच्चार्य संयोगोत्पातयोरिह ।
ठन्यतौ तद्धितौ स्यातां शतिकः शत्य इष्यते ॥

**दक्षिणाक्षिपरिस्पन्द शतिकं शत्यमुच्यते ।**
**शतस्य कस्यचिदायस्य निमित्तमिति बुध्यताम् ॥**

वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् । वा

**वातपित्तश्लेष्मशब्दा च्छमने कोपने च ठक् ।**
**वातस्य शमनं येन वातिकं तन्निगद्यते ॥**
**पैत्तिकं श्लैष्मिकं वस्तु तद् भवेद् येन शाम्यति ।**

सन्निपाताच्चेति वक्तव्यम् । वा

**सान्निपातिकमित्यस्ति सन्निपातस्य कोपने ।**

गोद्वचचोऽसंख्यापरिमाणाश्वादे र्यत् । ५ । १ । ३९

**गोद्वचचो र्यद्भवेदत्र निमित्ते प्रकृतार्थके ।**
**संख्यायाः परिमाणाच्च तथाऽश्वान्नहि यद्भवेत् ॥**
**गोर्निमित्तं च संयोगः उत्पातो गव्य उच्यते ।**
**धन्यो धननिमित्तः स्याद् यशस्यः स्वर्ग्य इत्यपि ॥**

ब्रह्मवर्चसादुपसंख्यानम् । वा

**ब्रह्मवर्चस्यमाख्यातं निमित्ते यतिप्रत्यये ।**

पुत्राच्छ च । ५ । १ । ४०

**पुत्रशब्दान्निमित्तादौ छयतौ भवत इह ।**
**पुत्रीयः स्याच्चपुत्र्योऽपि संयोगादि निमित्तके ॥**

सर्वभूमि पृथ्वीभ्यामणञौ । ५ । १ । ४१

**सर्वभूमेर्निमित्तन्तु संयोग उत्पात इति ।**
**सर्वभौमः स आख्यातः पार्थिवः सर्वभूमिपः ।**
**सर्वभूमेस्तु पाठोऽनुशतिकादिषु वर्तते ।**

तस्येश्वरः । ५ । १ । ४२

तत्रविदित इति च । ५ । १ । ४३

**सार्वभौमोभवेदत्र सर्वभूमिपतिर्नृपः ।**

लोकसर्वलोकाट्ठञ् । ५ । १ । ४४

लोकात् स्यात् सर्वलोकाच्च ठञ् भवेद् विदितेऽर्थके ।
लौकिको विदितो लोके जनो भवति बुद्धिमान् ॥
विदितः सर्वलोकेषु सार्वलौकिक उच्यते ।
अनुशतिकादितः स्याद् वृद्धिस्तु उभयोरिह ॥

तस्य वापः । ५ । १ । ४५

तस्य वापः विग्रहे स्याट् ठक् प्रत्ययविशेषतः ।
उप्यतेऽस्मिन्निति प्रोच्य वापः क्षेत्रादि कथ्यते ॥

वापः प्रस्थस्ययत्रस्यात् तत् क्षेत्रं प्रास्थिकं भवेत् ।
द्रौणिकं किल खारिकं वापःस्यात्तस्य तस्य च ॥

पात्रात् ष्ठन् । ५ । १ । ४६

पात्रात् ष्ठन् भवेद् वापे पात्रिकं क्षेत्रमस्ति तत् ।
पात्रकी क्षेत्रभक्तिःस्यात् षित्वाङ्ङीष् प्रत्ययस्त्विह ॥

तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते ।५।१।४७

तदस्मिन् दीयते वृद्धिरायोलोभोऽथवोपदा ।
शुल्कोवेति विगृह्यात्र आर्हीयष्ठन् यदादयः ॥
पञ्चास्मिन् दीयते वृद्धिरायोलाभोऽथवोपदा ।
पञ्चकः स समाख्यातः शतिकःशत्य इष्यते ॥
सहस्रं दीयते वृद्धि रायः शुल्कोऽथवोपदा ।
स साहस्रो भवत्यत्र करो लाभोऽथवोपदा ॥
मूलद्रव्यातिरिक्तं यत् सा वृद्धिः कथ्यते बुधैः ।
ग्रामस्य स्वामिना ग्राह्यो भाग आय इह स्मृतः ॥
मूल्याद् यदधिकं ग्राह्यं स लाभो वस्तुविक्रये ।
रक्षासौविध्यप्राप्त्यर्थं स्वार्थाय दीयते च या ॥

चतुर्थ्यर्थे उपसंख्यानम् । वा

चतुर्थ्यर्थेऽपि वक्तव्यं ष्ठन् पूर्वार्थंविवक्षणे ।
पञ्चास्मै दीयते वृद्धि रायो लाभः स पञ्चकः ॥

## पूरणार्धाट्ठन् । ५ । १ । ४८

अनेन पूर्यते तस्मात् पूरणोऽर्थः प्रकीर्तितः ।
तद्वाचिनस्तथैवार्थशब्दात् ठन् जायते इह ॥
वृद्ध्यादि द्वितीयोऽस्मिन् दीयते इति विग्रहे ।
द्वितीयक स्तथारूपं तृतीयकोऽर्द्धिकः पुनः ॥
रूपकं कथ्यते कार्षापणं तस्यार्धबोधने ।
अर्धशब्दः प्रसिद्धोऽत्र रूढोऽस्तीति निगद्यताम् ॥

## भागाद्यच्च । ५ । १ । ४९

भागाद्यत् ठन् विधीयेत भाग्यं भागिकमित्यपि ।
भागो वृद्ध्यादिरस्मिन् वै दीयते तच्छतं स्मृतम् ॥
भाग्या वा भागिका ख्याता विंशति र्यत्र दीयते ।
भागो वृद्ध्यादिरित्यत्र भागः स्याद्रूपकार्द्धकः ॥

## तद्धरति वहत्यावहति भाराद् वंशादिभ्यः । ५।१।५०

वंशादिभारशब्दान्ताद् द्वितीयान्तप्रकृतिकात् ।
हरति वहतीत्युक्तौ ठगादिः प्रत्ययो भवेत् ॥
वंशभारं हरति वा वहत्यावहतीति सः ।
वांशभारिक आख्यात ऐक्षुभारिक इत्यपि ॥
हरति भारभूतान् वै वंशान् स वांशिकः स्मृतः ।
भारभूतमिक्षुदण्डं हरति सच ऐक्षुकः ॥

## वस्नद्रव्याभ्यां ठन्कनौ । ५ । १ । ५१

ठन्कनौ वस्नद्रव्याभ्यां यथासंख्यं प्रवर्तयेत् ।
वस्नं हरति वहति आवहति स वास्निकः ।
द्रव्यं हरति यः कश्चित् स द्रव्यक उदाहृतः ॥

## संभवत्यवहरतिपचति । ५ । १ । ५२

संभवत्यवहरति पचतिविग्रहेऽत्र ठक् ।
प्रस्थं संभवति यत्र कटाहः प्रास्थिकः स च ॥
प्रस्थं पचति या नारी सा भवेत् प्रास्थिकी वधूः ।

## तत्पचतीति द्रोणादण् च । वा

तत्पचतीति द्रोणादण् चकाराट् ठञ् च जायते ।
द्रोणं पचति द्रौणी स्याद् द्रौणिकी वा प्रयुज्यते ॥

## आढकाचितपात्रात् खोऽन्यतरस्याम् । ५ । १ । ५३

आढकाचितपात्रात् खः पक्षे ठञपि जायते ।
आढकं संभवत्यवहरतिपचतिस्थितौ ॥
आढकीना ख प्रत्यये आढकिकी ठञि कृते ।
आचितीना च पात्रीणा आचितकी च पात्रकी ॥

## द्विगोः ष्ठंश्च । ५ । १ । ५४

आढकाद्यन्तकाच्छब्दाद् द्विगोः ष्ठन् खश्च जायते ।
संभवत्यादितात्पर्ये पक्षे ठञपि तस्य लुक् ॥
द्व्याढकिकी द्व्याढकीना द्व्याढकीत्यत्र ङीष् द्विगोः ।
द्व्याचितिकी द्व्याचितीना,द्व्याचिताऽपि प्रयुज्यते ॥
द्विपात्रिकी द्विपात्रीणा द्विपात्रीत्यपि पूर्ववत् ।

## कुलिजाल्लुक् खौ च । ५ । १ । ५५

संभवत्यादि तात्पर्ये कुलिजान्ताद् द्विगोरिह ।
लुक्खौ स्यातां विकल्पेन चकाराट्ठंश्च जायते ॥
लुकि द्विकुलिजी रूपमलुकि द्वैकुलजिकी ॥

## सोऽस्यांशवस्नभृतयः । ५ । १ । ५६

सोऽस्यांशवस्नभृतयः-विग्रहे ठन् प्रयुज्यते ।
पञ्चकः पञ्च अंशोऽथ वस्नो वा भृतिरस्ति सः ॥
अंशो भागः प्रसिद्धोऽस्ति वस्नं मूल्यञ्च कथ्यते ।
भृति वेतनमाख्यात सेवमर्थस्य निर्णयः ॥

## तदस्य परिमाणम् । ५ । १ । ५७

तदस्य परिमाणेऽर्थे प्रथमान्ताञ्च ठग् भवेत् ।
प्रस्थं परिमाणमस्य प्रास्थिकी दाशिरस्त्ययम् ॥

संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु । ५ । १ । ५८

संज्ञायामथ सङ्घे च सूत्राध्ययनयोरपि ।
संख्यायाः कन् विधीयेत पञ्चैव पञ्चकाः शुकाः ॥
संज्ञायां प्रत्ययः स्वार्थे जायते इति कथ्यताम् ।
परिमाणञ्च पञ्चैषां विग्रहः स्वार्थं एव वा ॥
सङ्घेऽपि पञ्चकः प्रोक्तः सूत्रेऽष्टकञ्च पाणिनेः ।
पञ्चकमध्ययनं स्यात् पञ्चवारमधीयते ॥

स्तोमे डविधिः । वा

स्तोमे डः प्रत्ययः प्रोक्तः पञ्चदशः सप्तदशः ।
पञ्चदश च मन्त्रा वै परिमाणमिति विग्रहः ॥
सोमयागेषु छन्दोगैः क्रियमाणा स्तुतिरिह ।
पृष्ठ्यादिसंज्ञकः स्तोमः कथ्यते स्मर्यतामिह ॥

पंक्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्य-
शीतिनवतिशतम् । ५ । १ । ५९

पंक्ति विंशतिरित्यादिशब्दाः सिद्ध्यन्ति तद्धिते ।
रूढशब्दा निपात्यन्ते संख्यार्थेऽत्र विशेषतः ॥

**विशेषविवेचनम्—**

पञ्चपादाः परिमाणं पङ्क्ति श्छन्दस्तदुच्यते ।
पञ्चन्निति पदात् तिः स्याट् टिलोपः कुत्वमत्र वै ॥
पंक्ति शब्दस्य नानार्थो भवतीह निरीक्ष्यताम् ।
यथाक्रमनिवेशे हि विप्रपंक्तिः प्रयुज्यते ॥
शुकपंक्तिः पदं प्रोक्तं संनिवेशक्रमे पुनः ।
दशसंख्यापि पंक्त्यर्थः पङ्क्तिरथो दशरथः ।
छन्दोभेदेऽपि पंक्तिः स्याद् वेदवाक्ये प्रकीर्तिता ॥
द्विदशतोश्च विनभावः शतिश्च प्रत्ययः पुनः ।
द्वौ दशतौ परिमाणं विंशतिः सा. निगद्यते ।
अपदत्वं निपातेन नस्यानुस्वार ष्यते ॥

त्रयाणां दशतां त्रिन् स्यात् शत्प्रत्यये त्रिंशदिति ।
त्रयश्च दशतो यत्र परिमाणमिति विग्रहे ।
त्रिंशत् पदं भवेदत्र निपातनक्रिया बलात् ॥
चत्वारो दशतो यत्र परिमाणं प्रयुज्यते ।
चत्वारिंशत् पदं तत्र चत्वारिन् चतुरस्त्विह ॥
पञ्चदशतस्तु तत्रास्ति परिमाण प्रदर्शनम् ।
पञ्चाशत् कथ्यते तत्र पञ्चादेशस्तु पञ्चनः ॥
शत्प्रत्ययो निपातेन अनयोरत्र जायते ।
षड्दशतः परिमाणं षष्टिरिति पदं भवेत् ॥
आदेशः षष् तिप्रत्ययो निपातनेन दर्श्यताम् ।
सप्तानां दशतां सप्त तिप्रत्ययेन सप्ततिः ॥
अष्टानां दशताश्चाशी नवानां दशतां नव ।
तिः प्रत्ययोऽपि जायेत अशीति र्नवतिस्ततः ॥
दशानां दशतामत्र शादेशस्तश्च प्रत्ययः ।
दशदशत इत्येवं परिमाणं यत्र वर्तते ।
शतं तत्रनिपातेन जायते च प्रयुज्यते ।

पञ्चदशतौ वर्गे वा । ५ । १ ६०

वर्गेऽर्थे पञ्चदादेशः पञ्चानां स्याद्विकल्पतः ।
पञ्चद् वा पञ्चको वर्गः पञ्चानां परिमाणके ।
दशानां दशदादेशो वर्गेऽर्थे परिमाणके ।
दशपरिमाणस्य दशद् वा दशकः स च ।

त्रिंशच्चत्वारिंशतो ब्राह्मणे संज्ञायां डण् ।५।१।६२

ब्राह्मणे नाम्नि डण् कार्यस्त्रिशतश्चत्वारिंशतः ।
यदा तु त्रिंशदध्यायाः परिमाणं तदा भवेत् ।
त्रैंशानि ब्राह्मणानीति प्रयोगः क्रियते बुधैः ॥
ब्राह्मणानां यदा तेषां चत्वारिंशन् मिता इह ।
अध्यायाः परिमाणं वै चत्वारिंशानि तानि च ॥

तदर्हति । ५ । १ । ६३

तदर्हति विग्रहे स्यु र्द्वितीयान्ताट् ठगादयः।
अर्हतिश्वेतच्छत्रं यः स भवेत् श्वेतच्छत्रिकः॥

छेदादिभ्यो नित्यम् । ५ । १ । ६४

नित्यमर्हति तात्पर्ये छेदादेष्ठग् विधीयते।
नित्यमर्हति छेदं यश्छैदिको वेतसः स्मृतः॥
छिन्नोऽपि वेतसः प्रायः प्ररोहति पुनः पुनः।

विरागविरङ्गञ्च । ग० सू० ।

वैरागिको विरागं यो नित्यमर्हति स भवेत्।
विरङ्ग मर्हतीत्यत्र वैरङ्गिकः स उच्यते।

शीर्षच्छेदाद्यच्च । ५ । १ । ६५

नित्यमर्हति अर्थेऽस्मिन् शीर्षच्छेदाच्च यट् ठकौ।
शीर्षच्छेद्यस्तथा शैर्षच्छेदिकोऽपि प्रयुज्यते॥
यट्ठकोः सन्नियोगेन शिरसश्शीर्ष इत्यपि।

दण्डादिभ्यो यत् । ५ । १ । ६६

दण्डादिभ्यो यदेव स्याद् दण्डयश्च दण्डमर्हति।
अर्धमर्हति सोऽर्घ्यः स्याद् वध्यो वधमिहार्हति॥

पात्राद् घंश्च । ५ । १ । ६८

घन् यतावर्हतीत्यर्थे पात्रात् स्यातां विशेषतः।
पात्रियश्च तथा पात्र्यः पात्रमर्हति विग्रहे॥

कडङ्करदक्षिणाच्छ च । ५ । १ । ६९

कडङ्कराद् दक्षिणायाः कुर्यातां छयतावुभौ।
कडङ्करीयो गौरस्ति यः कडङ्करमर्हति॥
कडङ्कर्यो वृषः सोऽस्ति यस्मै वुसं प्रयच्छति।
दक्षिणीयश्च दक्षिण्यो दक्षिणामर्हतीति सः॥

स्थालीबिलात् । ५ । १ । ७०

स्थालीबिलाच्छयतौ स्तः तदर्हति च विग्रहे ।
सन्ति स्थाली विलीयास्ते स्थालीबिल्याश्च तण्डुलाः ।
पाकयोग्याश्च ये सन्ति तण्डुलास्तेषु भाषिताः ॥

यज्ञर्त्विग्भ्यां घखञौ । ५ । १ ७१

यज्ञर्त्विग्भ्यां घखञौ स्तः क्रमेणैव तदर्हति ।
यज्ञमर्हति तात्पर्ये यज्ञियो देश उच्यते ॥
ऋत्विजमर्हतीत्येष आर्त्विजीनो जनः स्मृतः ।
ऋत्विग् वा यजमानोऽत्र बुध्यते विज्ञलोकतः ॥
द्वादशानां ठगादीनामार्हीयाणां गतोऽवधिः ।
अतः परं ठञेव स्याद्विशेषो ज्ञायतामिह ॥

। इत्यार्हीयास्तद्धिताः ।



## अथ तद्धितेषु ठञ्प्रत्ययेकालाधिकारः

पारायणतुरायणचन्द्रायणं वर्तयति । ५ । १ । ७२

ठञ् प्रत्ययो भवेदस्मिन् विग्रहे तद्धितः पुनः ।
आरभ्य आदितः कश्चिद् ग्रन्थमन्तावधि पठेत् ॥
तत्पारायणमाख्यातं रामायणादिकस्य वै ॥
पारायणं वर्तयति पारायणिकः स भवेत् ।
तुरायणं यज्ञभेदस्तं वर्तयति यो जनः ॥
तौरायणिक उच्येत यजमानो नृपादिकः ॥
चन्द्रायणंवर्तयति स चान्द्रायणिक इह ।

संशयमापन्नः । ५ । १ । ७३

योऽत्र संशयमापन्नः सांशयिकस्तु स भवेत् ।
ठञष्ठस्येक इत्यत्र वृद्धिरादेरचो भवेत् ॥

योजनंगच्छति । ५ । १ । ७४

योजनं गच्छतीत्यर्थे योजनिकः प्रयुज्यते ।
क्रोशशतयोजनशतयोरुपसंख्यानम् । वा
गच्छति क्रोशशतं यः स क्रौशशतिकः स्मृतः ।
गच्छति योजनशतं योजनशतिकं तं वदेत् ॥
ततोऽभिगमनमर्हतीति च वक्तव्यम् । वा
भिक्षुः क्रोशशतिकः स्यात् ततोऽभिगमनमर्हति ।
इह यौजनशतिक आचार्यः कथ्यते बुधैः ॥

पथः ष्कन् । ५ । १ । ७५

पथः ष्कन् गच्छतीत्यर्थे पथिकः पथिकी ततः ।

पन्थो ण नित्यम् । ५ । १ । ७६

पथो णः पन्थ आदेशः पान्थः पान्थी च जायते ।
नित्यं गच्छति पन्थानं स पान्थ इह इष्यते ।

उत्तरपदेनापहृतश्च । ५ । १ । ७७

औत्तरपथिकमुत्तरपथेनाहृतं भवेत् ।
उत्तरपथेन गच्छति औत्तरपथिकः स च ॥

आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसंख्यानम् । वा

आहृतप्रकरणेऽत्र वारिजङ्गलपूर्वकात् ।
स्थलकान्तारपूर्वाच्च ष्कन् प्रत्ययो विधीयते ॥
वारिपथेन गच्छति आहृतं वेति विग्रहे ।
वारिपथिक मित्येव मुदाहरणमुच्यते ॥

कालात् । ५ । १ । ७८

व्युष्टादिभ्यश्च सूत्रात्प्रागधिकारोऽयमस्ति वै ।
कालवाचिपदाट् ठञ् स्यादित्यर्थस्तेन जायते ॥

तेन निर्वृत्तम् । ५ । १ । ७९

तेन निर्वृत्तमुच्चार्य्य कालाट्ठञ् च विधीयते ।
ठस्येको जायते तस्मादह्नो निवृत्तमाह्निकम् ॥

तमधीष्टो भृतो भूतो भावी । ५ । १ । ८०

तमधीष्टो भृतो भावीत्यर्थे ठञ् प्रत्ययो भवेत् ।
मासिकोऽध्यापको मासमधीष्टः स निगद्यते ॥
मासं भृतश्च मासिकः कर्मकरो ममास्त्ययम् ।
मासं भूतोऽस्ति यो व्याधिः स मासिक उदाहृतः ॥
मासं भावी गृहे नूत्ने उत्सवो मासिकः स्मृतः ।

मासाद्वयसि यत्खञौ । ५ । १ । ८१

मासाद्वयसि तात्पर्ये यत्खञौ विहिताविह ।
मासं भूतशिशुश्चायं मास्यो मासीन उच्यते ॥

द्विगोर्यप् । ५ । १ । ८२

द्विगो र्मासाद्वयसि यप् द्विमास्यो बाल एव वै ।
द्वौ मासावस्य बालस्य भूत इति विगृह्यताम् ॥

षण्मासाण्ण्यच्च । ५ । १ । ८३

षण् मासाद्वयसीत्येव ण्यद्यप्ठञस्त्रयः खलु ।
यपि कृते च षण्मास्यः षाण्मासिकष्ठञिकृते ॥
ण्यति षाण्मास्य उच्येत वयसि च प्रयुज्यते ।

अवयसि ठंश्च । ५ । १ । ८४

षण्मासिको भवेद् व्याधिः षाण्मास्यो ण्यति च कृते ।

समायाः खः । ५ । १ । ८५

समायाः खः प्रवर्तेत अधीष्टाद्युक्तविग्रहे ।
समां भृतोऽथवा भूतो भावी समीन उच्यते ॥
समा वर्षमिति प्राह समीनो वार्षिकोभवेत् ।

द्विगोर्वा । ५ । १ । ८६

समायास्तु द्विगोः खो वा पक्षे ठञिति जायते ॥
द्विसमीन स्तथा पक्षे द्वैसमिक उदाहृतः ॥

रात्र्यहः संवत्सराच्च । ५ । १ । ८७

रात्र्यहः संवत्सरान्ताद् द्विगोः खः प्रत्ययश्च ठञ् ।
खप्रत्यये द्विरात्रीणो द्वैरात्रिकष्ठञि भवेत् ॥
द्व्यहीनः खजि रूपं स्याद् द्वैयह्निकष्ठञि कृते ।
ऐजागमविधानं स्याद् ठञि च प्रत्यये कृते ।
खे द्विसंवत्सरीणः स्यादधीष्टाद्युक्तविग्रहे ॥

संख्यायाः संवत्सरसंख्यस्य च । ७ । ३ । १५

ञिदादावुत्तरपदस्य संख्याया वृद्धिरिष्यते ।
द्वावस्य संवत्सरौ स्तः द्विसांवत्सरिकः स्मृतः ॥
द्वे षष्टी च भृतो बालः कथ्यते स द्विषष्टिकः ।

### वर्षाल्लुक् च । ५ । १ । ८८

वर्षान्ताच्च द्विगोरत्र खठञौ भवतस्तयोः ।
पक्षे लुगपि कर्तव्यस्तस्माद्रूपत्रयं भवेत् ॥
व्याधिरयं दिवर्षीणोः द्विवर्षो वा प्रयुज्यताम् ।

### वर्षस्याभविष्यति । ७ । ३ । १६

उत्तरपदस्य वर्षस्य वृद्धिः स्यादभविष्यति ।
द्विवार्षिको मनुष्योऽयं द्वैवार्षिको भविष्यति ॥

द्वे वर्षेऽत्र भृतोऽभीष्टः कर्म यश्च करिष्यति ।
द्विवार्षिको मनुष्योऽयं कथ्यते सेवकादिषु ॥

द्वौ कुडवौ परिमाणं यस्य स द्विकौडविकः ।
क्रीतं द्वाभ्यां सुवर्णाभ्यां द्विसौवर्णिकमुच्यताम् ॥
क्रीतं द्वाभ्याञ्च निष्काभ्यां द्विनैष्किकमुदाहृतम् ।

### चित्तवति नित्यम् ५ । १ । ८९

चित्तवति स्थले नित्यं लोपः स्या त्प्रत्ययस्य च ।
द्विवर्षो दारकः स स्यात् वर्षे द्वेऽभवतांयदा ॥

### षष्टिकाः षष्टिरात्रेण पच्यन्ते । ५ । १ । ९०

बहुवचनमतन्त्रं सूत्रेऽस्मिन् धृतमस्ति वै ।
षष्टिका षष्टिरात्रेण पच्यन्ते ते उदाहृताः ॥
कन्प्रत्ययस्तृतीयान्ताल्लोपो रात्रस्य जायते ।

### तेन परिजय्यलभ्यकार्यसुकरम् । ५ । १ । ९३

तेनात्र परिजय्ये ठञ् लभ्ये वा सुकरेऽपि च ।
मासेन परिजय्यो यः स व्याधिर्मासिकः स्मृतः ॥
मासेन सुकरं लभ्यं कार्यं तन्मासिकं भवेत् ।

### तदस्य ब्रह्मचर्यम् । ५ । १ । ९४

कालवाचि द्वितीयान्तात् तदस्य ब्रह्मचर्य्यमिति ।
समुच्चार्य प्रत्ययष्ठञ् ब्रह्मचारी स मासिकः ॥

द्वितीयाऽत्यन्तसंयोगे विग्रहेऽत्र प्रदर्श्यताम् ।
माससमस्य ब्रह्मचर्यमिति विग्रहदर्शनम् ।
अर्द्धमासं ब्रह्मचर्यं यस्यार्द्धमासिकः स च ।।
मासोऽस्ति ब्रह्मचर्यं मासिको वा निगद्यते ।

महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम् । वा

महानाम्न्यादिषष्ठ्यन्ताद् ब्रह्मचर्येऽत्र ठञ् भवेत् ।
महानाम्निक आख्यातः स्तासाञ्चेद् ब्रह्मचर्यमिह ।।
महानाम्नी ऋचा ख्याता विदामघवन्निति पुनः ।
हरदत्तस्तु भस्याढे पुंवद्भावं विधाय वै ।।
माहानामिक इत्याह स्यादर्थः पूर्ववत्पुनः ।।

चातुर्मासाण्ण्यो यज्ञे तत्र भव इत्यर्थे । वा ।

चतुर्मासात्तु यज्ञे ण्यश्चातुर्मास्यं प्रयुज्यते ।
चतुर्षु किल मासेषु सम्पन्नं यज्ञकर्म यत् ।।

संज्ञायामण् । वा०

संज्ञायामणेव स्यात् चातुर्मासी तु पूर्णिमा ।
आषाढी कथ्यते यस्मात् चातुर्मासेषु पूर्यते ।।
अणन्तत्वाच्च ङीप्कार्यं क्रियते पदसाधने ।

तस्य च दक्षिणा यज्ञाख्येभ्यः । ५ । १ । ९५

षष्ठ्यन्ताद् यज्ञशब्दाट्ठञ् दक्षिणा यत्र दीयते ।
दक्षिणा द्वादशाहस्य कथ्यते द्वादशाहिकी ।।
अग्निष्टोमस्य दक्षिणा तात्पर्ये आग्निष्टोमकी ।
वाजपेयस्य यज्ञस्य दक्षिणा वाजपेयकी ।।

तत्र च दीयते कार्यं भववत् । ५ । १ । ९६

प्रावृषि दीयते प्रावृषेण्यं कार्यं प्रयुज्यते ।
एण्यः प्रत्यय एवात्र क्रियते पदसाधने ।।
शरदि दीयते कार्यं शारदं तच्च कथ्यते ।।

।। इति कालाधिकारस्य पूर्णोऽवधिः ।।



# अथ ठञधिकारः

व्युष्टादिभ्योऽण् । ५ । १ । ९७

अण् प्रत्ययो विधीयेत व्युष्टादिगणसंस्थितात् ।
व्युष्टे यद् दीयते कार्यं तद्वैयुष्टमुच्यते ॥
व्युष्टं स्यात्प्रभातं हि सूर्योदयस्य पूर्वतः ।
व्युष्टं तीर्थं प्रवासश्च संग्रामादि भवेदिह ।

अग्निपदादिभ्य उपसंख्यानम् । वा

दीयतेऽग्निपदे कार्यं तदाग्निपदमुच्यते ॥
पिलुमूले च दीयेत पैलुमूलं तदुच्यते ।

तेन यथाकथा च हस्ताभ्यां णयतौ । ५ । १ । ९८

यथाकथाच हस्ताभ्यां णयतौ स्तः क्रमेण वै ।
अर्थाभ्यान्तुयथासंख्यं नेष्यते तद्विभावय ।
यथाकथाच दीयते याथाकथाचमुच्यते ॥
अनादरेण सम्पन्ने कृते वा इदमुच्यते ।
हस्तेन दीयते कार्यं हस्त्यं तदत्र कथ्यते ॥

संपादिनि । ५ । १ । ९९

संपादिनि च तात्पर्ये ठञेव प्रत्ययो भवेत् ।
कर्णवेष्टकसंपादि कार्णवेष्टिकिकं मुखम् ॥
कर्णालङ्कारयुग्माभ्यां शोभते मुखमस्य वै ।

कर्मवेषाद्यत् । ५ । १ । १००

कर्मवेषद्वयाद् यत् स्यात् कर्मण्यं शौर्यमुच्यते ।
कर्मणा यच्च संपादि तदेवानेन बुध्यते ॥
वेषेण खलु संपादी वेष्यो नटश्च कथ्यते ।
आकारः कृत्रिमो वेषो नटस्तस्मात् सुसज्जते ॥

तस्मै प्रभवति संतापादिभ्यः । ५ । १ । १०१

तस्मै प्रभवतीत्यर्थे संपातेस्तु ठञ् भवेत् ।
संतापाय प्रभवति सान्तापिकः स उच्यते ॥

संग्रामाय प्रभवति शक्तः सांग्रामिकः स्मृतः ।

योगाद्यच्च । ५ । १ । १०२

योगात्प्रभवतीत्यर्थे यट्ठञौ विहिताविह ।
योगाय यः प्रभवति योग्योऽथवा स यौगिकः ॥

कर्मण उकञ् । ५ । १ । १०३

कर्मणः प्रभवतीत्यर्थे उकञ् प्रत्यय इष्यते ।
कर्मणे प्रभवतीति कार्मुकं धनुरिष्यते ॥

स्पष्टीकरणम्—

कर्मण उकञ् टिलोपश्चात्र क्रियते ततो रूपसिद्धिः ।

समयस्तदस्य प्राप्तम् । ५ । १ । १०४

तदस्य प्राप्तमित्यर्थे समयाट् ठञ् विधीयते ।
प्राप्तोऽस्य समय स्तत्र सामयिकं प्रयुज्यताम् ॥

ऋतोरण् । ५ । १ । १०५

ऋतोरण् प्राप्तमित्यर्थे ऋतुः प्राप्तोऽस्य आर्तवम् ।

स्पष्टीकरणम्—

ऋतोरण् ओर्गुणोऽवादेशस्ततोवृद्धिः ।
पुष्पमादि विशेष्यं हि वक्तव्यमस्य योजने ॥

उपवस्त्रादिभ्य उपसंख्यानम् । वा

अण् भवेदुपवस्त्रादे रौपवस्त्रं प्रयुज्यते ।
उपवस्ताऽस्य प्राप्तोऽस्ति विग्रहो दर्श्यतामिह ॥

स्पष्टीकरणम्—

उपवस्तृ-अण् आदिवृद्धि र्यण् च भवति ।
प्राशित्रं प्राशिता प्राप्तो यस्येति तस्य बोधने ।

स्पष्टता—
प्राशितृ-अण् यण् कार्यञ्च जायते।

कालाद्यत्। ५। १। १०७

कालाद्यत् स्याच्च प्राप्तेऽर्थे काल्यं शीतमुदाहृतम्।

अत्रस्पष्टता—
कालशब्दाद्यत् यस्येति चेत्यकारलोपश्चात्र।

प्रकृष्टे ठञ्। ५। १। १०८

प्रकृष्टेऽर्थे च कालाट्ठञ् तदस्य बोधने भवेत्।
प्रकृष्टो दीर्घकालोऽस्य वैरं तत् कालिकं स्मृतम्॥

प्रयोजनम्। ५। १। १०९

प्रयोजनं तदस्येति विग्रहे ठञ् विधीयते।
इन्द्रमहः प्रयोजनं तदैन्द्रमहिकं भवेत्॥
प्रयोजनं फलं ज्ञेयं कारणं वेति बुध्यताम्।

विशाखाऽषाढादण् मन्थदण्डयोः। ५। १। ११०

विशाखाऽषाढशब्दाभ्यामण् क्रमान्मन्थदण्डयोः।
प्रयोजनं विशाखा चेद् वैशाखो मन्थ उच्यते॥
आषाढो दण्ड आख्यातो यथातथाऽत्र विग्रहः।

चूडादिभ्य उपसंख्यानम्। वा।

अण्प्रत्ययोपसंख्यानं चूडादिभ्यः प्रयोजने।
चूडा प्रयोजनं चौडं श्राद्धं श्रद्धाप्रयोजने॥

अनुप्रवचनादिभ्यश्छः। ५। १। १११

अनुप्रवचनादिभ्यश्छ प्रत्ययः प्रयोजने।
अनुप्रवचनीयन्तु प्रयोगः साध्यते ततः॥
अस्यानुप्रवचनं प्रयोजनञ्च विग्रहः।

समापनात् सपूर्वपदात्। ५। १। ११२

छप्रत्ययः पुनश्चात्र पदपूर्वं समापनात्।
व्याकरण समापनीयं व्याकरणसमापने॥

ऐकागारिकट् चौरे । ५ । १ । ११३

स्यादैकागारिकश्चौरे निपातनेन साध्यते ।
एकमगारमस्यास्ति प्रयोजनश्च विग्रहः ॥

आकालिकडाद्यन्तवचने । ५ । १ । ११४

समानकालावाद्यन्तौ यस्य स आकालिकः स्मृतः ।
आकालः प्रकृतेरत्र इकट् स्यात् प्रत्ययः पुनः ॥
आशुविनाशि यद्वस्तु तदाकालिकमुच्यते ।
पूर्वदिने समुत्पद्य दिनान्तरे विनाशि यत् ।

आकालाट्ठंश्च ।

आकालाट्ठंश्च कर्तव्यो विद्युदाकालिका स्मृता ।

। इति ठञोऽवधिः समाप्तः ।

—: ० :—

# अथ तद्धितेषु नञ्स्नञधिकारः

## तेन तुल्यं क्रियाचेद्वतिः । ५ । १ । ११५

तेन तुल्यं क्रिया वस्तु भवेच्चेद्वति प्रत्ययः ।
वतेरिकारलोपः स्यात्तदन्तोऽव्ययसंज्ञकः ॥
ब्राह्मणवदधीते सः भानुवद् द्योततेऽत्र सः ।
ब्राह्मणेन यदा तुल्योऽधीते तदा प्रयुज्यते ॥
स्थूलः पुत्रेण तुल्योऽत्र गुणतुल्ये वति र्नहि ।
ब्राह्मणेन सदृशोऽयं क्षत्रियोऽत्रापि नो वतिः ॥

## तत्र तस्येव । ५ । १ । ११६

तत्र तस्येव वा भाति तदा वतिः प्रवर्तते ।
मथुरायामिव प्राकारः मथुरावत्पुरं तव ॥
चैत्रस्य इव मैत्रस्य चैत्रवद् वृषभा इमे ।

## तदर्हम् । ५ । १ । ११७

तदर्हमिति सूत्रेण वतिः स्यादर्हति पुनः ।
विधिमर्हति विधिवत् पूज्यते सुजनैर्गुरुः ॥

## तस्य भावस्त्वतलौ । ५ । १ । ११९

तस्य भावे त्वतलौ स्तो गोर्भावो गोत्वमिष्यते ।
गोर्भाक्लीबं भवेद् गोता स्त्रीत्वमत्र तलन्ततः ॥
त्वान्तं क्लीवं प्रयुञ्जीत तलन्तन्तु सदा स्त्रियाम् ।

## आ च त्वात् । ५ । १ । १२०

ब्रह्मणस्त्व इत्यतः प्राक् त्वतलौ गच्छत इमौ ॥
अपवादैः सह समावेशार्थमुच्यते इदम् ।
कर्मणि च विधानार्थं गुणवचनवाचितः ॥
चकारेण हि नञ्स्नञौ प्रत्ययौ भवत इह ।
तस्मात् त्वतलावत्र नञ्स्नञौ प्रत्ययावपि ॥

स्त्रीणां भावे भवेत् स्त्रैणं स्त्रीत्वं स्त्रीताऽपि जायते ।
पुंसो भावस्तु पौंस्नं स्यात् पुंस्त्वं पुंस्ताऽपि कथ्यते ।।

न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतर—सलसेभ्यः । ५ । १ । १२१

इतः परश्च ये केचिद् भावप्रत्ययनामकाः ।
सन्त्यज्य चतुरादीन् न सन्ति नञ्तत्पुरुषतः ।।

अथवा—

तत्पुरुषाच्च नञ्पूर्वात् नस्यु र्भावेऽन्यप्रत्ययाः ।
त्वतलावेव जायेते अपतित्वमिदं भवेत् ।।
अपटुत्वमपि प्रोक्तं बार्हस्पत्यं विशेषतः ।
अचतुरेति निषेधादाचतुर्यमिति पुनः ।।
आसङ्गत्यमालवण्यमावटयमायुध्यमिति ।
आकत्यञ्च तथाऽऽरस्यमालप्यञ्च ष्यञि कृते ।।

पृथिव्यादिभ्य इमनिज्वा । ५ । १ । १२२

पृथिव्यादिभ्य इमनिज् वा पक्षेऽणादिरपि स्मृतः ।

रऋतो हलादे र्लघोः । ६ । ४ । १६१

इष्ठेमेयस्सु रऋतो हलादेस्तु लघोरिह ।

टेः । ६ । ४ । १५५

इष्ठेमेयस्सु भस्यात्र टेर्लोपश्च विधीयते ।।
पृथो र्भावस्तु प्रथिमा पार्थिवं पुनरुच्यताम् ।
मृदो र्भावस्तु म्रदिमा मार्दवं पुनरत्र च ।।

वर्णदृढादिभ्यः ष्यञ्च । ५ । १ । १२३

ष्यञ् स्याद्वर्णदृढादिभ्य श्चकारादिमनिचपुनः ।
शौक्ल्यं शुक्लस्य भावः स्यात् शुक्लिमापि प्रयुज्यते ।।
दार्ढ्यं तथैव द्रढिमा रत्वमत्र विशेषतः ।
पृथुमृदुभृश कृशदृढपरिवृढस्य च ।

रत्वं भवति तेनात्र द्रढिमा प्रथिमादिकम् ॥
औचिती शब्दसिद्धिस्तु ष्यञो यस्यात्र लोपतः ।
याथाकामी ष्यञो यस्य लोपेनैव सिद्धयति ॥

गुणवचनब्राह्मणादिभ्यः कर्मणि च । ५ । १ । १२४

गुणवाचकशब्देभ्यो ब्राह्मणादेश्च कर्मणि ।
भावे ष्यञ् विधातव्यं जाड्यमेतेन सिद्धयति ॥
जडस्य कर्म भावो वा विग्रहः समुदीरितः ॥
मूढस्य कर्म भावो वा मौढ्यं पदं सुसाध्यते ।
ब्रह्मणो भाव इत्यत्र ब्राह्मण्यं ष्यञि च कृते ॥

अर्हतो नुम् च । वा

अर्हतः कर्म भावो वा आर्हन्त्यमिति जायते ।
आर्हन्तीत्यपि साध्येत षित्वान् ङीषप्रत्ययः स्त्रियाम् ।
अस्याकृतिगणत्वेन आन्यभाव्यमिति ततः ।

यथातथायथापुरयोः पर्यायेण । ७ । ३ । ३१

सनञ्यथातथाशब्दात् सनञ्यथापुराच्च ष्यञ् ॥
पर्यायेण वृद्धिरादे रचस्तु जायते इह ॥
अयथातथाभावस्तु आयथातथ्यमिष्यते ।
पक्षे स्यादयथातथ्यमेवमग्रेऽपि वुध्यताम् ॥
अयथापुरस्य भाव आयथापुर्यमिष्यते ।
पक्षे स्यादयथापुर्यं प्रयोगो द्विविधो मतः ॥

चतुर्वर्णादीनां स्वार्थ उपसंख्यानम् । वा

चतुर्वर्णादिशब्देभ्यः स्वार्थे ष्यञ् प्रत्ययो भवेत् ।
चत्वारः खलु वर्णास्तु चातुर्वर्ण्यं भवेदिह ।
सान्निध्यं चातुराश्रम्यं त्रैस्वर्यं षाड्गुण्यमिति ॥
सैन्यं सामीप्यमित्येव मौपम्यं त्रैलोक्यमिति ।

सर्ववेदादिभ्यः स्वार्थे । ग० सू०

सर्वेवेदाः सर्ववेदास्तानधीते च विग्रहे ।
सर्ववेदः प्रयोगस्तु सवादेरिति लुक् कृते ।।
स एव सार्ववेद्यः स्यात् सर्ववेदस्य बोधके ।

चतुर्वेदस्योभयपदवृद्धिश्च ।,ग० सू०

उभयपदस्य वृद्धि श्चतुर्वेदस्तु स जनः ।
अधीते चतुरो वेदान् चतुर्वेदस्तु स जनः ।।
चतुर्विद्यस्य पाठोऽत्र मते कस्यापि वर्तते ।
तस्माच्चतुर्विद्य एव चातुर्वैद्यः प्रयुज्यते ।।

स्तेनाद्यन्नलोपश्च । ५ । १ । १२५

स्तेनाद्यत स्यान्नलोपश्च स्तेयं स्तेनस्य कर्मणि ।
पक्षे स्तैन्यमिति प्रोक्तं ष्यञन्तमिति वुध्यताम् ।।

सख्यु र्यः । ५ । १ । १२५

सख्यु र्यः प्रत्ययः प्रोक्तो भावे कर्मणि वा पुनः ।
सख्यु र्भावोऽथवा कर्म सख्यमत्र प्रकीर्तितम् ।।

दूतवणिग्भ्याञ्च । वा०

यः स्याद्दूतवणिग्भ्याञ्च दूत्यं वाणिज्यमित्यपि ।
माधवम स्यते स्त्रीत्वं वणिज्यापि भवेत्ततः ।।
ब्राह्मणादिषु पाठेन वाणिज्यमपि जायते ।

कपिज्ञात्योर्ढक् । ५ । १ । १२७

कपिज्ञात्यो ढगेव स्याद् भावे तथा च कर्मणि ।
कापेयमथ ज्ञातेयं प्रयोगः क्रियते ततः ।।

पत्यन्तपुरोहितादिभ्योयक् । ५ । १ । १२८

यक् प्रत्ययस्तु पत्यन्तात् पुरोहितादितोऽपि यक् ।
सैनापत्यं प्रयोगोऽयं पौरोहित्यं भवेत्ततः ।।

राजाऽसे । ग. सू.

राजाऽसे गणसूत्राच्च राज्ञो यह च विधीयते ।
राज्ञो भावस्तथा कर्म राज्यमिति प्रयुज्यते ॥

समासे ब्राह्मणादित्वात् ष्यञेव प्रत्ययो भवेत् ।
अधिराज्यं प्रयोगस्तु विहितः काव्यशास्त्रयोः ॥

प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ।५।१।१२९

प्राणिभृज्जातितश्चैवं वयोवचननामतः ।
उद्गात्रादिशब्दादञ् भावे कर्मणि जायते ॥

आश्वमौष्ट्रञ्च कौमारं कैशोरं सौष्ठवं पुनः ।
औद्गात्रं दौष्ठवं विज्ञै रौन्नेत्रमिति साध्यते ॥

हायनान्तयुवादिभ्योऽण् । ५ । १ । १३०

हायनान्त युवादिभ्यो भवेदण् प्रत्ययः सदा ।
द्वैहायनं तथा त्रैहायनं यौवनमित्यपि ॥

स्थविरस्य च भावो वा कर्मस्थाविरमुच्यताम् ।

श्रोत्रियस्य यलोपश्च । वा ।

श्रोत्रियस्य यलोपः स्याच्छ्रौत्रं श्रोत्रियकर्मणि ।
कौशल्यं कौशलं रूपं चापल्यं चापलं पुनः ॥

नै पुण्यं नैपुणं वाच्यं पैशुन्यं पैशुनं पुनः ।

कौतूहल्यं तथा कौतूहलञ्च साध्यतामिह ।
युवादित्वात् तथा ब्राह्मणादित्वादण्ष्यञौ कुरु ॥

इगन्ताच्च लघुपूर्वात् । ५ । १ । ३१

लघुपूर्वादिगन्तादण् भावे कर्मणि जायते ।
शुचे र्भावो मुनेः कर्म शौचं मौनमिह स्मृताम् ॥

कवेः कर्म च भावश्च काव्यमेव प्रयुज्यते ।
ष्यञेव ब्राह्मणादित्वात् कावं नात्र प्रयुज्यते ॥

योपधाद्गुरूपोत्तमाद्वुञ् । ५ । १ । १३२

गुरूपोत्तम योपधाद् वुञ् भावे कर्मणि पुनः ।
रामणीयकमाख्यातमभिधानीयकं तथा ॥
सहायाद्वुञ् विकल्पेन साहायकमिति भवेत् ।
साहाय्यञ्च भवेत्पक्षे भावे कर्मणि प्रत्ययः ॥

द्वन्द्वमनोज्ञादिभ्यश्च । ५ । १ । १३३

द्वन्द्वाद्वुञ् प्रत्ययो ज्ञेयो मनोज्ञादे स्तथात्र वुञ् ।
शैष्योपाध्यायिका ज्ञेया मानोज्ञकमिति पुनः ॥

गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ।५।१।१३४

गोत्राच्चचरणशब्दाच्च श्लाघायां वुञ् विधीयते ।
अत्याकारे तदवेते वुञाभ्याञ्च विधीयते ॥

वुञ् प्रत्ययश्च भावे स्यात्कर्मणीति विमृश्यताम् ।
श्लाघते गार्गिकयाऽत्र गार्ग्यत्वेन विकत्थते ॥

गार्गिकयाऽत्याकुरुतेऽधिक्षेपोऽर्थ इष्यते ।
गोत्रे वुञि कृते रूप सिद्धिरत्र विधीयताम् ॥

स गार्गिकामवेतोऽत्र तात्पर्यमवधार्यताम् ।
आपत्यस्य चेति सूत्राद्यलोपः क्रियतेऽत्र वै ॥

श्लाघते काठिकयेति चरणाद्वुञ् विधीयते ।
लौकिकं गोत्रमत्रास्ति प्रवराध्यायवर्ति यत् ॥

होत्राभ्यश्छः । ५ । १ । १३५

जुहोतेस्त्रन् भवेद्धोत्रा ततश्छः प्रत्ययो भवेत् ।
ऋत्विग्वाचीह होत्रास्ति स्त्रीलिङ्गे च प्रयुज्यते ॥
विशेषग्रहणञ्चात्र बहुवचनतो भवेत् ।
अच्छावाकस्य भावो वा कर्मात्रास्तीति विग्रहे ॥
आच्छाकीयमित्युक्तं प्रयुज्यतां विचार्य वै ।
भावो मित्रवरुणस्य कर्म वा इति विग्रहे ।
रूपं मित्रावरुणीयं जायते छे कृते पुनः ॥

ब्रह्मणस्त्वः । ५ । १ । १३६

ब्रह्मणस्त्वप्रत्ययः स्याद्धोत्रावाचिन एव हि ।
ब्रह्मत्वं ब्रह्मणो भावः कर्म वा प्रतिपाद्यते ॥
छस्यापवादभूतोऽयं प्रत्ययोऽस्तीति बुध्यताम् ।
तलश्च बाधनार्थं हि त्ववचनमिह स्थितम् ॥
ब्राह्मणस्य च पर्यायाद् ब्रह्मन्शब्दात्तु त्वतलौ ।
ब्रह्मत्वं ब्रह्मता रूपं तस्मादेव प्रयुज्यते ॥

॥ इति भावकर्मार्थक नञ्स्नञादि प्रकरणम् ॥

—: ० :—

# तद्धितेषु पाञ्चमिकमत्वर्थीयप्रकरणम्

## धान्यानां भवने क्षेत्रे खञ् । ५ । २ । १

धान्यानां भवने क्षेत्रे खः प्रत्ययो विधीयते ।
मुद्गानां भवनं क्षेत्रं मौद्गीनं कथ्यते जनैः ॥

## व्रीहिशाल्योर्ढक् । ५ । २ । २

व्रीहिशाल्योर्ढगेव स्याद् व्रैहेयं शालेयमिति ।
ढकः स्यादेय आदेशो वृद्धिरादेरचः पुनः ॥

## यवयवक षष्टिकाद्यत् । ५ । २ । ३

यवयवक षष्टिका शब्देभ्यो यद् विधीयते ।
यवानां यवकानाञ्च भवनं क्षेत्रमत्र वै ॥
यव्यं स्याद् यवक्यश्च यति च प्रत्यये कृते ।
षष्टिकानाञ्च भवनं षष्टिक्यं क्षेत्रमुच्यते ॥

## विभाषा तिलमाषोमाभङ्गाणुभ्यः । ५ । २ । ४

तिलान्माषादुमायाश्च भङ्गादणोश्च यत्खञौ ।
तिलानां भवनं क्षेत्रं तिल्यं तैलीनमुच्यते ॥
माषाणां भवनं क्षेत्रं माष्यं माषीणमिष्यते ।
उम्यमौमीनमित्येवं भङ्ग्यं भाङ्गीनमुच्यताम् ॥
अणव्य माणवीनञ्च अणूनां भवनं भवेत् ।

## सर्वचर्मणः कृतः खखञौ । ५ । २ । ५

कृतेऽर्थे खखञौ स्यातां सर्वचर्मपदादिह ।
कृतः सर्वश्चर्मणाऽत्र सर्वचर्मीणमुच्यते ॥
पक्षे स्यात् सार्वचर्मीणो यथेच्छन्तु प्रयुज्यताम् ।

## यथामुख संमुखस्य दर्शनः खः । ५ । २ । ६

दर्शनेऽर्थे यथामुखात् संमुखात् खो विधीयते ।
यथामुखं दर्शनोऽत्र यथामुखीन उच्यते ।
सर्वमुखस्य दर्शनः संमुखीनः प्रयुज्यते ॥

तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ।५।२।७

सर्वादेश्च द्वितीयान्तात् पथ्यङ्गकर्म पत्रतः ।
व्याप्नोत्यर्थे खप्रत्ययः क्रियते तद्धितः पुनः ॥
व्याप्नोति सर्वपथान् यः स च सर्वपथीन इति ।
व्याप्नोति यश्च सर्वाङ्गं सर्वाङ्गीणः सच स्मृतः ।
व्याप्नोति सर्वकर्माणि सर्वकर्मीण उच्यते ॥
सर्वपत्रीण इत्येवं सर्वपात्रीण इत्यपि ।

आप्रपदं व्याप्नोति । ५ । २ । ८

आप्रपदञ्च व्याप्नोति विग्रहे प्रत्ययश्च छः ।
पट आप्रपदीनः स्यात् पदपर्यन्तमस्ति यः ॥
पादस्याग्रं भवेदत्र प्रपदमिति बुध्यताम् ।
तत्पर्यन्तमाख्यात माप्रपदमिदं पदम् ॥
यद्वस्त्रमिह सम्पूर्णं पादमोर्णौति तत्स्मृतम् ।

अनुपद सर्वान्नायानयं वद्धाभक्षयतिनेयेषु ।५।२।९

अनुपदाच्च सर्वान्नादनायनाच्च छो भवेत् ।
वद्धो भक्षयति नेयः क्रमादर्थोऽस्ति विग्रहः ॥
उपानदनुपदीना वद्धानुपदमुच्यते ।
सर्वान्नानि भक्षयन्ति सर्वान्नीयाश्च भिक्षवः ॥
अयानयः स्थलं किञ्चित् तन्नेय इति विग्रहे ।
शार आयानयीनः स्यात् फलकशिरसि स्थितः ॥

परोवर परस्परपुत्रपौत्रमनुभवति । ५ । २ । १०

परोवरं परस्परं पुत्रपौत्रमनुभवन् ।
विग्रहे खः प्रयोक्तव्य उदाहरण मंत्र च ।
परांश्च अवरांश्चानु भवतीति प्रदर्श्य वै ।
परोवरीण आख्यातः स्यादुत्वमवस्य च ॥
परांश्च परतरांश्च अनुभवतीति विग्रहे ।
परंपरीण आख्यातः परम्परो निपातनात् ॥
पुत्रपौत्राननु भवति पुत्रपौत्रीण उच्यते ।

परम्पराऽस्ति शब्दोऽत्र तस्मात् स्वार्थे ष्यञिकृते ।
पारम्पर्यमिति प्रोक्तं पारोवर्यं नचोच्यताम् ॥

अवारपारात्यन्तानुकामं गामी । ५ । २ । ११

अवारपारात्यन्तानु कामं गामी विगृह्य छः ।
गामी अवारपारं यः सोऽवारपारीणः स्मृतः ॥
अवारीणश्च पारीणः प्रयोगोऽपि विधीयते ।
अत्यन्तीनोऽत्यन्तंगामी भृशं गन्ता जनो भवेत् ॥
अनुकामं यश्च गामी सोऽनुकामीन उच्यते ।
यथेष्टं गन्तरि प्रायः प्रयोगोऽयं विधीयते ॥

समां समां विजायते । ५ । २ । १२

समां समां विजायेत तत्र खः प्रत्ययो भवेत् ।
समांसमीना गौरस्ति प्रतिवर्षं प्रसूयते ॥
खप्रत्ययानुत्पत्तौ यलोपो वा वक्तव्यः ।
खप्रत्ययस्याभावे तु यलोपो वा विधीयते ।
विजायते समां समां समायां समायाञ्च वा ।

अद्यश्वीनावष्टब्धे । ५ । २ । १३

अद्यश्वीना अवष्टब्धे अद्यश्वो वा विजायते ।
अद्यश्वीना च वडवा आसन्नप्रसवा हि या ॥
केचिदत्र विजायते पदमनुवर्तयन्ति न ।
अद्यश्वीनं च मरणं प्रयोगोऽपि ततोऽभवत् ॥

आगवीनः । ५ । २ । १४

आगवीनः प्रयोगोऽयं खप्रत्यये कृते भवेत् ।
आङ्पूर्वाद् गोरयं स्यात् कर्मकरस्य बोधकः ॥
गोः प्रत्यर्पणपर्यन्तं यश्च कर्म करोति सः ।
आगवीनो यजमान आगोः ख ओर्गुणस्ततः ॥

अनुग्वत्वं गामी । ५ । २ । १५

अलङ्गामीति तात्पर्ये अनुगोः खश्च प्रत्ययः ।
अनुगवीनो गोपालो गोःपश्चाद् यश्च गच्छति ॥

अध्वनो यत्खौ । ५ । २ । १६

अध्वनो भवतो यत्खौ अध्वन्योऽध्वनीन इति ।
प्रकृतेः प्रकृतिभावो यति खे प्रत्यये परे ॥

अभ्यमित्राच्छ च । ५ । २ । १७

छप्रत्ययोऽभ्यमित्रात् स्याद् यत्खौ च भवतः पुनः ।
अभ्यमित्रीय इत्युक्त स्तथाऽभ्यमित्र्य उच्यते ॥
खप्रत्ययेऽभ्यमित्रीणो योऽमित्राभिमुखं गतः ।

गोष्ठात् खञ् भूतपूर्वे । ५ । २ । १८

भूतपूर्वेऽत्र गोष्ठात् खञ् गोष्ठीनो देश उच्यते ॥

अश्वस्यैकाहगमः । ५ । २ । १९

अश्वस्यैकाहगमे खः आश्वीयोऽध्वा प्रदर्शितः ।
एकाहेन गम्यमाने मार्गेऽयञ्च प्रयुज्यते ॥

शालीनकौपीने अधृष्टाकार्ययोः । ५ । २ । २०

शालीनमथ कौपीन मधृष्टाकार्ययोरिह ।
खप्रत्यये कृते रूपं सिद्ध्यत्यर्हति विग्रहे ॥
शालाप्रवेशमर्हति शालीनोऽधृष्ट उच्यते ।
कूपपतनमर्हति कौपीनं पापमुच्यते ॥

व्रातेन जीवति । ५ । २ । २१

व्रातेन जीवतीत्यर्थे व्रातात् खः प्रत्ययो भवेत् ।
व्रातीनस्तु शरीरस्य आयासेनैव जीवति ॥

साप्तपदीनं सख्यम् । ५ । २ । २२

सख्यं साप्तपदीनं स्यात् सप्तपदैरवाप्यते ।
पाणिग्रहणसम्बन्धो मैत्र्यं पुंसः स्त्रिया भवेत् ॥

हैयङ्गवीनं संज्ञायाम् । ५ । २ । २३

हैयङ्गवीनं संज्ञायां साध्यते खञि प्रत्यये ।
आदेशस्तु हियङ्गु वै ह्योगोहस्य जायते ॥
ह्योगोदोहस्तु गोदुग्धं तद्भवं नवनीतकम् ।
नवनीतं "मलायीति" भाषायां प्रथितं जने ॥

तस्य पाकमूले पील्वादि कर्णादिभ्यः कुणब्जाहचौ । ५ । ३ । २४

कुणब् भवति पील्वादेः कर्णादेर्जाहजिष्यते ।
पाके मूले च तस्येति विग्रहः क्रियतामिह ॥
पीलूनां पाक इत्यत्र पीलुकुणः पदं भवेत् ।
कर्णस्य मूलमित्यत्र कर्णजाहं प्रयुज्यते ॥

पक्षात्तिः । ५ । २ । २५

मूलेऽर्थे ति भवेत्पक्षात् मूलं पक्षस्य पक्षतिः ।
प्रतिपत्तिथिनामेदं पक्षस्य प्रथमं दिनम् ।

तेनवित्तश्चुञ्चुप्चणपौ । ५ । २ । २६

तेन वित्तोऽयमित्यर्थे चुञ्चुप्स्या च्चणबित्यपि ।
विद्यया वित्त इत्यर्थे विद्याचुञ्चु रयं जनः ।
विद्याचणोऽपि स एव विद्यायुक्तः सुधी जनः ॥

विनञ्भ्यां नानाञौ न सह । ५ । २ । २७

असहाये पृथग्भावे ना नाञौ प्रत्ययौ क्रमात् ।
विनञ्भ्यामितिशब्दाभ्यां विना नाना च सिद्ध्यतः ॥

वेः शालच्छङ्कटचौ । ५ । २ । २८

क्रियाविशिष्टवोर्थाद् वेश्शालच्छङ्कटावुभौ ।
विस्तृतार्थकविशब्दाद् विशालं स्याद् विशङ्कटम् ॥

संप्रोदश्च कटच् । ५ । २ । २९

संप्रोदश्च कटच् प्रोक्तं सङ्कटं प्रकटं भवेत् ।
उत्कटं विकटञ्चापि चकारेणात्र साध्यताम् ॥

अलावूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम् । वा

अलावूतिलशब्दाद्वै उमाभङ्गाद्द्वयादपि ।
रजस्यर्थे कटच् प्रोक्तं तस्योदाहरणं क्रमात् ॥

अलावूनां रजो विज्ञै रलावूकटमुच्यते ।
तिलकटमुमाकटं भङ्गाकटमिह स्मृतम् ॥

गोष्ठजादयः स्थानादिषु पशुनामभ्यः । वा

स्थानादिषु पशुनाम्नः प्रत्यया गोष्ठजादयः ।
गवां स्थानञ्च गोगोष्ठं यत्र गावो वसन्ति तत् ॥

संघाते कटच् । वा

अवीनामत्र सङ्घातो भवेदविकटः पुनः ।

विस्तारे पटच् । वा

विस्तारे पटजत्र स्यादविपटस्ततो भवेत् ॥

द्वित्वे गोयुगच् । वा

द्वित्वेऽर्थे गोयुगच् कार्यं द्वावुष्ट्रौ उष्ट्रगोयुगम् ।

षट्त्वे षड्गवच् । वा

षट्त्वेऽर्थे षड्गवच् कार्यमश्वषड्गवमिष्यते ।

स्नेहे तैलच् । वा

स्नेहे तैलच् प्रयोक्तव्यं तिलतैलं प्रयुज्यते ।
स्नेहस्तु सर्षपस्यात्र सर्षपतैलमुच्यते ।

भवने क्षेत्रे शाकटसाकिनौ । वा

तस्य तु भवने क्षेत्रे शाकटशाकिनावुभौ ।
इक्षूणां भवनं क्षेत्रमिक्षुशाकटमिष्यते ॥
इक्षूणां भवनं क्षेत्रमिक्षुशाकिनमित्यपि ।

अवात्कुटाराच्च । ५ । २ । ३०

अवशब्दात् कुटाराच्च कटजपि च जायते ।
अवाचीनोऽवकुटार स्तथैवावकुटः पदम् ॥

नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः । ५।२।३१

नासिकाया नतेऽर्थे स्यात् टीटञ्नाटज्भ्रटच्त्रयम् ।
नासिकाया नतं कार्यमवटीटमवभ्रटम् ।
अवनाटचमपि प्रोक्तमवटीटः पुमानयम् ॥
तद्योगान्नासिकाऽप्यत्र अवटीटा प्रयुज्यते ।

नेर्बिडज्बिरीसचौ । ५ । २ ३२

बिडज्बिरीसचौ प्रोक्तौ नेरुपसर्गसंज्ञकात् ।
निबिडं निबिरीसञ्च निबिडा नासिकाऽपि च ॥
नतायां नासिकायाञ्च एतद्द्वयं प्रयुज्यते ।
अस्यास्तु निबिडाः केशाः निबिडं वस्त्रमादि च ॥
उपमानात्प्रयुञ्जीत काशिकाया मतं स्मरेत् ।

इनच्पिटच्चिकचि च । ५ । २ । ३३

नासिकाया नते अर्थे इनच् पिटच् द्वयं भवेत् ।
क्रमेण चिक् चीतिस्यात् प्रकृतेरिति बुध्यताम् ॥

कप्रत्ययचिकादेशौ च वक्तव्यौ । वा

चिकिनं चिपिटं चिक्कं रूपत्रयं प्रयुज्यते ।
क्लिन्नस्य चिल् पिल्लश्चास्य चक्षुषी । वा
चिल् पिल्लादेश इत्युक्तो लस्तदन्ते विधीयते ।
क्लिन्ने स्तश्चक्षुषी यस्य चिल्लः पिल्लस्तु स जनः ॥

चुल् च । वा ।

चुल्लोऽपि स एव स्याच् चुल्लस्य च विधानतः ।
क्लिन्ने अस्य चक्षुषीति विग्रहः पूर्ववद् भवेत् ।
नासिकाया भवेच्चुल् वै लश्चात्र प्रत्ययः स्मृतः ॥

उपाधिभ्यां त्यकन्नासन्नारूढयोः । ५ । २ ३४

उपाधिभ्यां त्यकन् कार्यमासन्नारूढयोः क्रमात् ।
संज्ञायामिति पूर्वस्मादागच्छति स्मरेदिति ॥
उपत्यका गिरेः पार्श्वभागस्य नाम विश्रुतम् ।
पर्वतस्य च आसन्नं स्थलमत्रास्ति विग्रहः ।
अधित्यका गिरे रेव उपरिस्थलमुच्यते ॥

कर्मणि घटोऽच् । ५ । २ । ३५

घटते यो घटः सोऽत्र पचाद्यच्च विधीयते ।
सप्तम्यन्ताच्च कर्मणि पदादठच् प्रयुज्यते ॥
कर्मणि घटते योऽत्र स पुमान् कर्मठो भवेत् ।

तदस्य सञ्जातं तारकादिभ्य इतच् । ४ । ४ । ३६

तारकादेरितच् प्रोक्तं सञ्जातमिदमस्य च ।
सञ्जाता तारका अस्य तारकितं नभः स्मृतम् ॥
रोमाञ्चितं पुलकितं पुष्पितं फलितं पुनः ।
तदस्य खलु सञ्जातं विग्रहे साध्यतामिह ॥

प्रमाणे द्वयसज् दघ्नञ्मात्रचः । ५ । २ । ३७

प्रमाणे द्वयसज्दघ्नञ्मात्रचः प्रभवन्त्यमी ।
ऊरु प्रमाणमस्येति ऊरुद्वयसमुच्यते ।
ऊरुदघ्नं प्रयोगोऽपि स्यादूरुप्रमाणके ॥
अरुप्रमाण मुच्चार्य ऊरुमात्रं प्रयुज्यताम् ।

प्रमाणे लः । वा

प्रमाणे लुग् भवेत् क्वापि प्रत्ययस्य विशेषतः ।
शमो दिष्टि वितस्तिश्च प्रमाणेऽर्थे प्रयुज्यते ॥
शमः प्रमाणमस्येति शम एवाथवा शमः ।
दिष्टिः प्रमाणमस्येति दिष्टिरेवाथवा भवेत् ॥
प्रमाणमत्र बोधव्यं परिच्छेदकमेव हि ।
प्रत्ययाश्च त्रयोऽप्यत्र ऊर्ध्वमाने भवन्ति वै ॥

प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम। इति भाष्यम्
दण्डद्वयसमित्येवं क्षेत्रमादि न युज्यते।
प्रमाणेनात्र आयामपरिच्छेदकमिष्यते॥
इतिमते प्रयोगोऽयं प्रस्थमात्रं न युज्यते।

द्विगोर्नित्यम्। वा।

द्विगोर्नित्यं विधीयेत द्वयसजादिप्रत्ययः।
द्वौ समौ यस्य प्रमाणं द्विसमं वस्तु तद्भवेत्॥

प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज् वक्तव्यः। वा।

मात्रज् विधीयते तस्मात् सममात्रं प्रयुज्यते।
प्रस्थमात्रं पञ्चमात्रमित्यादि दर्शितं बहु॥

वत्वन्तात् स्वार्थे द्वयसञ्मात्रचौ बहुलम्। वा

वत्वन्ताद् द्वयसच् स्वार्थे मात्रजपि विधीयते।
तावदेवात्र च तावद्द्वयसं पदमिष्यते।
तावन्मात्रं प्रयुञ्जीत तावदेवहि वस्तुनि॥

पुरुषहस्तिभ्यामण् च। ५। २। ३८

अण्स्यात् पुरुषहस्तिभ्यां द्वयसञ्मात्रजित्यपि।
प्रमाणमस्य पुरुषः पौरुषं पुरुषद्वयम्।
हस्ती प्रमाणमस्येति हस्तिद्वयश्च हास्तिनम्॥

यत्तदेतेभ्यः परिमाणे वतुप्। ५। २। ३९

परिमाणे वतुप् यत्तदेतेभ्यो जायते खलु।
यत्परिमाणमस्येति यावान् तत्र प्रयुज्यते॥
तत्परिमाणं भवेद्यस्य तावान् स उच्यते बुधैः।
एतावत्परिमाणे स्यादेतावानिति बुध्यताम्॥

किमिदंभ्यां वो घः। ५। २। ४०

किमिदंभ्यां वतुप् कार्यं वस्य घः क्रियते पुनः।
इयादेशश्च घस्यात्र कियानियानिति भवेत्॥

किमिदं परिमाणं वै विग्रहोऽत्र प्रदर्श्यताम् ।
इदं किमोः क्रमादीश्की आदेशौ भवतः पुनः ॥

अत्रविशेषवस्तु—

इयानिति प्रयोगेऽत्र इदम इशिति भवेत् ।
यस्येति च कृते लोपे केवलं प्रत्ययस्थितिः ॥

तस्मादेववेदान्तिवैयाकरणयोर्व्यङ्ग्यविनोदकर्तृ निम्नपद्यं प्रटितमस्ति ।

उदितवति परस्मिन् प्रत्यये शास्त्रयोनौ ।
गतवति विलयञ्च प्राकृतेऽपि प्रपञ्चे ।
सपदि पदमुदीतं केवलं प्रत्ययो यत् ।
तदियमिति मिमीते को हृदा पण्डितोऽपि ॥

टि० वैयाकरणानामौपनिषदानाञ्च प्रक्रियामाश्रित्यद्व्यर्थोऽयं श्लोकः प्रवृत्तोऽस्ति ।

किमः संख्या परिमाणे डति च । ५ । २ । ४१

संख्यायाः परिमाणे तु किमोडतिर्वतुप् तथा ।
कति कियन्तः का संख्या परिमाणं येषाञ्च ते ॥

संख्याया अवयवे तयप् । ५ । २ । ४२

संख्याया अवयवेऽर्थे तयप् प्रत्यय इष्यते ।
पञ्च अवयवा अस्य दारु पञ्चतयं हि तत् ॥

द्वित्रिभ्यां तयस्यायज् वा । ५ । २ । ४३

द्वित्रिभ्यां कृतस्यात्र तयस्यायज् विकल्पतः ।
द्वे अवयवे यस्य स्तः द्वयं वा द्वितयञ्च तत् ॥
त्रयोऽत्रा वयवा यस्य तत्त्रयं त्रितयं भवेत् ।

उभादुदात्तो नित्यम् । ५ । २ । ४४

उभशब्दात् तयप् तस्य स्यादयजाद्युदात्तकः ।
उभाववयवावस्य तदुभयं प्रयुज्यते ॥

तदस्मिन्नधिकमिति दशान्ताड्डः । ५ । २ । ४५

एकादशास्मिन्नधिकाः　शतमेकादशं　च तत् ।
पञ्चदशाधिका अस्मिन् पञ्चदशं शतं स्मृतम् ॥
दशाधिकाः सहस्रेऽस्मिन् सहस्रं तद् दशाधिकम् ।

शतसहस्रयो रे वेष्यते । वा

शतसहस्रयोरेव　स्थले　इत्थं　प्रयुज्यते ।
एकादशाधिका　अस्यां　विंशताविह नैव डः ।

प्रकृति प्रत्ययार्थयोः समान जातीयत्वे एवेष्यते । वा

यत्र　समानजातित्वं　प्रकृतिप्रत्ययार्थयोः ।
तत्रैव प्रत्ययो डः स्यात् तस्मान्नाधः स्थले भवेत् ॥
एकादश माषाः यत्र सुवर्णशतेऽधिकाः स्मृताः ।
तत्र डप्रत्ययो नैव विधीयते बुधैः क्वचित् ॥

शदन्तविंशतेश्च । ५ । २ । ४६

शदन्तविंशते डः स्यादुक्तेऽर्थे तेन साध्यते ।
अस्मिन् त्रिंशदधिका वै त्रिंशं विंशं भवेत् पुनः ॥

संख्याया गुणस्य विमाने मयट् । ५ । २ । ४७

गुणस्य सूल्ये संख्याया मयट् प्रत्यय इष्यते ।
द्विमयमुदश्विदस्ति　यवानामित्युदाहृतम् ॥
यवानां यत्र द्वौ भागौ निमानमस्योदश्वितः ।
भागस्येति　विग्रहेण　स्पष्टार्थता　विधीयते ॥

तस्य पूरणे डट् । ५ । २ । ४८

पूरणे　तस्य　डट्प्रोक्त　मेकादशश्चतुर्दशः ।
एकादशानां पूरण मित्येवं विग्रहो भवेत् ॥

नान्तादसंख्यादे र्मयट् । ५ । २ । ४९

असंख्यादेश्च नान्तात् डटो मडागमः स्मृता ।
पञ्चानां पूरणो यत्र पञ्चमः कथ्यते च सः ।

षट्कति कतिपय चतुरां थुक् । ५ । २ । ५१

षट्कतिकतिपयानां चतुरो डटि थुग् भवेत् ।
षण्णाञ्च पूरणः षष्ठश्चतुर्थः कतिथः पुनः ॥
पूरणः कतिपयानां कतिपयथ उच्यते ।
कतिपयस्य शब्दस्यासंख्यात्वेऽपि च तद् भवेत् ।
ज्ञापकमिदमेवास्ति पाठकैस्तद्विचार्यताम् ॥

चतुरश्छयतावाद्यक्षरलोपश्च । वा

छयतोः परयोरादिवर्णलुप् चतुरः सदा ।
तुरीयस्तुर्य्य आख्यातश्चतुर्णां पूरणो यदा ॥

बहुपूगगसङ्घस्य तिथुक् । ५ । २ । ५२

बहुपूगगणसङ्घस्य डतिचप्रत्यये तिथुक् ।
बहूनां पूरणो यस्तु बहुतिथः स कथ्यते ॥

वतोरिथुक् । ५ । २ । ५३

वतोरिथुक् डटि परे यावतिथः पदं ततः ।

द्वेस्तीयः । ५ । २ । ५४

द्वेस्तीयः प्रत्ययः प्रोक्तो द्वितीयः पूरणो द्वयोः ।

त्रेस्तीयः । ५ । २ । ५५

त्रेस्तीयः सम्प्रसारणं तृतीयस्तेन जायते ।

विंशत्यादिभ्यस्तमडन्यतरस्याम् । ५ । २ । ५६

विंशत्यादे र्विकल्पेन डटः स्यात्तमडागमः ।
विंशतितमश्च विंशः प्रयोगः पूरणार्थके ॥
एकविंशतितम एकविंशोऽपि पक्षतो भवेत् ।
एकत्रिंशत्तमश्चैवमेकत्रिंशोऽपि जायते ॥

नित्यंशतादिमासार्धमाससंवत्सरात् तमट् । ५।२ ५७

शतस्य पूरणं वस्तु शततमं प्रयुज्यते ।
एकशततमः प्रोक्तो मासादेरतएव डट् ॥
मासेन पूरणेऽर्थे च मासतमः प्रयुज्यते ।

षष्ट्यादेश्चासंख्यादेः । ५ । २ । ५८

असंख्यादेश्च संख्याया डटस्तमड् विकल्पतः ।
षष्टितमोऽशीतितमो नवतितम उच्यताम् ॥
संख्यादेस्तु विकल्पेन एकषष्ठोऽपि युज्यते ।

मतौ छः सूक्तसाम्नोः । ५ । २ ५९

छप्रत्ययस्तु मत्वर्थे सूक्तसाम्नोश्च वाच्ययोः ।
अच्छावाकीयमिदं सूक्तं वारतन्तीयं सामनि ॥

अध्यायानुवाकयो र्लुक् । ५ । २ । ६०

अध्यायस्यानुवाकस्य छस्य लुग् वा विधीयते ।
गर्दभाण्डस्तथा गर्दभाण्डीय उच्यते द्वयम् ॥
ज्ञापकादतएवात्र छप्रत्ययोऽत्र जायते ।

विमुक्तादिभ्योऽण् । ५ । २ । ६१

अण् प्रत्ययो विमुक्तादे र्मत्वर्थे च विधीयते ।
अध्यायेअनुवाकेऽर्थे प्रत्ययोऽयं प्रवर्तते ॥
अस्मिन् शब्दो विमुक्तोऽस्ति वैमुक्तऽ स प्रयुज्यते ।
देवासुराश्च सन्त्यत्र दैवासुरा उदाहृताः ॥

गोपदादिभ्यो वुन् । ५ । २ । ६२

मत्वर्थे वुन् गोपदादे रध्यायार्थेऽनुवाकके ।
अस्ति गोपदमित्यत्र गोपदकः प्रयुज्यते ॥
इषेत्वकोऽनुवाकः स्याद् वुनोवोरकइष्यते ।

तत्र कुशलः पथः । ५ । २ । ६३

तत्र कुशल इत्यर्थे पथो वुन् पथिकस्ततः ।

आकर्षादिभ्यः कन् । ५ । २ । ६४

आकर्षादेश्च कुशले कन्प्रत्ययोऽत्र जायते ।
आकर्षकस्तु आकर्षे कुशलोऽस्मेति बुध्यताम् ॥
आकर्ष आकषो वाऽत्र ज्ञायतां निकषोपलः ।
अशनिकश्शकुनिकः त्सरुकादिश्च साध्यताम् ॥

धनहिरण्यात् कामे । ५ । २ । ६५

कामे धनहिरण्यात् कन् धनको धनकामकः ।
हिरण्यको हिरण्यस्य कामनावान् जनो भवेत् ॥

स्वाङ्गेभ्यः प्रसिते । ५ । २ । ६६

स्वाङ्गेभ्यः प्रसिते कन् स्यात् प्रसितस्तत्परो जनः ।
केशेषु प्रसितो यस्तु स भवेत् केशको जनः ॥

उदराट्ठगाद्यूने । ५ । २ । ६७

उदराठ् ठग् विधीयेत आद्यूनेऽतिबुभुक्षिते ।
उदरे प्रसितो लोक औदरिकः क्षुधार्दितः ।

सस्येन परिजातः । ५ । २ । ६८

परिजातस्तु संवद्धस्तस्मिन् सस्याच्च कन् भवेत् ।
सस्येन परिजातस्तु सस्यकः साधुरुच्यते ॥

अंशं हारी । ५ । २ । ६९

अंशं हारीति तात्पर्ये कन् प्रत्ययो विधीयते ।
दायाद अंशकः प्रोक्तो विभागमर्हतीह यः ॥

तन्त्रादचिरापहृते । ५ । २ । ७०

अचिरापहृते तन्त्रात् कन् प्रत्ययो विधीयते ।
तन्त्रकः पट आख्यातो नूतनो योऽधुना कृतः ॥

ब्राह्मणकोष्णिके संज्ञायाम् । ५ । २ । ७१

ब्राह्मणकस्तु संज्ञायां विशेषो देश उच्यते ।
आयुधेनैव जीवन्ति ब्राह्मणा यत्र ते स्मृताः ॥

अल्पमन्नञ्च यस्यां सा यवागूरुण्णिका स्मृता ।
उण्णादेशो भवेदन्नशब्दस्यात्र निपातनात् ॥

शीतोष्णाभ्यां कारिणि । ५ । २ । ७२

शीतोष्णाभ्यां प्रत्ययः कन् कारिणि जायते पुनः ।
शीतं करोति शीतकः पुरुषोऽलस उच्यते ॥
उष्णकः शीघ्रकारी स्याच्छीघ्रं करोति विग्रहे ।

अधिकम् । ५ । २ । ७३

अध्यारूढपदात् कन्स्यादारूढस्य च लोपतः ।
अधिकमिति रूपं स्यात् सोऽधिकस्तत उच्यताम् ॥

अनुकाभिकाभीकः कमिता । ५ । २ । ७४

अनुकोऽभीक आख्यातः कामयते च विग्रहे ।

स्पष्टीकरणम्—

अनुकामयते यस्तु स भवेदनुको जनः ।
अभिकामयते यश्च सोऽभीकोऽभिक उच्यते ॥

पार्श्वेनान्विच्छति । ५ । २ । ७५

पार्श्वमनृजुरुपायस्तेनान्विच्छति पार्श्वकः ।
पार्श्वात् कन् प्रत्ययं कृत्वा साध्यतेऽयं सहायके ॥

अयः शूलदण्डाजिनाभ्यां ठक्ठञौ । ५ । २ । ७६

प्रत्ययष्ठगयःशूलाद् दण्डाजिनात्तु ठञ् भवेत् ।
अन्विच्छति अयःशूलमायःशूलिक उच्यते ।
साहसी जन आख्यात श्चौरो वा लुण्टकादिकः ॥
दण्डाजिनं भवेद् दम्भस्तेनान्विच्छति विग्रहे ।
दण्डाजिनिक आख्यातो दण्डेन दण्डकारके ॥

तावतिथं ग्रहणमिति लुग्वा । ५ । २ । ७७

तावतां ग्रहणं वस्तु तावतिथं प्रसिद्ध्यति ।
तावतिथस्य ग्रहणे कन् लुग् वा स्यात् पूरणस्य च ॥

श्लो० सि० पू० ३३

द्वितीयकं द्विकं वा स्याद् ग्रहणं तस्य विग्रहे।
द्वितीयेन च रूपेण ग्रहणं स्पष्टताऽस्य वै ॥

तावतिथेन गृह्णातीति कन् वक्तव्यो नित्यश्च लुक्। वा

तावतिथेन गृह्णाति विग्रहे कन् विधीयते।
नित्यं लुक्पूरणस्यात्र षट्कस्तथाच पञ्चकः ॥
षष्टन पञ्चमेनात्र गृह्णाति विग्रहो भवेत्।

स एषां ग्रामणीः। ५। २। ७८

स एषां ग्रामणीरस्ति विग्रहे कन् विधीयते।
येषां मुख्यो देवदत्तः सन्ति ते देवदत्तकाः ॥
त्वत्का मत्काश्च त्वमहं मुख्यो येषां भवन्ति ते।

शृङ्खलमस्य बन्धनं करभे। ५। २। ७९

शृङ्खलमस्य बन्धनं करभेऽर्थे च कन् भवेत्।
शृङ्खलकस्तु करभः कथ्यते उष्ट्रपोतकः ॥

उत्क उन्मनाः। ५। २। ८०

उन्मना जन उत्कः स्यादुदः कन् प्रत्ययो भवेत्।

कालप्रयोजनाद्रोगे। ५। २। ८१

कालार्थकात् प्रयोजनाद्रोगेऽर्थे कन् विधीयते।
द्वितीयको ज्वरः स्याद् यो द्वितीयेऽहनि भवेत्।
विषपुष्पैस्तु जनितो विषपुच्छक उच्यते ॥
अस्यास्ति कार्यमुष्णमुष्णकः स निगद्यते।
रोगभिन्नेऽत्र रूपं स्याद् द्वितीयो दिवसोऽस्य वै ॥

तदस्मिन्नन्नं प्राये संज्ञायाम्। ५। २। ८२

प्रथमान्तात्तदस्मिन् कन् यदन्नविषयं भवेत्।
गुडापूपा अन्नमस्यां पौर्णमासी च सा तिथिः ॥
स्याद् गुडापूपिका रूपं कनि च प्रत्यये कृते।

वटकेभ्य इनिर्वाच्यः। वा०

वटकमन्नमस्यां सा तिथिः कापि वटकिनी।

कुल्माषादञ् । ५ । २ । ८३

**कुल्माषादञ् तदस्मिन् स्यात् कौल्माषीति स्त्रियामञि ।**
**कुल्माषाः सन्ति प्रायेण अन्नमस्याश्च विग्रहः ॥**

श्रोत्रियश्छन्दोऽधीते । ५ । २ ८४

**छन्दोऽधीते विग्रहे स्यात् श्रोत्रियश्छान्दसोऽपि च**
**श्रोत्रादेशश्छन्दसः स्याद् घप्रत्ययेन श्रोत्रियः ॥**

श्राद्धमनेन भुक्तमिनिठनौ । ५ । २ । ८५

**भुक्तं श्राद्धमनेनात्र विग्रहे स्त इनिठनौ ।**
**इनौ कृते भवेच्छ्राद्धी ठनि श्राद्धिक इष्यते ॥**

पूर्वादिनिः । ५ । २ । ८६

**पूर्वं कृतमनेनेति पूर्वी स्यादिनिप्रत्यये ।**

सपूर्वाच्च । ५ । २ । ८७

**इनिः प्रत्यय इष्येत यत्किञ्चित्पूर्वकात् पदात् ।**
**कृतं पूर्वमनेनेति कृतपूर्वः समासतः ।**
**इनिस्ततोभवेद्रूपं कृतपूर्वीति बुध्यताम् ॥**

इष्टादिभ्यश्च । ५ । २ । ८८

**इष्टादिभ्य इनिर्वाच्य इष्टी इष्टमनेन सः ।**
**अधीती रूपमत्र स्यादधीतमनेन विग्रहे ॥**

छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ।५।२।८९

**छन्दसि परिपन्थी स्यात् परिपरी निपातनात् ।**
**पर्यवस्थातरि वाच्ये किन्तु लोके न युज्यते ।**

अनुपद्यन्वेष्टा । ५ । २ । ९०

**अनुपदी तु अन्वेष्टा गवामित्यर्थबोधने ।**
**अनुपदादिनिर्वाच्यः साधनेऽस्य पेदस्य च ॥**

साक्षाद् द्रष्टरि संज्ञायाम् । ५ । २ । ९१

**साक्षाद् द्रष्टरि संज्ञायां साक्षी स्यादिनिप्रत्यये ।**

क्षेत्रियच् परक्षेत्रे चिकित्स्यः । ५ । २ । ९२

परक्षेत्रे चिकित्स्यश्चेत् क्षेत्रियस्तत्र कथ्यते ।
अप्रतीकार्यरोगेऽर्थे प्रयोगोऽयं विधीयते ॥

इन्द्रियमिन्द्रलिङ्ग मिन्द्रदृष्टमिन्द्रसृष्टमिन्द्र-
जुष्टमिन्द्रदत्तमिति वा । ५ । २ । ९३

इन्द्रलिङ्ग मिन्द्रदृष्टं सृष्टं जुष्टं दत्तमिति ।
विग्रहे इन्द्रियं रूपमिन्द्राद् घप्रत्यये कृते ॥
इन्द्र आत्मा प्रसिद्धोऽस्ति तल्लिङ्गमिन्द्रियं भवेत् ।
इन्द्रेण दुर्जयं तस्मादिन्द्रियं बलवद्बहु ॥

तदस्यास्त्यस्मिन्निति मतुप् । ५ । २ । ९४

तदस्ति अस्य अस्मिन् वा विग्रहे मतुबिष्यते ।
गावः सन्त्यस्य अस्मिन् वा गोमान् तत्र प्रयुज्यते ॥

अत्र वार्तिकम्—

भूमनिन्दा प्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ वा

भूमा बहुत्वमाख्यातं गोमान् वा यवमानिह ।
ककुदावर्त्तिनी कन्या निन्दायामत्र प्रत्ययः ॥
रूपवान् स्यात्प्रशंसायां नित्ययोगे च क्षीरिणः । (वृक्षाः)
उदरणी कन्यकेय मिनिरत्रातिशायने ॥
दण्डीत्यादि प्रयोगे च संसर्गे इनिरिष्यते ।

रसादिभ्यश्च । ५ २ । ९५

मतुबेव रसादिभ्यो रसवान् रूपवांस्तथा ।
वर्णवान् गन्धवानेवं स्पर्शवान् शब्दवानिति ॥
स्नेहवानपि जायेत मतुपा गुणवाचिना ।

गणसूत्रं गुणादत्र रसादीनां विशषणम् ॥ ग०

एकाचः । ग०

एकाचोऽपि मतुप् कार्यं स्ववानिति प्रयुज्यते ।

तसौ मत्वर्थे । १ । ४ । १९

तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे ।
विदुष्मानत्र तस्माद्वै वसोश्च सम्प्रसारणम् ॥

गुणवचनेभ्यो मतुपो लुगिष्टः । वा

मतुपो लुग् विधीयते गुणवाचिपरस्य च ।
शुक्लः कृष्णो गुणो यस्य शुक्लः कृष्णः पटः स च ॥

मादुपधायाश्च मतो र्वोऽयवादिभ्यः ।८।२।९

मतुपो मस्य वोऽत्र स्यादवर्णान्ताच्च मोपधात् ।
यवादिगणशब्देभ्यः परस्य मस्य वो नहि ॥
ज्ञानवानादि शब्देषु आत्परत्वेन मस्य वः ।
किम्वानादि प्रयोगेषु मोपधत्वाच्च मस्य वः ।
येन नाव्यधानेऽपि तद्व्यवधानतोऽपि सः ॥
कार्यं भवति तस्माच्च लक्ष्मीवानत्र मस्य वः ।
यशस्वान् स्यात् तथा भास्वान् रूपं मस्य च वो यदा ॥
यवमान् भूमिमानादौ यवादित्वान्न मस्य वः ।

झयः । ८ । २ । १०

झयन्ताच्च परस्यात्र मतोर्मस्य च वो भवेत् ।
अपदान्तान्न जश्त्वं स्याद् विद्युत्वान् तत उच्यते ॥

संज्ञायाम् । ८ । २ । ११

मतोर्मस्य वकारः स्यात् संज्ञाऽर्थो यदि जायते ।
अहीवती मुनीवती शरादीनाञ्च दीर्घतः ॥

आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चण्यवती ।८।२।१२

संज्ञायामत्र आसन्दीपदादयो निपातिताः ।
आसन्दीवानयं ग्राम आसनवानयं जनः ।
अष्ठीवानृषि संज्ञाया मस्थिवानृषि शिन्नके ॥

राजन्यर्थेऽस्ति चक्रीवान् चक्रवान् चक्रधारके ।
कक्ष्या शब्दान्मतुप् तत्र सम्प्रसारणमिष्यते ।
कक्षीवानृषि रस्त्येकः कक्ष्यावानन्य उच्यते ॥
रुमण्वात् पर्वतः ख्यातो लवणस्य रुमण्णिह ।
चर्मण्वती नदी ख्याता चर्मणो नस्य णो भवेत् ॥
निपातनाद्भवेदेषां षण्णां सिद्धिरनेन च ।
संज्ञायामेव सर्वत्र प्रयोगः क्रियते बुधैः ॥
चर्मवती लवणवान् संज्ञाभिन्ने प्रयुज्यते ।

उदन्वानुदधौ च । ८ । २ । १३

उदन्वानुदधौ ख्यात ऋषिरेकश्च कथ्यते ।
उदकस्य उदन्भावः संज्ञायामिह जायते ॥

राजन्वान् सौराज्ये । ८ । २ । १४

राजन्वानस्ति सौराज्ये राजन्वती च भूरिह ।

प्राणिस्थादातो लजन्यतरस्याम् । ५ । २ । ९६

प्राणिस्थादथ आकारात् परो लच् प्रत्ययोऽत्र वा ।
चूडालः खलु चूडावान् प्रयोगद्वय मुच्यते ॥
शिखावान् दीप इत्यत्र प्राणिस्थत्वं न विद्यते ।
हस्तवानिह नाऽदन्त स्तस्मान्न जायतेऽत्र लच् ॥
प्राण्यङ्गादेव नियमान् मेधावान् तत उच्यते ।
न मेधालः प्रयोगः स्यात् प्रयुञ्जीत विचार्य वै ॥

अत्र शङ्का—

प्रत्ययस्य स्वरेणैव अन्तोदात्तश्च सिद्ध्यति ।
लच् प्रत्यये चकारश्च किमर्थं क्रियते वद ? । प्र०
स्वरितो वाऽनुदात्ते पदादाविति सूत्रतः ।
चूडालोऽस्तीति प्रयोगे स्वरितबाधनाय चः ॥ उ० ।

सिध्मादिभ्यश्च । ५ । २ ।९७

सिध्मादिभ्यश्च लज् वा स्यात् सिध्मलः सिध्मवान् ततः ।

गडुलो मणिलश्चैवं पांसुलो हनुलस्तथा।
लच् प्रत्ययं विधायैव साध्यते रोगवाचकात् ॥

वातदन्त बल ललाटानामूघ् च। ग० सू०

वातदन्तादिशब्देभ्य ऊङ् भवेल्लचच प्रत्ययः।
वातूलादि प्रयोगोऽत्र लजूङागमतो भवेत् ॥

वत्सांसाभ्यां कामवले । ५ । २ । ९८

आभ्यां लेज्वा यथासंख्यं कामवति बलवति।
वत्सलः अंसलो रूपं वत्सादंसाल्लचि कृते ॥

फेनादिलच्च । ५ । २ । ९९

फेनादिलच् प्रयोक्तव्यो लच् मतुप् च भवेदिह।
फेनिलः फेनलश्चैवं फेनवानिति च भवेत् ॥

लोमादिपामादिपिच्छादिभ्यः शनेलचः ।५।२।१००

लोमादेरथ पामादेः पिच्छादेश्च शनेलचः।
क्रमेण प्रभवन्त्येते तद्धिताः प्रत्ययास्त्रयः ॥
लोमशो लोमवानस्ति रोमशो रोमवांस्तथा।
पामनः पिच्छिल श्चैवमुरसिलश्च सिद्धचति ॥

अङ्गात्कल्याणे। ग० सू०

अङ्गाद् भवति कल्याणे नः स्त्रियामङ्गना पदम्।

लक्ष्म्या अच्च । ग० सू०

लक्ष्म्या नः प्रत्ययः कार्योऽन्त्यस्याल्लक्ष्मणोऽत्र णः।

विष्वगित्युत्तारपदलोपश्चाकृतसन्धेः। वा०

विष्वक् शब्दाच्च विषुणः न प्रत्ययेन सिद्धचति।
उत्तर पदस्य लोपोऽपि विधीयतेऽस्य साधने ॥

प्रज्ञाश्रद्धार्चाभ्यो णः । ५ । २ । १०१

प्रज्ञा श्रद्धा तथा अर्चा आभ्यो णः प्रत्ययो भवेत्।
प्राज्ञः श्राद्ध स्तथा आर्चों मत्वर्थे णे कृते भवेत् ॥

प्राज्ञो व्याकरणं प्राज्ञा प्रयोगः क्रियते बुधैः ।

वृत्तेश्च । वा०

वृत्तिरस्य च अस्मिन् वा वार्त्तः स कथ्यते बुधैः ।
विच्छिन्नप्रतिविधानं वृत्तिरत्रेति बुध्यताम् ॥

तपः सहस्राभ्यां विनीनी । ५ । २ । १०२

तपसो विन् सहस्रादिन् प्रत्ययो मतुवर्थकः ।
स तपस्वी सहस्री वा यथायोग्यं प्रयुज्यते ॥

अण् च । ५ । २ । १०३

अणपि स्यादुभाभ्यां वै साहस्रस्तापसोऽपि च ।
उत्तरार्थं भवेद्योग विभागस्य प्रयोजनम् ।

ज्योत्स्नादिभ्य उपसंख्यानम् । वा

ज्योत्सादे रुपसंख्यानमण्प्रत्ययस्य दृश्यते ।
ज्यौत्स्नस्तथाच तामिस्रः पक्षयोः शुक्ल कृष्णयोः॥
ज्योत्स्नाः सन्ति इत्यस्मिन् पक्षे विग्रह उच्यते ।
तमिस्रारात्रयः सन्ति यस्मिन् तामिस्र उच्यते ।

सिकताशर्कराभ्याञ्च । ५ । २ । १०४

सिकता शर्कराभ्यामण् मत्वर्थे च विधीयते ।
सैकतोऽयं घटो भिन्नः शार्करो नहि भिद्यते ॥

देशे लुबिलचौ च । ५ । २ । १०५

देशे लुबिलचौ स्याता मण् मतुप् चापि जायते ।
देशेऽस्मिन् सिकताः सन्ति सिकताः सिकतिलस्ततः ॥
सैकतः सिकतावांश्च सिद्धचेद्रूपचतुष्टयम् ।
शर्कराः सन्ति इत्यस्मिन् विग्रहे लुपि शर्कराः ॥
रूपं शर्करिलः पश्चाच्छार्करोऽणि कृते भवेत् ।
शर्करावानिदं रूपं मतुपि प्रत्यये कृते ॥

दन्त उन्नत उरच् । ५ । २ । १०६

दन्तादुरच् प्रत्ययः स्यादुन्नते मतुबथकः ।
उन्नताः सन्ति दन्तास्ते दन्तुरा मानवा बुधाः ॥

ऊष सुषि मुष्कमधो रः । ५ । २ । १०७

सुषि मुष्क मधुभ्यो रः प्रत्यय ऊषतोऽपि रः ।
सुषिरश्छिद्रवान् कुम्भो मुष्करो बृहदण्डवान् ॥
मधुरो मधुमानस्ति ऊषरः क्षेत्र मुच्यते ।
यत्र धान्यादिकं नैव जायते सच ऊषरः ॥

र प्रकरणे ख मुख कुञ्जेभ्य उपसंख्यानम् । वा०

ख मुखकुञ्चशब्देभ्यो मतुबर्थेऽत्र रो भवेत् ।
खरो गर्दभ आख्यातो वाचालो मुखरः स्मृतः ॥
कुञ्जरस्तु गजः प्रोक्तः कुञ्जो हस्तिहनुः पुनः ।

नगपांसु पाण्डुभ्यश्च । वा०

नगात् पांसोस्तथापाण्डोः संज्ञायां रश्च प्रत्ययः ।
नगरं पांसुरश्चैवं पाण्डुरः शुक्लवाचकः ॥

कच्छ्वा ह्रस्वत्वञ्च ।

कच्छ्वा रः प्रत्ययो ह्रस्वः कच्छुरो रोगवान् त्वचि ।

द्युद्रुभ्यां मः । ५ । २ । १०८

द्युमो द्रुमश्च द्युद्रुभ्यां स्वार्थे म प्रत्यये कृते ॥

केशाद्वोऽन्यतरस्याम् । ५ । २ । १०९

केशादन्यतरस्यां वः केशवः केशवानपि ।
केशिकः स्यात्तथा केशी ठनिनौ प्रत्ययौ यदा ॥

अन्येभ्योऽपि दृश्यते । वा ।

अन्येभ्योऽपि भवेद्वोऽत्र मणिवः स्याद्धिरण्यवः ।
मणिवो नागभेदेऽस्ति निधिरस्ति हिरण्यवः ॥

अर्णसो लोपश्च । वा०

अर्णव इति मत्वर्थे व प्रत्यये सलोपतः ।

गाण्डचजगात्संज्ञायाम् । ५ । २ । ११०

गाण्डचजगात्तु संज्ञायां वः प्रत्ययो विधयीते ।
गाण्डीवमर्जुनधनुः पिनाकोऽजगवं स्मृतम् ।

काण्डाण्डादीरन्नीरचौ । ५ । २ । १११

काण्डादण्डात् क्रमादीरन् ईरजिति च जायते ।
काण्डीरः साध्यते तस्मादाण्डीरश्च ततो भवेत् ॥

रजः कृष्यासुति परिषदो वलच् । ५ । २ । ११२

एभ्यो वलज् विधीयेत तद्वतो मतुवर्थकः ।
रजस्वला भवेन्नारी कृषीवलस्तु कर्षकः ॥
सुराकर्तरि प्रख्यात आसुतिवल एष वै ।
परिषद्वल इत्येवं पर्षद्वलमपि भवेत् ॥

अन्येभ्योऽपि दृश्यते । वा०

अन्येभ्योऽपि वलच् प्रोक्तस्तस्माद् भ्रातृवलो भवेत् ।
पुत्रवलः शत्रुवलः प्रयोगोऽपि प्रदर्शितः ॥

दन्तशिखात् संज्ञायाम् । ५ । २ । ११३

दन्त शिखाच्च संज्ञायां वलच् प्रत्यय इष्यते ।
हस्ती दन्तावलः प्रोक्तो मयूरश्च शिखावलः ॥
दन्तावलो भवेद्दीर्घात् संज्ञायाञ्च निपातनात् ।

ज्योत्स्ना तमिस्रा शृङ्गिणोर्जस्विन्नूर्जस्वलगोमिम्
मलित मलीमसाः । ५ । ११४

मत्वर्थे च निपात्यन्ते ज्योत्स्नादयो विशेषतः ।
ज्योत्स्ना पदं तमिस्रा च शृङ्गादिनश्च शृङ्गिणः ।
ऊर्ज्वस्वी मलिनो गोमी मलीमसो निपातनात् ॥

स्पष्टीकरणम्—

ज्योतिरस्ति अस्यां सा ज्योत्स्ना; उपधालोपोनश्च प्रत्ययः ।
तमोऽस्त्यस्यां सा तमिस्रात्र तमस उपधाया इत्वं रश्च

प्रत्ययः स्त्रीत्वं लोकात् शृङ्गादिनच् शृङ्गिणः ।
ऊर्जसो वलच् सुगागमः मलादिनच् मलिनः ।
गोशब्दान्मिनिः मलादीयसश्च ।

अत इनिठनौ । ५ । २ । ११५

अदन्तादिनिरिष्येत ठन् प्रत्ययोऽपि जायते ।
दण्डोऽस्ति यस्य सन्यासी दण्डी भवति दण्डिकः ॥

अत्रकाशिका—

एकाक्षरात्कृतोजातेःसत्वम्यात्वामिनिठनौ नहि ।
स्ववान् कारकवानेवं व्याघ्रवान् दण्डवद गृहम् ॥
एतादृशप्रयोगेषु इन्ठनौ भवतो नहि ॥

व्रीह्यादिभ्यश्च । ५ । २ । ११६

व्रीह्यादिगणशब्देभ्य इन्ठनौ कथितावुभौ ।
दुष्काले व्रीहिको व्रीही जनो न दृश्यतेऽधिकः ॥

शिखामाला संज्ञादिभ्य इनिः । वा

शिखाया अथ मालायाः संज्ञाया इनिरिष्यते ।
शिखी माली तथा संज्ञी प्रयोगः कथितास्ततः ॥

यव खदादिभ्य इकः । वा

इको यवखदादिभ्यः खदिको यविको यवी ।

तुन्दादिभ्य इलच्च । ५ । २ । ११७

तुन्दादिभ्य इलच् प्रोक्तो मतुबिनिठनोऽपि च ।
तुन्दिल स्तुन्दवान् तुन्दी तुन्दिकोऽपि प्रयुज्यते ॥

स्वाङ्गाद्विवृद्धौ । वा० सू०

विवृद्धचुपाधिकात् स्वाङ्ग वाचिन इलजादयः ।
कर्णिलः कर्णिकः कर्णी कर्णवानपि कथ्यताम् ॥

विवृद्धौ यस्य च कर्णौ स एव प्रतिपाद्यते।

एकगोपूर्वाट्ठञ् नित्यम्। ५। २। ११८

ठञ् भवेदेकगोपूर्वा दैकशतिक उच्यते।
ऐकसहस्त्रिकश्चैवं गौशतिको गौसहस्त्रिकः॥

शत सहस्रान्ताच्च निष्कात्। ५। २। ११९

निष्काच्छत सहस्रान्तान् मत्वर्थे ठञ् विधीयते।
प्रयोगो नैष्कशतिकस्तथा नैष्कसहस्त्रिकः॥

रूपादाहत प्रशंसयो र्यप्। ५। २। १२०

आहते च प्रशंसायां रूपाद् यप् प्रत्ययो भवेत्।
आहतं रूप मस्यास्ति रूप्यः कार्षापणः स्मृतः॥
प्रशस्तं रूपमस्यास्ति रूप्यो गौरपि कथ्यते।

अन्येभ्योऽपि दृश्यते। वा

मत्वर्थे चान्यशब्देभ्यो यप् प्रत्ययश्च जायते।
हिम्यास्तु पर्वताः ख्याता भूम्नि यब् विहित इह।
गुण्यास्ते ब्राह्मणाः प्रोक्ता गुणिनोऽपि जनाः स्मृताः।

अस्माया मेधा स्रजो विनिः। ५। २। १२१

विनि रसन्तशब्दाद्वा माया मेधा स्रजोऽपि वा।
यशस्वी स्याद् यशस्वांश्च मायावीवानपिभवेत्॥
मेधावी स्याच्च मेधावान् स्रग्वी स्रग्वानपि भवेत्।
व्रीह्यादौ पाठसत्त्वेन मायी मायिक इत्यपि॥

आमयस्योप संख्यानं दीर्घश्च। वा

आमयावी भवेद्रोगी दीर्घोऽत्र विनिप्रत्यये।

शृङ्गवृन्दाभ्यामारकन्। वा

आरकन् प्रत्ययः शृङ्गारत्तस्माच्छृङ्गारकोगिरिः।
वन्दारकः प्रयोगस्तु-देवतायां प्रयुज्यते॥

फलबर्हाभ्यामिनच् । वा

मत्वर्थे फलबर्हाभ्या मिनज् बर्ही फलीति च ।

हृदयाच्चालुरन्यतरस्याम् । वा

हृदयाच्च भवेदालुश्चादिष्ठन् मतुबत्र च ।
हृदयालुश्च हृदयी हृदयिको हृदयवान् ।।

शीतोष्णतृप्रेभ्यस्तदसहने । वा

शीतोष्णतृप्रशब्देभ्य आलुरसहने भवेत् ।
शीतमुष्णं न सहते शीतालु रुष्णालुरिति ।।
तृप्रो दुःखं पुरोडाशस्तृप्रालुः सहते न तत् ।

हिमाच्चेलुः । वा

हिमाच्चेलु रसहने हिमेलु र्हिमभीरुकः ।

बलादूलः । वा

बलादूलो बलूलः स्यात् बलं न सहते च स ।।

वातात्समूहे च । वा

समूहेऽसहने वातादूलश्च प्रत्ययो भवेत् ।
वातव्राते च वातूलो वातं न सहतेऽथवा ।।

तप् पर्वमरुद्भ्याम् । वा

पर्वणोमरुतस्तप्स्यात् मरुत्तः पर्वतस्ततः ।

उर्णाया युस् । ५ । २ । १२३

उर्णाया युस् पदत्वञ्च उर्णायुश्छन्दसि स्मृतः ।

वाचो ग्मिनिः । ५ । २ । १२४

वाचो ग्मिनि र्भवेदत्र तमबर्थे विशेषतः ।
वाग्मी सुन्दरवक्ता स्याद् बहु वक्ति सुशोभनम् ।।

आलजाटचौ बहुभाषिणि । ५ । २ । १२५

आलजाटज् द्वयं प्रोक्तं कुत्सिते बहुभाषिणि।
वाचालः खलु वःचाटः कुत्सितो बहुभाषकः।

स्वामिन्नैश्वर्यें। ५। २। १२३

ऐश्वर्यवाचकादत्र स्वशब्दादामिनज् भवेत्।
स्वामो पतिर्भवेत् स्त्रीणां संन्यासी जनपालकः॥

अर्श आदिभ्योऽच्। ५। २। १२७

अच् प्रत्ययो भवेदर्श आदिभ्यो मतुबर्थकः।
अर्शांसि यस्य विद्यन्ते स भवेदर्शसो जनः॥
अस्याकृतिगत्वेन प्रयोगोऽन्योऽपि साध्यते।

द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः। ५। २। १२८

द्वन्द्वात्तथोपतापाद् गर्ह्यात् प्राणिस्थादिनिः।
कटकवलयनीयं शङ्खनूपुरणी च सा॥
कुष्ठी तथा किलासी च रोगविशेष वाचकात्।
गर्ह्यात्तु ककुदावर्त्ती तथैव काकतालुकी॥
तत्तच्छब्दात्तत्तदर्थे इनिरेतेषु जायते।
धटोऽयं पुष्पफलवान् प्राणिस्थत्वमिहास्ति न॥

प्राण्यङ्गान्न। ग०

प्राण्यङ्गान्नेनिरिष्येत पाणिपादवती ततः।
अतइत्येव चित्रकललाटिकावती ततः॥

वातातीसाराभ्यां कुक् च। ५। २। १२९

इनिः कुगागमश्चापि वातातीसारशब्दतः।
वातकी स्यात् तथैवातीसारकी रुग्णमानवः॥

रोगे चायमिष्यते।

रोगे एवायमिष्येत गुहा वातवती ततः।

पिशाचाच्च। ग०

पिशाचकी प्रयोगस्तु पिशाचादिनिना कुका।

वयसि पूरणात् । ५ । २ । १३०

पूरणादिनिरिष्येत वयस्यर्थेऽत्र पञ्चमी ।
मासः संवत्सरो वाऽत्र पञ्चमोऽस्यास्ति विग्रहः ॥

सुखादिभ्यश्च । ५ । २ । १३१

मत्वर्थे च सुखादिभ्य इनिः स्यात्सुखिदुःखिनोः ।

माला क्षेपे । ग० सू०

इनिः क्षेपेऽत्र मालाया माली निन्दायुतो जनः ।

धर्मशीलवर्णान्ताच्च । ५ । २ । १३२

धर्मान्तादथ शीलान्ताद् वर्णान्तादिनि रिष्यते ।
तस्माद् ब्राह्मणधर्मी स्यात् ब्राह्मणस्य च धर्मवान् ।
एवं ब्राह्मणशीली च ब्राह्मणवर्णी इत्यपि ॥

हस्ताज्जातौ । ५ । २ । १३३

हस्ताज्जाताविनिर्हस्ती नरस्तु हस्तवान् भवेत् ।

वर्णाद् ब्रह्मचारिणि । ५ । २ । १३४

वर्णादिनि स्ततो वर्णी ब्रह्मचारिजने स्मृतः ॥

पुष्करादिभ्यो देशे । ५ । २ । १३५

पुष्करादेरिनिर्देशे पुष्करिणी च पद्मिनी ।

बाहूरुपूर्वपदाद्बलात् । वा

बाहुबली उरुबली बलाद् बाहूरुपूर्वकात् ॥

सर्वादेश्च । वा

सर्वादेरिनिरेव स्यात् सर्वधनी प्रयुज्यते ।
सर्ववीजी प्रयोगोऽपि क्रियतां मतुबर्थके ॥

अर्थाच्चासन्निहिते । वा

असंनिहित तात्पर्ये भवेदर्थादिनिः सदा ।
अर्थी याचक आख्यातः संनिहितेऽर्थवान् भवेत् ।

तदन्ताच्च । वा

अर्थान्तादपि धान्यार्थी हिरण्यार्थीनिना भवेत् ।

बलादिभ्यो मतुबन्यतरस्याम् । ५ । २ । १३६

वलादिभ्यो मतुब्बा स्याद् बलवांश्च वली पुनः ।

संज्ञायां मन्माभ्याम् । ५ । २ । १३७

मत्वर्थे खलु संशायां मन्माभ्यामिनिर्भवेत् ॥
दामिनी स्यात् प्रथमिनी होमिनी सोमिनी पुनः ।

कंशंभ्यां बभयुस्तितुतयसः । ५ । २ । १३८

बभयुस्तितयसः कंशंभ्यां सप्तप्रत्ययाः ।
कंब्वः कम्भ स्तथा कंयुः कन्तुः कन्तः कंय इति ।
शम्बः शम्भः शंयुः शन्तिः शन्तु शन्तः शंय्य इति ॥

तुन्दिवलिवटे भः । ५ । २ । १३९

एभ्यो भः स्याच्च मत्वर्थे तुन्दिभो वलिभः पुनः ।
वटिभः किन्तु बलिनः पामादित्वाच्च ने कृते ॥

अहं शुभयोर्युस् । ५ । २ । १४०

मत्वर्थे युस्विधीयेत अहंशुभद्वयादिह ।
अहंयुर्गर्ववान् लोकः शुभंयुः स्याच्छुभान्वितः ॥

॥ इति पाञ्चपाञ्चमिक मत्वर्थीय प्रकरणम् ॥



# अथ तद्धितेषु प्राग्दिशीयाः

प्राग्दिशो विभक्तिः । ५ । ३ । १

प्राग्दिशः प्रत्यया येऽत्र विभक्तिसंज्ञकाश्च ते ।
स्वार्थिकाः प्रभवन्त्येते विकल्पेनैव प्रायशः ॥
समर्थानाञ्च प्रथमादेतद्द्वयं निवर्तते ।

किं सर्वनाम बहुभ्योऽद्व्यादिभ्यः । ५ । ३ । २

अद्व्यादिसर्वनामभ्यः किमो बहोश्च प्राग्दिशः ।

इदम ईश् । ५ । ३ । ३

तद्धिते प्राग्दिशीये तु इदम ईश् विधीयते ।

एतेतौ रथोः । ५ । ३ । ४

रेफादौ च थकारादौ एतेतौ इदम इह ।

एतदोऽन् । ५ । ३ । ५

एतदस्तु विशेषेण अन्नेतेता स्त्रयः पुनः ।
रादौ थादौ प्रत्ययेऽत्र आदेशाः प्रभवन्त्यमी ॥

सर्वस्य सोऽन्यतरस्यां दि । ५ । ३ । ६

सर्वशब्दस्य सो वा स्यात् प्राग्दिशीये दिप्रत्यये ।

पञ्चम्यास्तसिल् । ५ । ३ । ७

पञ्चम्यन्तकिमादिभ्य स्तसिल् वा जायते इह ।

कुति होः । ७ । २ । १०४

तादौ हादौ विभक्तौ च किमः कुः क्रियते सदा ।
कुतः कस्माद् यतो यस्मात् तत स्तस्मादतोऽमुतः ॥
बहुतः सर्वतो मत्तस्त्वत्तो मुखत आदि च ।
श्लो० सि० पू० ३४

तसेश्च । ५ । ३ । ८

किं सर्वनाम बहुभ्यः परस्य स्यात्तसिल् तसेः ।
स्वरार्थञ्च विभक्त्यर्थं वचनं क्रियते नवम् ॥

पर्यभिभ्याञ्च । ५ । ३ । ९

पर्यभिभ्यां तसिल् कार्यः सर्वोभयार्थयोः क्रमात् ।

सर्वोभयार्थाभ्यामेव । वा

परितः सर्वतो रूपमभितः स्यादुभयतः ।

सप्तम्यास्त्रल् । ५ । ३ । १०

सप्तम्यन्तात्त्रलिष्येत सर्वनामपदादिह ।
कुत्र यत्र तथा तत्र बहुत्र पदमुच्यते ।

इदमो हः । ५ । ३ । ११

इदमो हश्च जायेत त्रलोऽपवादत इह ।

किमोऽत् । ५ । ३ । १२

सप्तम्यन्तात् किमोऽद्वा स्यात् पक्षे त्रलपि जायते ।

क्वाति । ७ । २ । १०५

किमः क्वादेश इष्येत प्रत्ययेऽति परे सदा ।
कस्मिन्निति प्रदर्श्यात्र क्व कुत्र पदमुच्यताम् ॥

वा ह च च्छन्दसि । ५ । ३ । १३

छन्दसि वा ह एवास्ति कुह स्थः कुह जग्मतुः ।

एतदस्त्रतसोस्त्रतसौ चानुदात्तौ । २ । ४ । ३३

त्रतसोः परयो रन्वादेशे स्यादेतदोऽश् पुनः ।
सुखं वसाम एतस्मिन् ग्रामे चाधीमहे वयम् ॥
अतो वयं न गन्तास्मो वाक्यमेतत्प्रयुज्यते ।

## इतराभ्योऽपि दृश्यन्ते । ५ । ३ । १४

पञ्चमी सप्तमीभिन्न विभक्त्यन्तादपि पुनः ।
तसिलादयश्च जायन्ते भवदादियुतस्थले ॥
स भवान् ततोभवान् तत्रभवांश्च जायते ।
तं भवन्तमिति स्थाने ततस्तत्रभवन्त मिति ॥
देवानां प्रिय आयुष्मान् दीर्घायुरिति योगतः ।
ततस्तत्र प्रयोगः स्यात् ततो दीर्घायुरादयः ॥

## सर्वैकान्यकिं यत्तदः काले दा । ५ । ३ । १५

सर्वैकान्यकिं यत्तदः काले दा प्रत्ययो भवेत् ।
कस्मिन् काले कदा रूप मेकस्मिन्नेकदा पुनः ॥
सदा स्यात् सर्वस्मिन् काले सर्वदाऽपि प्रयुज्यते ।
यस्मिन् तस्मिन् च अन्यस्मिन् काले यदा तदाऽन्यदा ॥

## इदमोर्हिल् । ५ । ३ । १६

इदमोर्हिल् भवेदत्र काले हस्यापवादतः ।
अस्मिन् काले च एतर्हि देशेऽर्थे च विधीयते ॥

## अधुना । ५ । ३ । १७

सप्तम्यन्ताच्च कालेऽर्थे इदमः क्रियतेऽधुना ।
प्रकृतेरिश् भवेत्तस्य लोपं कृत्वाऽधुना पदम् ॥

## दानीञ्च । ५ । ३ । १८

इदमस्तु भवेद् दानीं प्रत्ययः समयार्थकः ।
इदमः स्यादिशादेश इदानीमिति साध्यते ॥

## तदो दा च । ५ । ३ । १९

तच्छब्दादत्र दा दानीं प्रत्ययौ भवतः पुनः ।
तस्मिन् काले तदानीं स्यात् तदा रूपञ्च सिद्ध्यति ॥
त्यदादीनाम इत्यस्मादत्वं रूपस्य साधने ।
तदो दा वचनञ्चात्र विहितत्वादनर्थकम् ॥

अनद्यतने र्हिलन्यतरस्याम् । ५ । ३ । २१

अनद्यतनकालेऽर्थे र्हिल् वा स्यात् किं यदादितः ।
कर्हि यर्हि भवेत्तर्हि कदा यदा तदाऽपि च ।।

सद्यः परुत् परार्यैषमः परेद्यव्यद्य पूर्वेद्यु रन्येद्यु रन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः । ५ । २ । २२

सद्यः परुत् परार्यादि शब्दाः सर्वे निपापिताः ।
समानेऽह्नि सद्यः स्यात् पूर्वसंव्वत्सरे परुत् ।।
ततः पूर्वतरे वर्षे परारि पद मिष्यते ।
अस्मिन् वर्षे ऐषमः स्यात् समसण् प्रत्ययोऽभवत् ।।
इदमस्तु इशादेश स्तस्य वृद्धिश्च जायते ।।
परेद्यवि परस्मिन्हि दिवसेऽर्थे निपात्यते ।
इदमोऽश्यश्च अद्य स्यादस्मिन्नहनि विग्रहे ।।
पूर्वादिभ्योऽष्ट शब्देभ्योऽहन्येद्युश्च विधीयते ।
पूर्वस्मिन्नह्नि पूर्वेद्युरेवमन्येद्यु रुह्यताम् ।।
उभयेद्यु रपरेद्यु रन्यतरेद्युरुच्यताम् ।
इतरेद्यु रपरेद्यु रधरेद्युस्तथैव च ।।
एते सर्वे निपात्यन्ते विधिना येन केन च ।

प्रकार वचने थाल् । ५ । ३ ।-२३

प्रकारेऽर्थे किमादिभ्यस्थाल् स्वार्थेऽत्र विधीयते ।
तथा तेन प्रकारेण यत्प्रकारेण च यथा ।
प्रकारे थाल् प्रत्ययोऽस्ति जातीय तद्वति पुनः ।।
तथाजातीय इत्यादि प्रयोगश्च प्रसिद्ध्यति ।

इदमस्थमुः । ५ । ३ । २४

इदमस्थमुः प्रकारेऽर्थे एतदोऽपि थमुः पुनः ।
इत्थमनेन एतेन प्रकारेणेति विग्रहे ।।

किमश्च । ५ । ३ । २५

किमश्च इति सूत्रेण प्रकारेऽर्थे थमुः पुनः ।
कथं केन प्रकारेण त्यदादीनाम ऊह्यताम् ।।

।। इति प्राग्दिशीयानां विभक्तीनां पूर्णोऽवधिः ।।

—: ० :—

## अथ तद्धितेषु प्रागिवीयाः

दिक् शब्देभ्यः सप्तमी पञ्चमी प्रथमाभ्यो दिग् देश-कालेष्वस्तातिः । ५ । ३ । २७

दिगर्थकास्तु ये शब्दास्तेभ्योऽस्तातिः प्रयुज्यते ।
प्रथमा पञ्चमीत्यादिविभक्त्यन्तेभ्य एव हि ॥
दिशि देशे च काले च प्रागिवीया भवन्ति वै ।

पूर्वाधरावराणामसि पूर्वधवश्चैषाम् । ५ । ३ । ३९

पूर्वाधरावरेभ्योऽस्तात्यर्थे स्यादसि प्रत्ययः ।
आदेशाः पुरधवोऽसौ प्रकृतीनामिह क्रमात् ॥

अस्ताति च । ५ । ३ । ४०

अस्तातौ प्रत्यये चात्र पूर्वादीनां पुरादयः ।
पूर्वस्यां खलु पूर्वायाः पूर्वा वेति च विग्रहे ॥
पुरः पुरस्ता द्वक्तव्य मधोऽधस्तादपि भवेत् ।
अधस्ताद् वसति वाक्य मधस्तादागतो वदेत् ॥

विभाषाऽवरस्य । ५ । ३ । ४१

अवोऽवस्तादवरस्मिन् अवरस्मादिति स्थितौ ।
अवरस्तादपि पक्षे प्रयोगः स्यान्निजेच्छया ॥

दक्षिणोत्तराभ्यामतसुच् । ५ । ३ । २८

अतसुच् प्रत्ययः कार्यो दक्षिणादुत्तरादपि ।
दक्षिणत उत्तरतः प्रयोगः क्रियते ततः ॥
अस्ताते रपवादोऽयं दक्षिणस्तादिति नहि ।

विभाषा परावराभ्याम् । ५ । ३ । २९

परावरद्वयाभ्याञ्च विकल्पेनातसुज् भवेत् ।
परतः स्यात् परस्ताच्चावरस्तादवरस्तथा ॥

अञ्चेर्लुक् । ५ । ३ । ३०

अञ्चत्यन्ताच्च दिक्शब्दादस्तातेर्लुग् विधीयते ।
प्राच्यां प्राच्यास्तथा प्राची दिगितिविग्रहे ततः ।
प्राक् प्रयोगो विधीयेत प्रत्यगुदक् तथैव च ।
प्राग्वसति प्रागागतो वाक्यमेवं विधीयताम् ॥

उपर्युपरिष्टात् । ५ । ३ । ३१

अस्ताते विषये ऊर्ध्व शब्दाद्रिल् प्रत्ययस्तथा ।
रिष्टातिलपि जायेत ऊर्ध्वस्योपादेश इति ॥
उपरि उपरिष्टाद्वा वसत्यागत उच्यताम् ।

पश्चात् । ५ । ३ । ३२

अपरादातिराख्यातः अस्ताते विषये पुनः ।
अपरस्य पश्चभावः पश्चादिति च सिद्ध्यति ॥

उत्तराधरदक्षिणादातिः । ५ । ३ । ३४

उत्तराधर दक्षिणा-शब्देभ्य आतिरिष्यते ।
उत्तरादधरादेवं दक्षिणादिति सिद्ध्यति ॥

एनबन्यतरस्यामदूरेऽपञ्चम्याः । ५ । ३ । ३५

अवधेरवधिमतश्च सामीप्ये सति वा भवेत् ।
उत्तरादिपदादेनप् पञ्चम्यन्तं विना इह ॥
उत्तरेणाधरेणेति दक्षिणेन प्रयुज्यते ।
दिङ्मात्रादेव केषाञ्चिन्मते एनप् प्रवर्तते ॥
पूर्वेण ग्राममित्येव मपरेणापि कथ्यताम् ।

दक्षिणादाच् । ५ । ३ । ३६

दक्षिणादाज् विधीयेत अस्ताते विषये पुनः ।
वसति दक्षिणा प्राज्ञः प्रयोगो दर्शितो बुधैः ॥
दूरेऽर्थे दक्षिणादाहिः स्यादाजपि विशेषतः ।

आहि च दूरे । ५ । ३ । ३७

दक्षिणाहि दक्षिणा च दूरादागत एषका ।

उत्तराच्च । ५ । ३ । ३८

उत्तराच्च भवेदाहि स्तथैवाऽजपि जायते ।
उत्तराहि तथा पक्षे उत्तराऽपि प्रयुज्यते ॥

संख्याया विधाऽर्थे धा । ५ । ३ । ४२

संख्याया विधाऽर्थे धा क्रियाप्रकारबोधने ।
चतुर्धा पञ्चधा षोढा सप्तधापि प्रयुज्यते ॥

अधिकरण विचाले च । ५ । ३ ४३ ।

अधिकरण विचाले संख्याया धा विधीयते
एकोऽनेकोभवेद्यत्र तत्रैवेदं प्रयुज्यते ॥
कुरुतां पञ्चधा एकं राशिमेवं प्रयुज्यते ।

एकाद्धो धमुञन्यतरस्याम् । ५ । ३ । ४४

एकाद्धः स्याद्विकल्पेन ध्यमुञ् प्रत्यय इत्यपि ।
एकध्यमेकधा पञ्चराशीन् कुरुत साम्प्रतम् ॥

द्वित्र्योश्च धमुञ् । ५ । ३ । ४५

द्वित्रिभ्यां परस्मान्न धा इत्यस्य धमुञ् च वा ।
द्वैधं द्विधा त्रिधा त्रैधं प्रयोगद्वयमुच्यते ॥

धमुञन्तात् स्वार्थे ड दर्शनम् । वा

धमुञन्ताद् भवेत्स्वार्थे डःप्रत्ययः क्वचित्स्थले ।
तृणानि पथि द्वैधानि सन्त्येवञ्च प्रयुज्यते ॥

एधाच्च । ५ । ३ । ४६

द्वित्रिभ्यां परस्यात्र एधाच् धा प्रत्ययस्य वै ।
द्वित्रिप्रकारतो जाते द्वेधा त्रेधा पदं स्मृतम् ॥

याप्ये पाशप् । ५ । ३ । ४७

निन्दायामत्र पाशप् स्याद् भिषक्पाशः प्रयुज्यते ।
कुत्सितो यो भिषक् तस्मिन् भिषक्पाश उदाहृतः ॥
गुरुपाशा न जानन्ति छात्रपाशाः पठन्ति न ।

पूरणाद् भागे तीयादन् । ४ । ३ । ४८

पूरणार्थकतीयादन् भागेऽर्थे जायते खलु ।
द्वितीयोभाग इत्यर्थे द्वितीय एव कथ्यते ।।
तृतीयोभाग इत्यर्थे तृतीयः स्यादनि कृते ।

तीयादीकक् स्वार्थे वाच्यः । वा

तीयादीकक् भवेत् स्वार्थे द्वैतीयकस्ततो भवेत् ।
एवं तार्तीयिकः शब्दस्तृतीयार्थे प्रयुज्यते ।।

न विद्यायाः । वा

वृत्तिकारमते नेकक् विद्यायाश्च प्रयुज्यते ।
द्वितीया वा तृतीया वा विद्या एवं प्रयुज्यते ।।

प्रागेकादशभ्योऽच्छन्दसि । ५ । ३ । ४९

पूरणप्रत्ययान्तेभ्यः प्रागेकादशतः पुनः ।
अन्प्रत्ययस्तु भागे स्याच्चतुर्थः पञ्चम स्तथा ।।

षष्ठाष्टमाभ्यां ञ च । ५ । ३ । ५०

षष्ठाष्टमद्वयाद् भागे ञः स्यादन्नपि जायते ।
षाष्ठोभाग स्तथाषष्ठ आष्टमः पुनरष्टमः ।।

मानपश्वङ्गयोः कन्लुकौ च । ५ । ३ । ५१

माने तथाच पश्वङ्गे षष्ठाष्टमाच्च कन्लुकौ ।
मानुषे षष्ठको भागः पश्वङ्गे चेदष्टमस्तु सः ।।

एकादाकिनिच्चासहाये । ५ । ३ । ५२

असहाये भवेदेकादाकिनिच् प्रत्ययस्तु वा ।
एकाकी एकक एको रूपत्रयं प्रयुज्यते ।।

भूतपूर्वे चरट् । ५ । ३ । ५३

भूतपूर्वे चरट्कार्यं तस्मादाढयच्चरो भवेत् ।
आढयस्तु भूतपूर्वो यस्तस्मिन्नेवायमुच्यते ।।

षष्ट्या रूप्य च । ५ । ३ । ५४

षष्ठ्यन्ताद् भूतपूर्वेऽर्थे रूप्यः पक्षे चरट् पुनः ।
कृष्णस्य भूतपूर्वो गौः कृष्णरूप्यः कृष्णचरः ॥
शुभ्राया भूतपूर्वो यः शुभ्रारूप्यस्तु स भवेत् ।

अतिशायने तमबिष्ठनौ । ५ । ३ । ५५

अतिशायनतात्पर्ये भवेतां तमबिष्ठनौ ।
अयमेषामतिशय आढ्च आढ्यतमः स च ॥
अतिलघु र्लघुतमो लघिष्ठो वा प्रयुज्यते ।

तिङश्च । ५ । ३ । ५६

तिङन्तादप्यतिशये तमप्प्रत्यय उच्यते ।

तरप्तमपौ घः । १ । १ । २२

तरप्तमब्द्वयस्यात्र घसंज्ञा च विधीयते ।

किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । ५ । ४ । ११

किमेन्तिङव्ययपरो यो धस्तस्मादामु र्भवेत् ।
किंतमां पचतितमां प्राह्णेतमामुच्चैस्तमाम् ः।
तरुरुच्चैस्तमश्चात्र द्रव्योत्कर्षस्ततो नहि ।

द्विवचनविभज्योपपद तरबीयसुनौ । ५ । ३ । ५७

द्वयोरेकस्य आधिक्ये विभक्तव्ये उपपदे ।
तरबीयसुनौ स्यातां पूर्वयोरपवादतः ॥
अतिशयोऽयमनयो र्लघु र्लघुतरो भवेत् ।
लघीयान् वा भवेद्रूपमनयो र्लघुरेषकः ॥
प्राच्येभ्यो भवन्त्येव उदीच्या हि पटुतराः ।

अजादीगुणवचनादेव । ५ । ३ । ५८

इष्ठन्नीयसुनौ स्यातां गुणवाचकतः सदा ।
प्रयोगः पाचकतरः पाचकतम ऊह्यताम् ॥

पाचको गुणवाची न तस्मादिष्ठन्न दर्शितम् ।

तुश्छन्दसि । ५ । ३ । ५९

तृन्तृजन्ताद् भवेदिष्ठन् प्रत्यय ईयसुन्नपि ।

तुरिष्ठेमेयःसु । ६ । ४ । १५४

तृप्रत्ययस्य लोपः स्यादिष्ठेमेयःसु सर्वदा ।
अतिशयेन कृतो यः स करिष्ठ उदाहृतः ॥
अतिशयेन दोग्ध्री गौ दोहीयसी च छन्दसि ।

प्रशस्यस्य श्रः । ५ । ३ । ६०

श्रादेशः स्यात् प्रशस्यस्य इष्ठन्नीयसुनोः सदा ।

प्रकृत्यैकाच् । ६ । ४ । १६३

इष्ठादिषु परेष्वत्र प्रकृत्यैकाज् भवेदिह ।
श्रेष्ठः श्रेयान् ततो रूपं जायते च प्रयुज्यते ॥

ज्य च । ५ । ३ । ६१

ज्यादेशोऽपि प्रशस्यस्य भवेदिष्ठेयसोरिह ।
अयमनयोः प्रशस्यो ज्येष्ठः स कथ्यते जनैः ॥

ज्यादादीयसः । ६ । ४ । १६०

ईयसस्तु विशेषेण आदेशात् क्रियतेऽत्र ज्यात् ।
ज्यायानिति प्रयोगस्तु प्रशस्ते भ्रातरि भवेत् ॥

वृद्धस्य च । ५ । ३ । ६२

ज्यादेशो वृद्धशब्दस्य भवेदिष्ठेयसोरिह ।
ज्येष्ठो ज्यायान् प्रयोगोऽयं प्रशस्ते वृद्धमानवे ॥
स्वरूपग्रहणं वृद्धपदेऽस्ति शास्त्रतो नहि ।

अन्तिकबाढयो र्नेदसाधौ । ५ । ३ । ६३

अन्तिकबाढयो र्नेदसाधाविष्ठेयसोः पुनः ।

अत्यन्तिके च नेदिष्ठो नेदीयानपि कथ्यते।
सुन्दरार्थे च साधिष्ठः साधीया इति कथ्यते॥

स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुण.। ६।४।१५६

इष्ठादिषु परेष्वेषां यणादिपरं लुप्यते।
पूर्वस्याचो गुणः कार्यः स्थविष्ठस्तेन जायते॥
अतिस्थूलः स्थविष्ठः स्यादतिदूरं दविष्ठमिति।
यविष्ठः स्यादतियुवा ह्रसिष्ठो वामनो लघुः।
क्षेपिष्ठः स्यादतिक्षिप्रे क्षोदिष्ठः क्षुद्रराड् जनः।:
एवमीयसि तु प्रेयान् स्थेयान् शब्दश्च सिद्धयति।
पृथ्विादित्वादिमनिचि ह्रसिमा क्षेपिमादयः॥

प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्तदीर्घवृन्दारकाणां-प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः। ६।४।१५७

इष्ठादिषु परेष्वत्र प्रियादीनाञ्च प्रादयः।
क्रमेणैव विधीयन्ते प्रेष्ठः स्थेष्ठः पदं ततः॥
अतिप्रियो भवेत्प्रेष्ठः प्रेयान् वा सच कथ्यते।
अतिस्थिरो जनश्चात्र स्थेष्ठः स्थेयान् प्रसिद्धयति॥
स्फेष्ठः स्फेयानतिस्फिरोऽत्यूरुः स्याद् वरिष्ठ इह।
ईयसनि वरीयान् स्याद् गरिष्ठोऽतिगुरुः स्मृतः॥
ईयसुनि गरीयान् स्याद् विशेषनिघ्न इष्यते।
अतिवृद्धस्तु वर्षिष्ठो वर्षीयानपि कथ्यते॥
अतितृप्रं त्रपिष्ठः स्यात् त्रपीयोऽथ त्रपीयसी।
अतिदीर्घस्तु द्राघिष्टो द्राघीयानपि कथ्यते॥
वृन्दारकस्य वृन्दः स्याद् वृन्दिष्ठः साध्यते ततः।
प्रियोरुगुरुदीर्घेभ्यो बहुलादिमनिज् भवेत्॥
पृथ्वादित्वात् ततः प्रेमा आदि रूपं प्रसिद्धयति।

बहो र्लोपो भू च बहोः। ३।४। १५८

इमेयससोरादिलोपो बहोश्च परयो भंवेत् ।
बहोर्भ्वादेश उक्तोऽत्र भूमा भूयांश्च सिद्ध्यति ॥

इष्ठस्य इट् च । ६ । ४ । १४९

बहोरिष्ठन् तदादेर्लोपः शिष्टस्य यिट् पुनः ।
बहो र्भू रिति सञ्जाते भूयिष्ठः शब्द इष्यते ॥

युवाल्पयोः कनन्यतरस्याम् । ५ । ३ । ६४

युवाल्पयोः कनादेश इष्ठेयसो र्विकल्पतः ।
कनिष्ठः स्यात् कनीयांश्च यविष्ठोऽल्पिष्ठ इत्यपि ॥

विन्मतो र्लुक् । ५ । ३ । ६५

विन्मतो लुग् विधीयेत पराविष्ठेयसौ यदि ।
अतिस्रग्वी स्रजिष्ठः स्यात् स्रजीयानपि कथ्यते ॥
त्वग्वानतिशयेनायं त्वचीयान् स्यात् त्वचिष्ठ इति ।

प्रशंसायां रूपप् । ५ । ३ । ६६

सुबन्ताच्च तिङन्ताच्च रूपप् प्रशंसने भवेत् ।
प्रशस्तः पटुरेवात्र पटुरूपो भवेज्जनः ॥
प्रशस्तं पचतीत्यत्र पचतिरूपमुच्यते ।

ईषदसमाप्तौ कल्पब्देश्यदेशीयरः । ५ । ३ । ६७

ईषदर्थे भवेत् कल्पप् देश्यदेशीयरावपि ।
विद्वत्कल्पः सएव स्यादीषद्विद्वांश्च यो भवेत् ॥
ईषदूनश्च यो विद्वान् विद्वद्देश्यः कुपण्डितः ।
विद्वद्देशीय उच्येत स एव कुत्सितोबुधः ॥
यशस्कल्पं यजुःकल्पमीषदूनं यशो यजुः ।

विभाषा सुपो बहुच् पुरस्तात्तु । ५ । ३ । ६८

सुबन्ताच्च बहुज् बा स्यात् प्रागेव परतो नहि ।
ईषदसमाप्तिबोधे प्रत्ययो बहुजिष्यते ॥
ईषदूनः पटु र्लोके बहुपटु र्निगद्यते ।
पक्षे तु पटुकल्पः स्याद् भृत्योऽयं बहुबुद्धिमान् ॥

यजतिकल्पमित्यादौ बहुच् स्यान्न तिङन्ततः।

प्रकारवचने जातीयर्। ५। ३। ६९

प्रकारवचने शब्दाज् जातीयर् प्रत्ययो भवेत्।
पटुप्रकार एवात्र पटुजातीय उच्यते॥
प्रकारवति जातीयर् प्रकारे केवलेऽत्र थाल्।
अर्थभेदमिमं ज्ञात्वा प्रयोगः क्रियतां सदा॥

प्रागिवात् कः। ५। ३। ७०

अतोऽग्रे प्रागिवात् कः प्रत्ययोऽधिकृतः खलु।
कः प्रत्ययस्तिङन्तान्न सुपोऽनुवर्तनं यतः॥

अव्ययसर्वनाम्नामकच् प्राक्टेः। ६। ३। ७१

अव्ययात् सर्वनाम्नश्च प्राक् टेरकज् विधीयते।
तिङन्तादपि जायेत प्राक्टेरकच्च प्रत्ययः॥

कस्य च दः। ५। ३। ७२

कान्ताव्ययस्य दोऽन्ते स्यादकच्च क्रियते पुनः।

अज्ञाते। ५। ३। ७३

अज्ञातेऽर्थे विधीयेत कः प्रत्ययश्च तद्धितः।
अज्ञातएव अश्वोऽत्र अश्वकः कथ्यते जनैः।
उच्चकै नींचकैरेवं सर्वके विश्वके स्वके॥

ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्। वा

ओकारादौ सकारादौ भादौ सुपि परे पुनः।
प्रागकच् सर्वनाम्नष्टे रावकयो युंवकयोः॥
युष्ककासु अस्मकासु युष्मकाभिः प्रयुज्यते।

अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः। वा

काम् प्रत्ययश्च तूष्णीमो मित्वादन्त्यादचःपरः।
तुष्णीकामा इमे सन्ति प्रयोगः क्रियते बुधैः॥

शीले को मलोपश्च । वा

शीलेऽर्थेऽत्र तूष्णीमः को भवेन्मश्च लुप्यति ।
तूष्णींशीलः स तूष्णीकः पुरुषः कथ्यते सदा ॥

कुत्सिते च । ५ । ३ । ७४

कुत्सितेऽर्थे सुबन्तात्कः कुत्सितोऽश्वोऽश्वकः स्मृतः ।

संज्ञायां कन् । ५ । ३ । ७५

कुत्सिते कन् विधीयेत संज्ञाऽर्थः स्यात्तदन्ततः ।
शूद्रको राधकश्चात्र विशेषपुरुषो भवेत् ॥

अनुकम्पायाम् । ५ । ३ । ७६

अनुकम्पित एवात्र पुत्रः पुत्रक उच्यते ।

नीतौ च तद्युक्तात् । ५ । ३ । ७७

सामदानादिरूपाऽत्र नीतिस्तस्यां स्थितौ पुनः ।
अनुकम्पान्वितात् कः स्यादुदाहरणमस्य च ॥
धानकाः गुणकाः हन्त एहकि अद्धकि तथा ।
पूर्वेणात्रानुकप्यात्कस्तत्सम्बन्धादनेन कः ।
पुत्रके धानके शब्दे यो भेदः स विमृश्यताम् ॥

बह्वचो मनुष्यनाम्नष्ठज् वा । ४।३।७८

बह्वचो नरनाम्नष्ठच् पूर्वार्थद्वयबोधने ।

घनिलचौ च । ५।३।७९

घनिलचापि तस्मिन् पूर्वार्थद्वयवर्तने ।

ठाजादावूर्ध्वं द्वितीयादचः ५।३।८३

लुप्यते प्रकृतेरूर्ध्वं ठाजादिप्रत्यये परे ।
द्वितीयादच ऊर्ध्वं यत् प्रकृतेस्तच्च लुप्यते ॥
देविको देवियश्चैवं देविलो देवदत्तकः ।
अनुकम्पित एवासौ देवदत्तो निगद्यते ॥

वायुर्दत्तोऽथवा वायुदत्तक श्चानुकम्पितः ।
षष्ठोऽजादिप्रत्ययोऽत्र प्रकरणे उदाहृतः ॥

चतुर्थादच ऊर्ध्वस्य लोपो वाच्यः । वा.

चतुर्थादच ऊर्ध्वस्य लोपो भवति ठपरे ।
अनुकम्पितो बृहस्पतिदत्तो बृहस्पतिकः ॥
स्पष्टता—बृहस्पतिदत्त ठच् दत्तस्य लोपो
ठस्येको बृहस्पतिक इति ।

अनजादौ च विभाषा लोपो वक्तव्यः । वा

ठचि पूर्वद्वयं प्रोक्तं देवको देवदत्तकः ॥

लोपः पूर्वपदस्य च । वा

दत्तिको दत्तियस्तस्माद् दत्तिलो दत्तकस्तथा ।

विनापि प्रत्ययं पूर्वोत्तरपदयो र्वा लोपो वाच्यः । वा

देवदत्तोऽथवा दत्तो देवो वा वक्तुमर्हसि ।
सत्यभामाऽथवा भामा सत्या वाऽत्र प्रयुज्यताम् ॥

उवर्णाल्ल इलस्य च । वा

उवर्णाल्ल इलस्य स्याद् भानुदत्तश्च भानुलः ।
दत्तपदस्य लोपोऽत्र इलस्य लश्च जायते ॥

ऋवर्णादपि । वा

ऋवर्णान्ताच्च लः प्रोक्तः सवितृलः सवित्रियः ।
चतुर्थादनजादौ तु लोपः पूर्वपदस्य च ।
अप्रत्यये तदेवेष्ट उवर्णाल्ल इलस्य च ।

प्राचामुपादेर डच्वुचौ च ।५।३।८०

अडज्वुचामुपादेः स्यातां प्राचां मते पुनः ।
उपशब्दो भवेत्पूर्वभागो यत्र ततस्त्विमौ ॥
अनुकम्पित उपेन्द्र दत्तः स्यादुपडः पुनः ।
उपक उपिकश्चैव मुपिय उपलस्तथा ॥

उपेन्द्रदत्तकश्चेति षड्रूपाणि भवन्ति वै ।

जातिनाम्नः कन् ४।३।८१

जातिनाम्नो विधियेत कन् मनुष्यार्थवाचकात् ।
नीतौ तथाऽनुकम्पायां सिंहकोऽयं शरम्भकः ॥
रासभकः प्रयुज्येतानुकम्पितश्च रासभः ।

द्वितीयं सन्ध्यक्षरं चेत्तदादे र्लोप इष्यते । वा

अनुकम्पितः कुहोडः कुहिकः स च कथ्यते ।

एकाक्षरपूर्वपदामुत्तरपदलोपोवक्तव्यः । वा

वागाशीर्दत्त इत्यत्र वाचिकस्तु प्रयुज्यते ।

षषष्ठाजादि वचनात् सिद्धम् । वा

षडिकः साध्यतामत्र षडङ्गुलेश्च शब्दतः ।

स्पष्टीकरणम्—

षडङ्गुलिदत्त ठक्, इकः, अङ्गुलिदत्तस्यलोप-
स्ततोजश्त्वेकृते षडिकरूपं सिद्धयति ।

शेवल सुपरि विशालवरुणार्यमादीनां तृतीयात् ।
४ । ३ । ८४

शेवलसुपरिविशालवरुणार्यमादिशब्दस्य ॥
अचस्तृतीयादूर्ध्वमचिरं लुप्येत् ठजादिषु ॥
शेवलदत्त एवात्र शेवलिकः शेवलियः ।
शेवलिलः प्रयोगोऽपि जायते तद्विचार्यताम् ॥
सुपर्याशीः सुपरिकः सुपरियः सुपरिलः ।
विशालाशी विशालिको वारुणिक श्चार्यमिकः ॥

अजिनान्तस्योत्तरपदलोपश्च ।४।३।८२

अजिनान्तान्मनुष्यस्य नाम्नोऽनुकम्पनेऽत्र कन् ।
उत्तरस्य पदस्यैवं लोपोऽपि जायते पुनः ॥

अनुकम्पितश्च व्याघ्राजिनो व्याघ्रक उच्यते।
अनुकम्पितश्च सिंहाजिनः सिंहक इष्यते॥

अल्पे। ५। ३। ८५

अल्पार्थे कन् विधीयेत तैलकमल्पमस्ति तत्।
अल्पं तैलं भवेदत्र विग्रहस्य प्रदर्शनम्॥

ह्रस्वे। ५। ३। ८७

ह्रस्वार्थेऽपि कनेव स्याद् ध्रस्वो वृक्षश्च वृक्षकः।

संज्ञायां कन्। ५। ३। ८७

संज्ञायामपि कन् कार्यं वंशको वेणुकादयः।
ह्रस्वो वंशस्तथा वेणु विग्रहोऽत्र प्रदर्श्यताम्॥

कुटीशमीशुण्डाभ्यो रः। ५। ३। ८८

कुटी शमी तथा शुण्डा एतत्त्रिभ्यस्तु रो भवेत्।
ह्रस्वा कुटी कुटीरः स्यान् ह्रस्वा शमी शमीर इति॥
ह्रस्वा शुण्डा च शुण्डारः स्वार्थे रप्रत्ययाद् भवेत्।
स्वार्थिका अतिवर्तन्ते लिङ्गमत्र विशेषता॥

कुत्वा डुपच्। ५। ३। ८९

कुतूशब्दाड् डुपच् स्वार्थे कुतुपः साध्यते ततः।
कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्॥ कृत्तिश्चर्म

कासूगोणीभ्यां ष्टरच्। ५। ३। ९०

कासूगोणीद्वयादत्र ष्टरच् ह्रस्वे विधीयते।
कासूरायुधनामास्ति ह्रस्वा कासूतरी च सा॥
गोणीतरी भवेद् ध्रस्वा गोणीशणविनिर्मिता।

वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे। ५। ३ ९१

तरप्प्रत्यय एतेभ्य स्तनुत्वे जायते सदा।
तनुभावस्तनुत्वं हि वालत्वयौवनादिकम्॥

वत्सतर उक्षतरो द्वितीये वयसि स्थितः ।
अश्वतरस्तथर्षभतरः किञ्चिद्युवा स च ॥

किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् । ५ । ३ । ९२

द्वयोरेकस्य कथने डतरच् प्रत्ययो भवेत् ।
किंयत्तत्त्रिशब्देभ्यो जायतेऽयं विशेषतः ॥
अनयोः कतरो जैनो बौद्धो वा वर्तते वद ।
अनयो यतरो विद्वान् ततरस्तत्र गच्छतु ॥
पक्षे को यः स इत्येवं वक्तुं शक्नोति पाठकः ।

वा बहूनां जातिपरिप्रश्ने डतमच् । ५ । ३ ९३

बहूनां मध्य एकस्य यदा निर्धारणं भवेत् ।
जातेरेव परिप्रश्ने प्रत्ययो डतमच् तदा ॥
कतमो भवतां विप्रो यतमस्ततमस्तथा ।
वाग्रहणादकच्कार्यं यकः सकोऽपि जायते ॥
महाविभाषया पक्षे यः स आदि प्रयुज्यताम् ।

किमोऽस्मिन् विषये डतरजपि । वा

किमोऽस्मिन् विषये कार्यं डतरच्कतरस्ततः ।

एकाच्च प्राचाम् । ५ । ३ । ९४

प्राचां मते भवेदेकाद् डतरच् डतमच् पुनः ।
अनयोरेकतरो मैत्र एषामेकतमो बुधः ॥

अवक्षेपणे कन् । ५ । ३ । ९५

गर्वोऽवक्षेपणं प्रोक्तं तस्मिन् कन्प्रत्ययो भवेत् ।
गर्वितो व्याकरणेन व्याकरणक इष्यते ॥
सिद्धान्तकौमुदीकाव्येप्रागिवीया गतास्ततः ।
तद्राजप्रत्ययानामारम्भइष्यतेऽधुना ॥

। इतिप्रागिवीयप्रकरणम् ।

# अथ तद्धितेषु स्वार्थिकाः प्रत्ययाः

## इवे प्रतिकृतौ ।४।३।९६

तृणकाष्ठादि सञ्जाता प्रतिमैव प्रतिकृतिः ।
प्रतिकृताविवार्थे कन् तस्योदाहरणं ददे ॥
अश्व इव प्रतिकृति रश्वकः सिंहको नृकः ।
गौरिवायं गवयोऽत्र प्रतिकृति र्न वर्तते ॥

## संज्ञायाश्च ।४।३।९७

कन्निवार्थे विधातव्यः संज्ञा चेदवगम्यते ।
अश्वसदृश एवात्र कथ्यतामश्वकः पुनः ॥
एवमुष्ट्रक उष्ट्रस्य सदृशः कथ्यते जनैः ।

## लुम्मनुष्ये ।४।३।९८

कनो लुप् स्यान्मनुष्येऽर्थे संज्ञायां विहितस्य च ।
पुमान् तृणमयश्चश्चा चञ्चा चञ्चेव कथ्यते ॥
वध्रिका वध्रिकेव स्यात् तात्पर्यादर्थ बोधनम् ।
लुपि च युक्तवद्भावात् स्त्रीत्वमत्र प्रयुज्यते ॥

## जीविकार्थे चापण्ये ।४।३।९९

अपण्ये जीविकार्थेऽत्र कनोलुप् क्रियते बुधः ।
वासुदेवः शिवः स्कन्दः दुर्गा लक्ष्मीः सरस्वती ।
भिक्षार्थश्च गृहित्वा ये गृहं गृहमटन्ति ते ।
देवलकादयस्तेषु प्रयोगोऽयं विधीयते ॥
जीविकार्थे च ये केचिद् देवप्रतिकृतीरिमाः ।
गृहीत्वा सर्वगेहेषु भ्राम्यन्ति तादृशेष्विदम् ॥

तथा च—

अर्चासु पूजनार्हासु चित्रकर्मध्वजेषु च ।
इवे प्रतिकृतौ लोपः कनो देवपथादिषु ॥

स्पष्टीकरणम्—

अर्चायाश्च शिवः स्कन्द श्चित्रादावर्जुनादिकः ।
ध्वजे कपिः सिंह आदि कनो लुपात्र सिद्ध्यति ॥

अत्रैकं पद्यमुदाहरणम्—

रामं सीतां लक्ष्मणं जीविकार्थे
विक्रीणीते यो नरस्तञ्च धिग्धिक् ।
अस्मिन् पद्ये योऽपशब्दं न वेत्ति;
व्यर्थप्रज्ञं पण्डितं तञ्च धिग्धिक् ॥

स्पष्टीकरणम्—

अत्र रामकं सीतकां लक्ष्मणकं भवेदेतदेवाशुद्धं ।
तन्नजानाति तादृशं पण्डितं धिगितिरहस्यम् ।

देवपथादिभ्यश्च । ५ । ३ । १००

देवपथादिशब्देभ्यः कनो लुप् स्यात् प्रतिकृतौ ।
देवपथो हंसपथ आकृत्या गण्यतामयम् ॥

वस्तेर्ढञ् । ५ । ३ । १०१

वस्तेर्ढस्यादिवार्थेऽत्र एयादेशो ढञो भवेत् ।
आदिवृद्धौ च वास्तेयं वस्तिरिवात्र विग्रहः ॥

शिलाया ढः । ५ । ३ । १०२

शिलाया अपि ढः प्रोक्तो ढञपियोगभेदतः ।
शिलेव वस्तु शैलेयं शिलेयमिति ढकृते ॥

शाखादिभ्यो यः । ५ । ३ । १०३

शाखादिकतिशब्देभ्यो यः प्रत्ययो विधीयते ।
शाख्यः शाखेवतात्पर्यं मुख्यो मुखमिव स्मृतः ॥
शरणमिव शरण्यः स्यादेवमग्र्यादिकं वदेत् ।

द्रव्यं भव्ये । ५ । ३ । १०४

द्रुशब्दादिवार्थे ण्यः भव्ये भवति तद्धितः ।
द्रुरिव द्रव्यमाख्यातं ब्राह्मणः क्षत्रियादिकः ॥

कुशाग्राच्छः । ५ । ३ । १०५

छः प्रत्ययः कुशाग्रात्स्यात् कुशाग्रीया मतिस्तव ।
कुशाग्रमिव यस्यास्ति बुद्धिः स जन उच्यते ॥

समासाच्च तद्विषयात् । ५ । ३ । १०६

इवार्थविषयादेव समासाच्छो विधीयते ।
वधोऽयं देवदत्तस्य काकतालीय मुच्यते ॥
उड्डीयमानकाकस्य वधस्तालफलाद्यथा ।
तथाऽकस्माच्चोरघातै र्देवत्तो मृतोऽभवत् ॥
मृत्युरजाकृपाणीयो रूसे श्रीशास्त्रिणोऽभवत् ।
अचिन्तितोपपन्नायां घटनायां प्रयुज्यते ॥

शर्करादिभ्योऽण् । ५ । ३ । १०७

अञ् भवेच्छर्करादिभ्यः शर्करेव च शार्करम् ।

अङ्गुल्यादिभ्यश्च । ५ ३ । १०८

अङ्गुल्यादेष्टगिवार्थे आङ्गुलिको भारुजिकः ।

एकशालायाष्ठजन्यतरस्याम् । ५ । ३ । १०९

ठञ् वा स्यादेकशालायाः पक्षे ठगपि जायते ।
कथ्यतामेकशालेव विग्रहे एकशालिकः ।
ठक्प्रत्यये भवेद्वृद्धिरादेःस्यादैकशालिकः ॥

कर्कलोहितादीकक् । ५ । ३ । ११०

स्यात्कर्कलोहितादीकक् कार्कीकः कर्कसदृशः ।
स्फटिकोऽयं लोहितीको लोहितसदृशे भवेत् ॥
शुक्लोऽश्वः कर्क आख्यातो लोहितो रक्तवर्णकः ।

पूगाञ्ञ्योऽग्रामणीपूर्वात् । ५ । ३ । ११२

पूगाञ्ञ्योऽग्रामणीपूर्वात् पूगः समूह इष्यते ।
अर्थकामा अनियता जनाः पूगाः स्मृता इह ॥
सङ्घोऽयं लोहितध्वज्यो यस्य ध्वजोऽस्ति लोहितः ।

व्राते कपोतपाक्यस्तु कौञ्जायन्यः स्फञिभवेत् ॥
व्रातच्फञोरस्त्रियां तत् सूत्रमत्र स्मरेत् सदा ।
व्राध्नायन्यः प्रयोगोऽपि ञ्यप्रत्ययेन साध्यताम् ॥
उत्सेधजीवी व्रातः स्यात् पूगादियं विशेषता ।
शरीरायास उत्सेधो नटादेर्जीवनं यतः ॥

आयुधजीविसङ्घाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् । ५ । ३ । ११४

आयुधजीविसङ्घाञ् ञ्यट् वाहीकेऽब्राह्मणादिह ।
क्षौद्रक्यश्च मालव्यः टित्वान्ङीप् क्षौद्रिकीत्यपि ॥
शवरा नहि वाहीकाः गोपालका न ब्राह्मणाः ।
तस्माञ् ञ्यट्प्रत्ययो नात्र जायते क्षत्रियादिके ॥

वृकाट्टेण्यण् । ५ । ३ । ११५

वृकात् टेण्यण् प्रत्ययः स्याद् वार्केण्यः शस्त्रजीविकः ।

दामिन्यादि त्रिगर्तषष्ठाच्छः । ५ । ३ । ११६

दामिन्यादिपदादेवं त्रिगर्तषष्ठतस्तथा ।
आयुधजीविसङ्घस्य वाचकाच्छः प्रयुज्यते ॥
स्वार्थे छः प्रत्ययश्चात्र विधीयते च सूत्रतः ।
त्रिगर्तः षष्ठ इत्यत्र वर्गो येषाञ्च वर्तते ॥
त्रिगर्तषष्ठास्ते प्रायो भवन्तीति विभावय ॥
आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी ।
क्रौष्टुकी जालमानिश्च ब्रह्मगुप्तोऽथ जालकिः ॥
दामनेदोमनीयः स्याद् दामनीयौ पदन्तथा ।
औलापेरौलपीयः स्याच्छप्रत्ययविधानतः ॥
त्रिगर्तः कौण्डतश्चात्र परकीयः पदं भवेत् ।
दाण्डकीयश्च साध्येत छप्रत्ययेन पाठकैः ॥

पर्श्वादियौधेयादिभ्योऽणञौ । ५ । ३ । ११७

अण्प्रत्ययश्च पर्श्वादे यौधेयादेरञिष्यते ।

आयुधजीविसङ्घस्य वाचकादितिबुध्यताम् ॥
पर्शोरण् पार्श्वो रूपं यौधेयः स्यादञि कृते ।

अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णाव-
च्छ्रुमदणो यञ् । ५ । ३ । ११८

अभिजितोऽपत्यमित्यर्थे अभिजित इतीष्यते ॥
तदन्ताद्यञि जातेऽत्र आभिजित्यः पदं भवेत् ।
वैदभृत्यस्तथा शालावत्यः शाखावत्य इति ।
शामीवत्य और्णावत्यः श्रौमत्यः स्याद् यञि कृते ॥

अथ तद्राजप्रत्ययाः—

ञ्यादयस्तद्राजाः । ५ । ३ । ११९

पूगाञ्ञ्य इतिप्रारभ्य प्रत्यया ये भवन्ति वै ।
तेषां तद्राजसंज्ञा स्यात् तेनास्त्रियां बहुषु लुक् ॥
प्रत्ययेऽत्र कृते लोपः प्रयोगो लोहितध्वजाः ।
एवंकपोतपाकाश्च कौण्डायनादयः स्मृताः ॥
बहुवचने प्रयुज्यन्ते तद्राजलुकि च कृते ।

पादशतस्य संख्यादे र्वीप्सायां वुन् विधीयते ।५।४।१

संख्यादेः पादशताच्च वीप्सायां वुन् विधीयते ।
पादः पत्स्यात्तद्धितार्थे समासे च विमृश्यताम् ॥
द्वौद्वौ पादौ ददातीति द्विपदिकामिति सिद्ध्यति ।
द्वे द्वे शते ददातीति द्विशतिकामिति तदा ॥
वुन्नन्तन्तु स्त्रियामेव तस्मात् स्त्रीलिङ्गमुच्यते ।
द्वौ द्वौ ददाति मोदकौ स द्विमोदकिकामिह ।
वीप्सायां द्वितीयाऽऽज्ञ कृताऽस्तीति विभाव्यताम् ॥

दण्डव्यवसर्गयोश्च । ५ । ४ । २

दण्डेऽथ व्यवसर्गे च आभ्यां वीप्सां विनैव वुन् ।
द्वौ द्वौ पादौ दण्डितः स द्विपदिकामेव कथ्यते ॥

**स्पष्टीकरणम्—**

अत्र च द्विपदिकाकर्मकर्मकग्रहणविषयीभूतो देवदत्त इति बोधः ।

स्थूलादिभ्यः प्रकारवचने कन् । ५ । ४ ३

प्रकारवचने स्थूलादिभ्यः कन्प्रत्ययो भवेत् ।
जातीयरोऽपवादोऽयं स्थूलकश्चाणुकस्तथा ॥
प्रकारभेद इत्यत्र सादृश्यं कथ्यते बुधैः ।

चञ्चद्बृहतोरुपसंख्यानम् । वा

चञ्चन्नेवात्र चञ्चत्कश्चलनं कर्म यस्य सः ।
बृहद्विशेष एवात्र बृहत्कः कथ्यतां पुनः ।
अथवा मणिविशेष श्चञ्चत्को बृहत्क इह ।
प्रभाविशेषतश्चञ्चन् बृहन्निव च यो भवेत् ॥

सुराया अहौ ।

सुराशब्दादहौ कः स्यात् सुरकः साध्यते ततः ।
केऽणः सूत्रेण ह्रस्वोऽहिः सुरावर्णसदृग् भवेत् ॥

अनत्यन्तगतौ क्तात् । ५ । ४ । ४

अनत्यन्तगतौ क्तात् कश्छिन्नकं भिन्नकं तत ।
ईषच्छिन्नं तथाभिन्नं छिन्नकं भिन्नकं भवेत् ॥

न सामिवचने । ५ । ४ । ५

उपपदे सति सामिपर्याये क्तान्ततो न कन् ।
सामिकृतं भवेदर्धकृतमित्यत्र बुध्यताम् ॥
कन्प्रत्ययं विनारूपमुच्यतां पाठकैरिह ।
एतन्निषेधसामर्थ्यात् स्वार्थे कन् स्यात् क्वचित्पुनः ॥
ज्ञापनाद्बहुतरकं प्रयोगश्च विधीयते ॥

बृहत्या आच्छादने । ५ । ४ । ६

आच्छादने बृहत्याः कन् केऽणो ह्रस्वः प्रवर्त्तते ।
द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका स्मृता ॥

आच्छादनतो भिन्ने बृहती छन्द उच्यते।

अषडक्षाशितङ्ग्वलं कर्मालं पुरुषाध्युत्तरपदात् खः।५।४।७

अषडक्षादिशब्देभ्यः स्वार्थे खः प्रत्ययो भवेत्।
मन्त्रोऽयमषडक्षीणो द्वाभ्यामेव कृतश्च यः॥
आशितङ्गवीनमत्र वनं भवति बुध्यताम्।
आसिताः सन्ति गावोऽस्मिन् विग्रहो मुम् निपातनात्॥
कर्मणेऽलं जनो योऽस्ति सोऽलङ्कर्मीण उच्यते।
प्रतिमल्लस्तु मल्लाय स्यादलं पुरुषीण इति॥
अहमस्मीश्वराधीनः स्वोद्देश्य प्राप्तिकर्मणि।
अन्येऽपि प्रत्ययाः केचिदिष्यन्ते स्वार्थिका इह।
ञ्यादयः प्राग्वुनस्तेहि प्राक्कनस्तमबादयः॥
आमादयश्च जायन्ते समासान्ता इति स्मरेत्।

विभाषाञ्चे रदिक्स्त्रियाम्। ५। ४। ८

अदिगर्थे स्त्रियां वृत्तेरञ्चत्यन्तपदाच्च खः।
विकल्पेनैव कर्तव्यः स्वार्थे च तेन सिद्ध्यति॥
प्राक् = प्राचीनं तथाप्रत्यक् = प्रतीचीनमवाक् पुनः।
अवाचीनमिति प्रोक्तं यथेच्छञ्च प्रयुज्यते॥
निकृष्टप्रतिकृष्टावंरेफयाप्यावमाधमाः।
अर्वन्तमञ्चतीत्यत्र अर्वागर्वाचीनमिति॥
दिशि प्राची प्रतीची स्यादुदीचीनञ्च खे कृते।
प्राचीना ब्राह्मणी शब्दे दिगर्थो नास्ति तेन खः॥

जात्यन्ताच्छ बन्धुनि। ५। ४। ९

जात्यन्तादपि छः प्रोक्तो बन्धुनि जातिव्यञ्जके।
अयं ब्राह्मणजातीयः प्रयोगो दर्शितस्ततः॥
ब्राह्मणत्वमिदं जातिस्तदाधारोऽयमुच्यते।

स्थानान्ताद्विभाषा सस्थानेनेति चेत्। ५। ४।१०

स्थानान्ताद्विभाषा छः सस्थानेन = पदेन चेत्।
स्थानान्तमर्थवद्भाति पितृस्थानीय उच्यते॥

अनुगादिनष्ठक् । ५ । ४ । १३

अनुगादिनष्ठगेव स्यादनुगन्त्यनुगामिनः ।
ततष्ठक् प्रत्यये जाते रूपंस्यादाधुगादिकः ॥

विसारिणो मत्स्ये । ५ । ४ । १६

वैसारिणः प्रयोगोऽयं मत्स्ये विसारिणोऽण् यदा ।

संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् । ५ । ४ ।१७

क्रियाभ्यावृत्तिगणने संख्यायाः कृत्वसुज् भवेत् ।
अभ्यावृत्तेस्तु जन्मार्थः क्रियाजन्मति प्रत्ययः ॥
पञ्चकृत्वोऽथवा सप्तकृत्वो भुङ्क्ते दिनेऽर्भकः ।
भूरिवारानयं भुङ्क्ते कृत्वसुज्नात्र जायते ॥

द्वित्रिचतुर्भ्यः सुच् । ५ । ४ । १८

कृत्वसुचोऽपवादेन एभ्यः सुच् प्रत्ययो भवेत् ।
द्विर्भुङ्क्तेबा स त्रिर्भुङ्क्ते चतुर्भुङ्क्तेऽनित्यो वटुः ॥

एकस्य सकृच्च । ५ । ४ । १९

सकृदादेश एकस्य सुजपि क्रियते ततः ।
सकृद्भुङ्क्ते प्रयोगः स्यात् सुचो लोपोऽत्र जायते ॥

विभाषा बहोर्धाऽविप्रकृष्टकाले । ५ । ४ । २०

बहो र्धा प्रत्ययोऽविप्रकृष्टकाले विभाषया ।
दिनस्य बहुधा भुङ्क्ते शेषे षष्ठीदिनादिह ॥

तत्प्रकृतवचने मयट् । ५ । ४ । २१

मयट् प्राचुर्यवचने भावेऽधिकरणेऽत्र ल्युट् ।
अन्नमयमन्नमयः क्रमादुदाहरेदिह ॥
प्रकृतमन्नमन्नमयं प्राचुर्यमन्नस्य यदि ।
तथाऽपूपमयं वाक्यं यत्रापूपं बहु भवेत् ॥
अन्नमयस्तु यज्ञोऽयमधिकरणकेऽत्र ल्युट् ।
पर्वापूपमयं क्वाद्य ? शर्करा च सिता गता ।

चिन्मयं ब्राह्म इत्यादौ स्वार्थेऽपि मयडिष्यते ॥
मोदकमयमपि तदुभयं वक्तुमर्हति ।
शष्कुलीनाञ्च प्राचुर्यं शाष्कुलिकं तदुच्यते ॥
शष्कुलीमयमेवापि प्रयोगं कुरु स्वेच्छया ।
वचने ल्युट् यदाभावे तदैववेदं प्रवर्तते ॥
यज्ञो मोदकमयोऽत्र स्यादधिकरणे च ल्युट् ।
अथवा मोदकमयो यज्ञोऽयं वक्तुमर्हति ॥

अनन्तावसथेतिहभेषजाञ्ञ्यः । ५ । ४ । २३

अनन्तादिचतुर्भ्योञ्ञ्यः प्रत्ययः स्वार्थबोधने ।
अनन्तएव आनन्त्यः स्वार्थेञ्यप्रत्यये सति ॥
आवसथ्यं भवेद्रूपमावसथाञ् ञ्यति कृते ।
भेषजमेव भैषज्यमैहिह्यमैतिहासिकम् ॥
इतिहेति निपातस्य समुदायोऽइति कृते ।

देवतान्तात् तादर्थ्ये यत् । ५ । ४ । २४

तादर्थ्ये देवतान्ताद् यदग्निदेवत्यमुच्यते ॥
इदमग्निदेवतायै पितृदेवत्यमिष्यते ॥

पादार्घाभ्याञ्च । ५ । ४ । २५

पादार्घाच्च तादर्थ्ये यत्प्रत्ययो विधीयते ।
पादार्थमुदकं पाद्यमर्घ्यमर्घाय कल्पितम् ॥
मूल्ये पूजाविधावर्घः शब्दः कोशेषु दर्शितः ।

नवस्य नू (आदेशः) त्नप् तनप् खाश्च प्रत्यया वक्तव्याः । वा

नवस्य नू पुन स्तस्मात् त्नप् तनप् खाश्च प्रत्ययाः ।
नूत्नं नूतनमित्येवं नवीनमपि साध्यते ॥

नश्च पुराणे प्रात् । वा०

नः प्रत्ययः पुराणे प्रादुपर्युक्तास्त्रयोऽपि च ।
प्रणं प्रत्नञ्च प्रतनं प्रीणं पुराणबोधने ॥

भागरूप नामधेयेभ्यः । वा०

धेयः प्रत्यय आख्यातो भागाद्रूपाच्च नामतः ।
भागधेयं रूपधेयं नामधेयं किमस्ति ते ? ।।

आग्नीध्रसाधारणादञ् । वा०

आग्नीध्रः शरणे रण् भं शैषिके कथितं पुरा ।
तस्मादाग्नीध्रशब्दादाग्नीध्रमेव स्यादञि ।।
रूपभेदो न कश्चिद्वै स्वरभेदस्तु केवलम् ।
साधारणादञि कृते रूपं साधारणं भवेत् ।।
रूपभेदो नचात्रापि स्वरभेदे विशेषता ।
स्त्रियां ङीष् तेन आग्नीध्री साधारणीति जायते ।।

अतिथेर्ञ्यः । ५ । ४ । २६

अतिथेर्ञ्यस्तु तादर्थ्ये आतिथ्यं सत्क्रिया भवेत् ।
अतिथये कृता सेवा आतिथ्यमिति कथ्यते ।।

देवात्तल् । ५ । ४ । २७

देवात्तल् प्रत्ययः स्वार्थे देव एवहि देवता ।

अवेः कः । ५ । ४ २८

अवेः कः प्रत्ययः स्वार्थे अविरेवाविको भवेत् ।

यावादिभ्यः कन् । ५ । ४ । २९

कन् स्याद्यवादि शब्देभ्यो याविको मणिकः स्तथा ।

लोहितान्मणौ । ५ । ४ । ३०

लोहितात्कन् मणावर्थे लोहितिको मणिर्भवेत् ।

वर्जे चानित्ये । ५ । ४ । ३१

वर्णार्थे लोहितात्कन् स्याल्लोहिनिकः क्रुधास्ति सः ।
क्षणादूर्ध्वं पुमान् शान्तः कोपशान्तौ न लोहितः ।।
तस्मादनित्यवर्णोऽत्र नित्ये पूर्वेण कन्विधिः ।

लोहितालिङ्गवाधनं वा । वा०

लोहितिका लोहिनिका कोपे स्यात्लिङ्गवाधनात् ॥

रक्ते । ५ । ४ । ३२

रक्ते लाक्षादिना कन् स्यात् लोहितिकाऽस्ति शाटिका ।
पक्षे लोहिनिका शाही प्रयोगोऽपि विधीयते ॥
एतिक एनिका शाटी प्रयोग उपलक्षणत् ।

कालाच्च । ५ । ४ । ३३

कालादपि च कन् प्रोक्तं मुखं तैलेन कालकम् ।
कालिकस्ते पटो जातः शाटी चेत् कालिका तदा ॥
वर्णोनित्ये तथा रक्ते द्वयमप्यनुवर्तते ॥

विनयादिभ्यष्ठक् । ५ । ४ । ३४

ठग्भवेद् विनयादिभ्यो नञो वैनयिको भवेत् ।
सामयिकस्तु समयात् स्वार्थेऽत्र ठग्विधीयते ॥

उपायो ह्रस्वत्वश्च । ग०

उपायाट्ठक् तथा ह्रस्व औपयिकश्च सिद्ध्यति ।

वाचो व्याहृतार्थायाम् । ५ । ४ । ३५

सन्देशवाग् वाचिकं स्याद् वाचष्ठक् प्रत्यये कृते ।

तद्युक्तात्कर्मणोऽण् । ५ । ४ । ३६

कर्मणोऽण् स्यात् ततो रूपं कर्मैव कार्मणं स्मृतम् ।
श्रुत्वा तु वाचिकं पश्चात् क्रियमाणं यदस्ति तत् ॥

औषधेरजातौ । ५ । ४ । ३७

औषधेरणजातौ स्यादौषधश्च पिवाम्यहम् ।
जातावोषधयः क्षेत्रे रूढा अत्र न भवेत् ॥

प्रज्ञादिभ्यश्च । ५ । ४ ३८

प्रज्ञएव भवेत्प्राज्ञः प्राज्ञी स्त्रियां प्रयुज्यते ।

दैवतो बान्धवश्चादिः स्वार्थेऽणि जायते पुन ॥

मृदस्तिकन् । ५ । ४ । ३९

मृदस्तिकन् भवेत् स्वार्थे मृदेव मृत्तिका भवेत् ।

सस्नौ प्रशंसायाम् । ५ । ४ । ४०

स स्नौ स्यातां प्रशंयायां मृत्सा मृत्स्ना सुमृद् भवेत् ॥

बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ।५।४।४२

कारकाच्च वह्वोरल्पाच्छो वा स्यात् स्वार्थवाचकात् ।
दत्ते बहूनि बहुशस्तथैव पदमल्पशः ।

बह्वल्पार्थान्थमङ्गलामङ्गलवचनम् । वा

मङ्गलामङ्गले वाच्ये बह्वल्पार्थाच्छप्रत्ययः ।
दत्ते बहून्यनिष्टेषु शुभेऽल्पं तत्र नैव शः ॥

संख्यैकवचनाच्च वीप्सायाम् । ५ । ४ । ४३

शः प्रत्ययोऽस्ति वीप्सायां संख्यैकवचनादिह ।
द्वौ द्वौ ददाति द्विशः स माषं मायं च माषशः ॥
द्वयोर्द्वयोरयं स्वामी कारकं न ततो न शः ।

प्रतियोगे पञ्चम्यास्तसिः । ५ । ४ । ४४

प्रतियोगे च पञ्चम्यास्तसिः प्रत्यय इष्यते ।
उदाहरणमेतस्य प्रद्युम्नः कृष्णतः प्रति ॥

आद्यादिभ्य उपसंख्यानम् । वा

आद्यादिभ्योऽपि शब्देभ्यः क्रियते तसिरत्र वै ।
आदितो मध्यतश्चैवं पृष्ठतऽ पार्श्वतो भवेत् ॥
आदौ मध्ये तथा पृष्ठे पार्श्वे भवति विग्रहः ।

अपादाने चाहीयरुहोः । ५ । ४ । ४५

पञ्चमी या जपादाने तदन्तात्तसिरिष्यते ।
हीयमानेऽवरोहे न पञ्चम्यन्तात् तासः क्वचित् ॥
ग्रामतः स समायाति ग्रामादायाति वा भवेत् ।

सूत्रेऽहीय रुहोरुक्त्या निम्नस्थले न प्रत्ययः ॥
स्वर्गात् स हीयते वाक्ये पर्वनादवरोहति ।

अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ।५।४।४६

अकर्तरि तृतीयान्तात् तसि र्वा जायते पुनः ।
अतिग्रहोऽव्यथनं च क्षेपोऽर्थो यदि वर्त्तते ॥
अतिग्रहस्त्वतिक्रम्य ग्रहो भवति बुध्यताम् ।
अव्यथन मचलनं क्षेपो निन्दाऽत्र कथ्यते ॥
चारित्रतोऽति गृह्येत चारित्रेणेतिवा वदेत् ।
चारित्रेणान्यलोकानतिक्रम्यास्ति स भवेत् ।
वृत्तेन व्यथते नायं वृत्ततो व्यथते न सः ॥
निन्दायां वृत्ततः क्षिप्तो वृत्तेन क्षिप्त उच्यते ।
वृत्तेन निन्दितश्चार्थः क्रियतां पाठकैरिह ॥
देवदत्तेन क्षिप्तोऽत्र तृतीया कर्तरि स्मृता ।
तसिस्तस्मान् न जायेत प्रयुञ्जीत विचार्य च ॥

हीयमान पापयोगाच्च । ५ । ४ । ४७

हीयमात्पापयुक्तात् तृतीयान्तादकर्तरि ।
तसिः स्याच्च विकल्पेन वृत्तते हीयते वदेत् ॥
वृत्तेन हीयतेऽपि स्यात् पापो वृत्तेन वृत्ततः ।
अकर्तरीतिपदाभावे देवदत्तेन दीयते ॥
इहापि स्यात्तदर्थश्च सूत्रेऽकर्तरि कथ्यते ।

षष्ठचा व्याश्रये । ५ । ४ । ४८

षष्ठचन्साच्च तसि र्वा स्यान्नानापक्षसमाश्रये ।
अर्जुनतोऽभवन् देवा आदित्याः कर्णतोऽभवन् ॥

अत्रस्पष्टता—

अर्जुनस्य दले देवाः पक्षे कर्णस्य भास्करः ।

रोगाच्चापनयने । ५ । ४ । ४९

चिकित्सायां तसिः कार्यं षष्ठचन्ताद्रोगवाचिनः ।

कुरुप्रवाहिकातोऽस्य रोगापनयनं सखे।

कृभ्वस्तियोगे संपद्यकर्तरि च्विः । ५ । ४ । ५०

कृभ्वस्तियोगमासाद्य च्विः सम्पद्यकर्तरि।
अभूतस्य च तद्भावे जायते च्विरितिस्थितिः ॥ वा०

अस्य च्वौ । ७ । ४ । ३२

अस्य च्वाविति सूत्रेण स्यादवर्णस्य ईरिति।
अकृष्णो यदि कृष्णः स्यात् सम्पद्यते च विग्रहे ॥
कृष्णं करोत्यकृष्णं तदा कृष्णीकरोति सः।
स्यादब्रह्म यदि ब्रह्म ब्रह्मीभवति स जनः ॥
अगङ्गा यदि गङ्गा स्याद् गङ्गीभवति कथ्यते।

अव्ययस्य च्वावीत्वं नेतिवाच्यम् । वा

न च्वावीत्वमव्ययस्य दोषाभूतमहो वदेत्।
दिवाभूता रात्रिरेषा शरच्चन्द्रे विराजते ॥

क्यच्व्योश्च । ६ । ४ । १५२

हलः परस्य लोपः स्यादपत्ययस्य च्वौ परे।
क्येप्रत्ययेऽपि लोपोऽयमुच्यतेऽपत्ययस्य च ॥
भवेदगार्ग्यो गार्ग्यश्चेद् गार्गीभवति कथ्यते।

च्वौ च । ७ । ४ । २६

च्वौपरे पूर्वदीर्घः स्याच्छुचीभवति साध्यते।
पटूस्यादथ साधूस्यान् मात्रीभवति रीङृतः ॥
अव्ययस्यात्र दीर्घो न तन्निर्मूलमुक्तवान्।
स्वस्तीस्यादिति वाच्यं वा स्वतिस्यादिति कथ्यताम् ॥

अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च । ५ । ४ । ५१

एषां लोपस्तथा च्विः स्यादरूकरोति साध्यते।
अन्तवर्णस्य लोपश्च सर्वत्र जायते पदे ॥
अरूकरोति स भृत्य उच्चक्षुकुरुते च सः।
विचेती विरहीकृत्सा विरजीकुरु मे घटम् ॥

श्लो० सि० पू० ३६

विभाषा साति कात्स्न्र्ये । ५ । ४ । ५२

च्विविषयेऽत्र साति र्वा साकल्ये क्रियतामिह ।

सात्पदाद्योः । ८ । ३ । १११

सात्पदाद्योरिणः पश्चात् सस्य षत्वं न जायते ।
कृत्स्नं शस्त्रं यदा अग्निः सम्पद्यते तदाऽग्निसात् ॥
अग्निदग्धं यदा शस्त्रं सम्पूर्णं स्यात्तदोच्यते ।
अग्नीभवति वाक्येऽस्मिन् प्रत्ययश्चिर्वाविधीयते ॥
एकदेशस्य दाहे तु साति नैव विधीयते ।

अभिविधौ संपदा च । ५ । ४ । ५३

कृभ्वस्तिभिश्च संयोगे साति र्व्याप्तौ विभाषया ।
अग्निसात् संपद्यते शस्त्रमग्निसाद्भवतीति वा ॥
जलसात्संपद्यते वा जलीभवति शर्करा ।
व्याप्तिरविविधि र्यत्र तत्रैव सातिरिष्यते ॥
पूर्वसूत्रेण कात्स्न्र्ये सादित्येवं भेद ऊह्यताम् ।
सर्वावयवतो भेदः कात्स्न्र्यं वस्तु च कथ्यते ॥
अल्पावयवतो भेदस्त्वभिविधिरिति भवेत् ।

तदधीनवचने । ५ । ४ । ५४

कृभ्वस्तिभिश्च संयोगे संपदायोगतस्तथा ।
सातिः स्यात्तदधीनवचने सर्वदा पुनः ॥
क्रुद्धो भूपस्तु चौरस्य राजसात्कुरुते धनम् ।

देये त्रा । ५ । ४ । ५५

तदधीने च देये त्रा सातिश्चापि विधीयते ।
कृभ्वादियोग इत्येव विप्रत्राकुर्वन्ति स्वम् ॥
विप्राधीनरिदं देयं स्वं करोतीतिविग्रहः ।
विप्रत्रासंपद्यते स्वं विप्रसात्कुर्वन्ति वद ॥

देवमनुष्य पुरुष पुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् । ५ । ४ । ५६

देवमनुष्य पुरुषात् पुरुमर्त्यद्वयादपि ।
द्वितीयान्तात् तथा सप्तम्यन्तात् त्रा बहुलं भवेत् ॥
देवत्रावन्दते रे मे देवत्रारमते वद ।
मनुष्यत्रा गच्छति सः मनुष्यानगच्छतीति वा ।
मनुष्यत्रा वसतिसः मनुष्येवसतीति वा ॥
पुरुषत्रा पुरुत्रा वा गच्छति वसतीति सः ।
बहुलादन्यतोऽपि स्याद् बहुत्रा जीवतो मनः ॥

अव्यक्तानुकरणादद्व्यजवरार्धादनितौ डाच् ।
५ । ४ । ५७

अव्यक्तानुकरणे डाच् प्रत्ययोऽनितौ रे० ।
अनेकाचश्च जायेत कृभ्वस्तीनाञ्च योगतः ॥

डाचि विबक्षिते द्वे बहुलम् । वा

डाचि च प्रत्यये जाते बहुलं द्वित्वमिष्यते ।

नित्यमाम्रेडिते डाचीति वक्तव्यम् । वा

आम्रेडितञ्च यड्डाचि तस्मिन् परे च पूर्वयोः ।
वर्णयोः पररूपं स्यात् तपयोः पस्ततो भवेत् ।
पटत् पटत् करोतीति पटपटाकरोति सः ॥
दृषत्करोति वाक्येऽस्मिन् अव्यक्तानुकरणं नहि ।
श्रत्करोति प्रयोगेऽत्र अनेकाच्त्वं न विद्यते ॥
तस्माड्डाजुभयो नैव जायते ज्ञायतामिदम् ।
पटितिकरोतिवाक्ये इतिपरं ततो न डाच् ॥

कृञो द्वितीय तृतीय शम्ब बीजात् कृषौ डाच् ।
५ । ४ । ५८

कृञो योगे द्वितीयादि शब्दाड्डाच् कर्षणार्थके ।
द्वितीयं वा तृतीयं वा कर्षणं कुरुते यदा ॥

द्वितीया च तृतीया करोति डाचि प्रत्यये।
अनुलोमं कृष्टं क्षेत्रं प्रतिलोमं करोति यत्॥
शम्बाकरोति स क्षेत्रं प्रयोगो जायते कृषौ।
बीजेन सह कर्षति बीजाकरोति हालिकः॥

संख्यायाश्च गुणान्तायाः। ५। ४। ५९

संख्यायाश्च गुणान्तायाः कृञो योगे कृषौ च डाच्।
द्विगुणा करोति क्षेत्रं द्विगुणे कर्षणे भवेत्॥

समयाच्च यापनात्। ५। ४। ६०

समयाद् यापनायां डाच् कृञोयोगे सदा भवेत्।
समया करोति मे भृत्यः कालं यापयति शठः॥

सपत्रनिष्पत्रादतिव्यथने। ५। ४। ६१

सपत्रादथ निष्पत्राद् व्यथने डाऽतिपूर्वके।
सपत्राकुरुते व्याघ्रं निष्पत्रा कुरुते मृगम्॥
सपुङ्खशर प्रवेशं कृत्वा देहे मृगस्य च।
यदाऽन्य पार्श्वतस्तस्य निर्गमनं तदा भवेत्॥

निष्कुलान्निष्कोषणे। ५। ४। ६२

निष्कुलादपि डाच् कार्यो निष्कोषणार्थं बोधने।
निष्कुला कुरुते भोक्तुं दाडिमं मृदुलो मम॥

सुखप्रियानुलोम्ये। ५। ४। ६३

आनुलोम्ये च तात्पर्ये डाच्प्रत्ययः सुखप्रियात्।
सुखाकरोति तातं सः प्रियाकरोति मातरम्॥

दुःखात्प्रातिलोम्ये। ६। ४। ६४

प्रातिलोम्ये च दुःखात् डाच् दुःखाकरोति मां खलः।

शूलात् पाके। ५। ४। ६५

शूलात् डाच् जायते पाके मांसं शूलाकरोति सः।

सत्यादशपथे । ५ । ४ । ६६

अशपथे भवेत् डाज् वै वणिक् सत्याकरोति च।
क्रेतव्यमितियद्द्रव्यं तन्मूल्यं वक्ति सत्यतः ॥

मद्रात् परिवापणे । ५ । ४ । ६७

परिवापण तात्पर्ये मद्रात् डाज् जायते पुनः।
मद्राकरोति बालं सः संस्करोति च मुण्डनात् ॥

भद्राच्चेति वक्तव्यम् । वा ।

भद्राकरोति तीर्थे स्वं डाज् भवेदिह भद्रतः।
परिवापणभिन्नेऽर्थे मद्रं भद्रं करोति सः ॥

॥ इति तद्राज प्रत्ययप्रकरणम् ॥

# अथ तद्धितेषु द्विरुक्ति प्रकरणम्

सर्वस्य द्वे । ८ । १ । ४

सर्वस्य द्वित्वं क्रियते प्रयोगे,
वीप्साऽथवाऽभीक्ष्ण्यमिदं यदि स्यात् ।
आभीक्ष्यमार्थस्तु भवेत्तिङन्ते,
तथा कृदन्तेऽव्ययसंज्ञकेऽपि ॥

नित्यवाप्सयोः । ८ । ५ । ४

सर्वस्य द्वे मुनिः प्राह द्योतययो र्नित्यवीप्सयोः ।
द्वित्वं पदस्य कर्तव्यं यथोचितं विचार्य च ॥
तस्मात् पचतिपचति भुक्त्वाभुक्त्वौदनं गतः ।
आभीक्ष्ण्ये द्वयमेतद्धि द्वित्वोदाहरणं भवेत् ॥
वृक्षंवृक्षं स सिञ्चति रमणीयं पुरं पुरम् ।
वीप्सायां द्वित्वमत्रास्ति वीप्सा व्याप्तिरिहोच्यते ॥

परेर्वर्जने । ८ । १ । ५

वर्जनार्थे परेर्द्वित्वं मेघोऽवर्षत् परि परि ।
वङ्गेभ्यः प्रयोगेऽस्मिन् तस्माद् द्वित्वं विधीयते ॥
वङ्गदेशं परित्यज्य देवो वर्षति वुध्यताम् ।

परेर्वर्जने वा वचनम् । वा

वर्षति परिवङ्गेभ्यः पक्षे द्वित्वं विनाऽपि च ।

उपर्यध्यधसः सामींप्ये । ८ । १ । ७

उपर्यध्यधसो द्वित्वं सामीप्यार्थे विधीयते ।
उपर्युपरि ग्रामं वै ग्रामाद् ग्रामः समीपतः ॥
सुखमध्यधि लोकेऽत्र दुःखं सुखादनन्तरम् ।
अधोऽधोलोकमित्यस्य लोकस्याधः पुनश्च सः ॥

वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्संनेषु । ८ । १ । ८

असूयायां संमतौ च कोपे कुत्सनभर्त्संने ।
सम्बोधने च वाक्यस्य द्वित्वमादिपदस्य स्यात् ॥
सुन्दर सुन्दर व्यर्थं सौन्दर्यं विद्यते तव ।
वन्द्योऽसि देव देव संमतौ द्वित्वमत्र वै ॥
दुर्विनीत दुर्विनीत इदानीं ज्ञास्यसि क्रुधि ।
वृथा धानुष्क धानुष्क धनुरित्यस्य कुत्सनम् ॥
भर्त्संने चोर चोर त्वां घातायिष्यामि कथ्यताम् ।

एकं बहुव्रीहिवत् । ८ । १ । ९

बहुव्रीहि वदेकं स्यात् पदं द्विरुक्ति संस्थितम् ।
तस्मात् सुब्लोप कार्येण सह पुंवद् विधीयते ॥
एकैकमक्षरं वाच्य मेकैकयाऽहुत्याऽर्चितः ।
एकैकस्मै फलं देहि देयं वा भोजनं जलम् ॥

आबाधे च । ८ । १ । १०

आबाधस्य च पीडार्ऽथस्तदर्थे द्वित्व मुच्यते ।
तद् बहुव्रीहिवत् कार्यं गतगतः प्रियो मम ॥

कर्मधारयवदुत्तरेण । ८ । १ । ११

इतः परेषु द्वित्वेषु कर्मधारयवद् भवेत् ।
प्रयोजनश्च सुब्लोपः पुंवद्भावादिरिष्यति ॥

प्रकारे गुणवचनस्य । ८ । १ । १२

प्रकारे गुणवचनं हि द्वित्वं प्राप्नोति तत्पुनः ।
कर्मधारयवद् भूत्वा पटु पट्वी पटुपटुः ॥
पुंवद्भावेन सुब्लोपात् साधनं क्रियतेऽस्य वै ।
पटु सदृश ईषत् पटुरर्थो विधियताम् ॥
गुणोपसर्जन द्रव्य वाचिनः केवलस्य च ।
गुणवाचिनस्तु बोध स्तस्माद्रूपमधस्तनम् ॥

शुक्ल शुक्लमस्ति रूपं शुक्ल शुक्लः पटोऽस्ति ते।

आनुपूर्व्ये द्वे वाच्ये। वा

आनुपूर्व्ये भवेद् द्वित्वं मूले मूले दृढस्तरुः।

संभ्रमेण प्रवृत्तौ यथेष्ट मनेकधा प्रयोगो न्यायसिद्धः। वा

संभ्रमेण प्रयोगे तु यथेष्ठं स्यादनेकधा।
द्वित्वं त्रित्वं चतुःकृत्वः प्रयोगः क्रियते जनैः॥
सर्पः सर्पः सर्प एवं बुध्यस्व बुध्यस्व इति।

क्रियासमभिहारे च। वा

क्रियासमभिहारेऽपि द्वित्वं कृत्वा प्रयुज्यते।
पूर्वसूत्रेण सिद्धोऽपि भृशार्थे वचनं नवम्॥
लुनीहि लुनीहीत्येव मयं लुनाति दर्शितम्।

कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्। वा

कर्मणो व्यतिहारेऽत्र सर्वनाम पदस्य द्विः।
समासवच्च बहुलं परस्यान्यस्य किन्तु न॥

असमासवद्भावे पूर्वपदस्य सुपः सुर्वक्तव्यः। वा

यत्रासमासवद्भाव स्तत्रपूर्वे सुपश्च सुः।
अन्योऽन्यं नमन्ति विप्राः अन्योन्यावन्योन्यानपि॥
अन्योन्येन कृतं कार्यमन्योन्यस्मै प्रदीयताम्।
एवं परस्परं वाच्यं परस्परेण तेन वा॥
इतरेतरमितरे तरेणेत्यादि कथ्यताम्।

स्त्री नपुंसकयो रुत्तरपदस्थाया विभक्तेराम्भावो वक्तव्यः। वा

स्त्रियां क्लीवे च द्वित्वस्य परभागे स्थितं पदम्।
यदस्ति तद्विभक्तेराम् भावो भवति तेन हि॥
अन्योन्यामन्योन्यं स्त्रियाविमे च पश्यतः।
इतरेतरामितरेतरमिमे भोजयतः कुले॥
परस्परां परस्परमिमे कुलेऽत्र रक्षतः।
आमादेशो द्वितीयाया एव भाष्यमतं स्थितम्॥

तस्मात् तृतीयादिरूपे पुंवद्रूपं प्रयुज्यताम् ।
अन्येषां मतमाश्रित्य आम्सर्वत्र विधीयते ॥
उदाहरणमेतस्य दिङ्मात्रदर्शनं कृतम् ।
दलद्वयेऽपि टाबभावः क्लीबे चाड्विरहः स्वमोः ।
समासे सोरलुक्चेति सिद्धं बाहुलकात् त्रयम् ॥
तथाहीति वचोद्वारा भट्टोजिदीक्षितोऽवदत् ।
अन्यन्यश्च परस्परं टापं विना प्रदर्शितम् ॥
अन्योन्यमितरेतरमद्डादेशं विना धृतम् ।
अन्योन्यसंसक्तमहस्तथाऽन्योन्याश्रयः स्थले ॥
परस्पराक्षिसादृश्यमित्यादौ सोर्न लुग्विधिः ।
सर्वं बाहुलकादेव साधितं कौमुदीकृता ॥

अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् । ८ । १ । १३

द्वित्वं वा प्रियसुखयोरकृच्छ्रार्थे विराजिते ।
प्रियप्रियेण दत्ते सः प्रियेण वा ददाति सः ॥
सुखं सुखेन दातव्यं सुखेन वा ददाति सः ।
महोदारः प्रियं वस्तु यच्छति कष्टमन्तरा ॥
तदित्थं कथ्यते वाक्यं दत्ते प्रियप्रियेण सः ।

यथास्वे यथायथम् । ८ । १ । १४

यथायथं यथास्वे स्याद् यथा स्वभावबोधने ।
यथाशब्दस्य द्वित्वेन सह क्लीबं निपात्यते ॥

द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु । ८ । १ । १५

रहस्यादिषु वाच्येषु द्वन्द्वमेतन्निपात्यते ।

द्वन्द्वशब्दसिद्धिप्रकारः—

द्वौ द्वौ पदं समुचार्य द्वि औ द्वि औ इति स्थितौ ।
कर्मधारयवद्भावः सुब्लुक् ततोऽत्र जायते ॥
पूर्वपदावयवेकारवर्णस्याम् जायते ततः ।
उत्तरपदावयवेकारवर्णस्यात्वञ्च क्लीबता ॥
सर्वमेतन्निपातेन द्वन्द्वमित्यस्य साधने ।

**अथ प्रयोगः—**

द्वन्द्वं मन्त्रयते मित्रं रहस्यमिति बुध्यताम् ।
द्वन्द्वं मिथुनयन्तीति मर्यादाभङ्गबोधनम् ।
द्वन्द्वं भवन्ति व्युत्क्रान्ता द्विवर्गे संस्थिता इमे ॥
द्वन्द्वं यज्ञेषु पात्राणि प्रयुनक्ति पुरोहितः ।
सङ्कर्षणवासुदेवौ द्वन्द्वमत्राभिव्यक्तिकम् ॥
साहचर्यमभिव्यक्ति ज्ञायतां भवता सदा ।
भगवत्पाणिनेः शास्त्रं व्याकरणं मुखं श्रुतेः ॥
श्लोकबद्धं सुरेशेन मैथिलेन कृतं नवम् ।

नेपाले धर्मपाले प्रथितमहुतरीमण्डले ग्रामसाढा
तद्वासी श्रीसुरेशः सकलजनमुदे ग्रन्थरत्नं प्रणीय ।
दत्ते धत्ते नतः सन् सहृदयविदुषामग्रतस्तन्निरीक्ष्य
साशीर्वादं प्रसादं वितरतु मनसाऽधीतिने व्याकृतौ मे ॥

**॥ इति श्रीजयदेवझातनुजन्मना श्रीसुरेशझाशर्मणा सांढ़ा ग्रामनिवासि कृतायां श्लोकसिद्धान्तकौमुद्यां तद्धितेषु द्विरुक्तिप्रकरणं समाप्तम् ॥**

**❀ पूर्वार्द्धं समाप्तम् ❀**

॥ ॐ ॥



# अकारादिसूत्रानुक्रमणिका

**ज**



**झ**



**ञ**



**ट**



**ठ**



**ड**

फ



ब

भ



म

## य

## श

ष



स

ह

# वार्तिकगणसूत्रपरिभाषाणां सूची

## अ

ख



ग

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| नृत्तावसाने-। | नृत्तावसाने । | १ | १८ |
| तत्रैकशेषेण चेत्यादि- हलोलकारस्य च लोप आस्ते। | हलोऽन्त्यमित्स्यादिति बुध्यतेऽर्थः स्तेनैव सर्वं खलु सङ्गतं स्यात् ॥ | २ | २६ |
| पञ्चव | पञ्चैव । | ३ | २५ |
| प्रयत्न | प्रयत्नं । | ५ | १४ |
| दीर्घाभवद् । | दीर्घाभावाद् । | ५ | १९ |
| २-पङ्क्तेः पश्चात् त्रुटितम् | नासिकाऽनुस्वारस्य । | ६ | २ |
| पञ्चव | पञ्चैव | ६ | ६ |
| मुखप्रदे मध्ये | मुखप्रदेश मध्ये । | ६ | ११ |
| सावण्य वाच्यम | सावर्ण्यं वाच्यम् । | ८ | ६ |
| ग्रहण | ग्रहणं । | ८ | १३ |
| उद्दिद्वा | उदिच्च । | ८ | १४ |
| सावर्ण्यं वारणं | सावर्ण्यवारणं । | ९ | ८ |
| यत्रोपपद संज्ञा | अत्रोपपदसंज्ञा । | १० | ११ |
| प्रपरा समावानु | प्रपरा समवानु । | १० | १२ |
| प्रत्युदुपाभिप्रति | प्रत्युदुपाभि परि | १० | १३ |
| विभासाश्वेरि | विभाषाश्वेरिति । | १० | १६ |
| गुरु शंज्ञकम् | गुरु संज्ञकम् । | ११ | १८ |
| दीर्घोकारस्य | दीर्घैकारस्य । | १६ | १४ |
| तृवर्णस्य | लृवर्णस्य । | १६ | २९ |
| परश्चोहः | परश्चोह । | १८ | २४ |
| ओमाङोश्च ।६।९४ | ओमाङोश्च ।६।१।९४ | २१ | २४ |
| परो वर्णस्य । | यरो वर्णस्य । | २२ | १४ |
| अत्र त्रुटिरस्तिसूत्रस्य | अचः परस्मिन् पूर्वविधौ । | २२ | २० |
| विधावेव | विधावेवं । | २३ | १ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| अत्र सूत्रत्रुटिः | अदर्शनं लोपः ।१।१।६० | २३ | ६ |
| अवावै | अवावौ | २४ | २६ |
| प्लुत प्रगृह्या सूत्रे | अत्र सूत्रसंख्या ।१।१।१२५ | २९ | १ |
| विकल्पकः | विकल्पतः । | २८ | २० |
| प्रयुज्यते वा | प्रयुज्यते । वा | २८ | २४ |
| ॠषि परे | ॠति परे । | २९ | २ |
| ईदूदेद्द्विवचनं प्रगृह्यम् | ईदूदेद्द्विवचनं प्रगृह्यम् ।१।१।१० | ३० | ११ |
| ओत् | ओत् ।१।१।१५ | ३१ | ३ |
| ऊञश्च ओँ | ऊञश्च ऊँ | ३१ | १३ |
| किम्बुक्तं | किम्वुक्तम् | ३१ | १७ |
| अणो प्रगृह्यस्य | अणः प्रगृह्यस्यानुनासिकाः । ८।४।५७ | ३२ | ११ |
| स्युर्झसि | स्युर्झशि । | ३४ | १६ |
| अत्र सूत्राङ्कः | ८।४।४५ | ३४ | २१ |
| झलां चर्त्वे | झलां चर्त्वं । | ३५ | २४ |
| नश्चापदान्तस्यझलि | नश्चापदान्तस्य झलि ।८।३।२४ | ३६ | ४ |
| वा पदान्तस्य | वा पदान्तस्य ।८।४।५९ | ३६ | २१ |
| मो राजिसमः क्वौ | मोराजि समः क्वौ ।२।३।२५ | ३७ | १ |
| विकल्पतः | स्वरस्य च । | ३८ | १८ |
| त्रिसकारकरूपाणि चत्वारि | त्रिसकारकरूपेद्वे द्वित्वेन | ३९ | ५ |
| शार्ङ्गिशिलुन्धि | शार्ङ्गि शिलुन्धि | ३६ | ५ |
| ओमाङोश्च | आङ्माङोश्च । | ४० | ११ |
| तिरसोऽन्यतरस्याम् | तिरसोऽन्यतरस्याम् ।८।३।४२ | ४२ | १९ |
| अत्र सूत्रं त्रुटितम् | नादिचि ।६।१।१०४ पूर्वसवर्णदीर्घोन सवर्णादिचि च परे । | ४४ | १५ |
| षष्ठ पङ्क्तेः पश्चात् | व्योर्लघु प्रयत्नतरः शाकटायनस्य ।८।३।१८ | ४५ | ६ |
| भो विज्जनं | भो विद्वज्जन । | ४५ | १७ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| उञि च पदे | उञि च पदे ।८।३।२१ | ४५ | २० |
| प्रत्यय इष्यते | प्रत्ययो भवेत् । | ४९ | १५ |
| प्रथम पङ्क्तेः पश्चात् त्रुटिः | सर्वादीनि सर्वनामानि ।१।१।२७ | ५५ | ५ |
| विभाषाया: प्रकरणे | सर्वनामभवेत् संज्ञा । | ५७ | १६ |
| उत्तरश्च दिग्बोधे | उत्तरश्चात्र दिग्बोधे । | ५८ | १७ |
| पूर्वस्मिन् वस् | पूर्वस्मिन् वस । | ६० | १८ |
| मासस्यान्तिममासकारस्य | मासस्यान्तिमसकारस्य । | ६३ | ९ |
| क्त्वः श्नः आदि | क्त्वः श्न आदि । | ६५ | ३१ |
| पङ्क्तेः पश्चात् सूत्रत्रुटिः | अचोऽञ्णिति ।७।२।११५ अजान्ताङ्गस्य वृद्धिः स्यात् ञ्णिति च प्रत्यये परे । | ६६ | १४ |
| ततः परम | ततः परम् । | ६९ | ५ |
| रादि स्यात् | रिंति क्रमः । | ६९ | २८ |
| जश्शोलुक् | जश्शसोलु॑क् । | ७१ | ९ |
| सिद्धयति | प्रसिद्धयति । | ७१ | २६ |
| लोभि | लोमि । | ७२ | २० |
| पात प्रमी | वात प्रमी० | ७३ | २१ |
| एरियं | ऐरियङ् । | ७५ | १६ |
| सादृश्यादेरियं | सादृश्यादेरियङ् | ७४ | १७ |
| इयं कार्यमजादौ | इयङ्कार्यमजादौ । | ७९ | १ |
| शुष्किभ्यां शुष्किभिः | शुष्कीभ्यां शुष्कीभिः । | ८० | २ |
| पङ्क्तेः पश्चात्सूत्रत्रुटिः | ऋत उत् ।६।१।१११ | ८२ | १४ |
| वाचकत्वेन | वाचकत्वेऽपि । | ८७ | २२ |
| प्रोच्यः | प्रोच्य । | ८९ | ६ |
| त्रातीर्भ्यांञ्च | तिरातीर्भ्यांञ्च । | ८९ | १२ |
| लवौ लवः लवं लवौ | लावौ लावः लावं लावौ । | ९२ | १० |
| द्यावं द्यावौ द्यावः | द्यां द्यावौ द्या इति । | ९२ | १४ |
| द्यौः द्योः | द्योः द्योः । | ९२ | १४ |
| औतोऽम् | ओतोऽम् । | ९२ | २४ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| रत्नानि भवन्ति | आवं विना भवन्ति वै। | ६३ | १ |
| षोऽन्तादेश | षोऽन्तादेशश्च। | ९६ | १४ |
| ढस्य चः | ढस्य च। | ६६ | १९ |
| सुष्टु | सुष्ठु। | १०४ | १४ |
| निमित्ताच्च | निमित्तात्। | १०६ | ९ |
| ऋत्रेभ्योङीप् | ऋन्नेभ्यो ङीप्। | ,, | २७ |
| अद्डतरादिभ्य पञ्चभ्यः | अद्डतरादिभ्यः पञ्चभ्यः। | १११ | १ |
| १९-पङ्क्तेः पश्चात्सूत्रत्रुटिः | जश्शसोः शिः ।१।१४२ जश्शसोः शिर्भवेत् क्लीवे शकार इद् भवेदिह ॥ | १०६ | १६ |
| मधुक् पद। | धुक् पदम् | ११७ | २१ |
| स्यात | स्यात् | १२९ | २६ |
| युग् युञ्जौ | युङ् युञ्जौ। | १३२ | ४ |
| लुयुजा | सुयुजा। | ,, | १० |
| वरयोर्दीर्घ | परयोर्दीर्घ | ,, | २१ |
| विश्वसृऽभिः | विश्वसृड्भिः | १३३ | २४ |
| उपमर्जनत्वात् | उपसर्जनत्वात्। | १३५ | १२ |
| मान्तस्व | मान्तस्य। | १३७ | १३ |
| साधय क्रमात् | साधयत क्रमात्। | ,, | २४ |
| मसिमह्यं | मतिमह्यं। | १३८ | ५ |
| तव मम | तवममौ। | ,, | १६ |
| त्वत | त्वत्। | १३९ | १३ |
| अति यूथं | अतियूयं | ,, | २६ |
| यथाकार्यमग्रै | यथाकार्यमग्रसूत्रे। | १४० | २३ |
| रूपस्व | रूपस्य | १४१ | ६ |
| कथं त्वां मामवेन्नहि | कथं त्वां वा न मा मवेत्। | १४२ | ५ |
| सम्यच् शब्दः | सम्यञ्च् शब्दः। | १४६ | ११ |
| तथा समीचैः | तथा समीचः। | ,, | १६ |
| प्ररुरणे | प्रकरणे। | १५० | १३ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| क्विनन्तः कजन्तश्च | क्विन्नन्तः कञन्तश्च । | १५१ | १४ |
| दृग् दृशोश्च | दृग् दृशयोः | ,, | २१ |
| क्विप् | क्विन् । | १५२ | १९ |
| कर्तमिच्छति | कर्तुमिच्छति । | १५४ | ७ |
| दमेर्डो सिः | दमेर्डोसिः । | ,, | १५ |
| अपोभिः | अपोभि ।७।४।४८ | १६४ | १७ |
| प्ययं | व्ययं । | १७८ | १० |
| आपश्चैव | आपञ्चैव । | १७९ | ७ |
| अतिञ्चैसौ | अत्युच्चैसौ । | ,, | ५ |
| सुदि | शुदि | १८० | १२ |
| पूरणे | प्रपूरणे । | १८१ | ३ |
| पिण्डम्यः | पिण्डेभ्यः । | १८३ | ११ |
| द्वैव्याऽत्र | दैव्याऽत्र । | १८९ | १० |
| पलं सुवर्णः | पलं सुवर्णा | १९० | २३ |
| कुसितायी | कुसितायी । | १९२ | २३ |
| प्रयुज्यये | प्रयुज्यते । | ,, | २२ |
| प्रक्षतो | पक्षतो । | ,, | २६ |
| क्लमेके | क्नमेके । | १९३ | १० |
| क्रथं | कथं | १९४ | २१ |
| मपिकर्ता | मणिकर्ता । | २०९ | ११ |
| वृषतं | वृषलं । | २१४ | २४ |
| सुतीक्ष्णाः | सुतीक्ष्णः । | २१६ | २४ |
| इत्थंभूतलक्षणेः | इत्थंभूतलक्षणे । | २१७ | २९ |
| सूवानां | सूयानां । | २२२ | ४ |
| विलोम्यताम् | विलोक्यताम् । | ,, | ७ |
| क्लृत्यर्थक | क्लृप्त्यर्थक । | २२३ | १४ |
| विधियताम् | विधीयताम् । | २२४ | १४ |
| प्रत्युज्यताम् | प्रयुज्यताम् । | २२८ | ६ |
| रन्याराদित | अन्यारादित | २२९ | १ |
| जपपरिवर्जने | अपपरिवर्जने । | ,, | १८ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| स्व स्वानी | स्वस्वामी | २३१ | ३ |
| अधीगर्थदयेशां | अधिगर्थदयेशां | २३३ | १३ |
| सोमिकरणे | सोऽधिकरण | २३७ | ४ |
| अमांधुर्मातुले | असाधुर्मातुले | ,, | २१ |
| हरिणं हन्तीति | श्रृङ्गे हरिणं हन्तीति | २३८ | ५ |
| साक्षि । प्रति भू | साक्षि प्रतिभू । | २३८ | २७ |
| सतमो | सतमी | २३९ | १४ |
| कस्मिन्नेय | कस्मिन्नेव । | २४० | ४ |
| बुद्धताम् | बुध्यताम् । | २४१ | ७ |
| उपसर्जनस्य | उपसर्जनं । | २४३ | १७ |
| २४–पङ्क्तेः पश्चात् सूत्रत्रुटिः | अव्ययीभावः ।२।१।५ इत्यधिकृत्य | २४३ | २४ |
| भवेद | भवेद् | २४४ | २७ |
| ७–पङ्क्तेः पश्चात्सूत्रत्रुटिः | एकविभक्तिचापूर्वनिपाते । १।२।४४ | ,, | ७ |
| कात्वेऽर्थे | कालार्थे । | २४५ | १७ |
| अव्ययोभावे | अव्ययीभावे | ,, | १४ |
| सादृशमिति | सादृश्यमिति । | ,, | २३ |
| अवपरिवहि | अपपरिवहि । | २४६ | २३ |
| मवेत | भवेत् । | २४७ | १९ |
| पारगङ्गात् | पारेगङ्गात् । | ,, | २३ |
| भारद्वाज | भारद्वाजा । | २४८ | २ |
| परिकीर्तिताः | परिकीर्तितः । | ,, | ५ |
| उपजसं | उपजरसं । | ,, | १९ |
| एवमत्र | एवमन्न | २५१ | ३ |
| स्नामिशब्दः | सामिशब्दः | ,, | ११ |
| ममस्यति | समस्यति । | २५२ | २४ |
| व्रकभीतो | वृकभीतयः । | २५२ | १७ |
| सुखादयेत | सुखादपेत । | ,, | २४ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| किम्वा | किम्वा। | २५४ | १ |
| इदमस्य | इध्मस्य। | ,, | १८ |
| छालक | द्दालक | २५६ | ८ |
| पूर्वापराधोत्तर | पूर्वापराधरोत्तर | ,, | ११ |
| जीविका पन्नोः | जीविकापन्नो। | २५७ | १० |
| पुराणकेवलाः | पुराण नव केवलाः | २५९ | ६ |
| करणे | करेण च | ,, | ७ |
| काम मतीति | कामशमीति। | ,, | १३ |
| षट् पदार्थोः | षट् पदार्थे। | ,, | १६ |
| प्रत्ययैश्च | प्रत्ययश्च। | ,, | २९ |
| पङ्क्तेः पूर्वं सूत्रत्रुटिः | गोरतद्धितलुकि।४।४।९२ गोऽन्तात्तत्पुरुषाट्टच् स्यात् तद्धिते लुकि नैव च पञ्चगावो धनं यस्य सोऽस्ति पञ्चगवधनः। | २६० | १ |
| ग्रोशब्दात् | गोशब्दाच्च। | २६० | ६ |
| दुर्दुरूढोः | दुर्दुरूढो। | ,, | २४ |
| कर्तुमेत् | कर्तुमेतत्। | ,, | २६ |
| शब्दा | शब्दो। | २६१ | ७ |
| पुरुष व्याघ्रोः | पुरुष व्याघ्रो। | ,, | ११ |
| तन्न दन्न वनं | तन्नन्दनवनं | ,, | २२ |
| सपरार्द्धं | स पश्चार्द्धं। | २६२ | १५ |
| सपद्य | सपद्येव। | २६३ | २५ |
| तत्पाठकैरिह | पाठकैरिह। | २६८ | २३ |
| वच्छोद्य | अच्छोद्य। | ,, | २५ |
| पुरुषों | पुरुषो। | २७० | २० |
| योंहि | यो हि। | ,, | २३ |
| अति क्रान्तो | अति क्रान्तो। | ,, | २७ |
| क्रुण्णाद्यर्थें | क्रुष्टाद्यर्थें। | २७१ | २ |
| पूर्वरात्रेस्तु | पूर्वः रात्रेस्तु। | २७३ | ४ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| द्वयहस्तथा | द्वयहस्तथा । | २७३ | २७ |
| प्रयुज्यते | प्रयुज्यन्ते निजेच्छया । | २७८ | १३ |
| शूद्रभार्यः | शूद्राभार्यः । | २८९ | ३ |
| दिशोऽन्तरात्वं | दिशोऽन्तरालं । | ,, | २५ |
| तेनेदमिति | तेनेदमिति च । | २९० | २ |
| वहु | बहु । | २९१ | ३ |
| ङच विना | ङचं विना । | ,, | ४ |
| काष्ठधानादि शंयकं | काष्ठंधान्यादिक्षेपकम् । | ,, | २० |
| उभये हस्ति | उभया हस्ति । | २९५ | ४ |
| रनङ्गादेशः | रनङ्ङादेशः | ,, | १४ |
| वौध्यः | बोध्यः । | २९७ | २५ |
| पूर्णश्च ककुदे | पूर्णश्च ककुदं । | ,, | २९ |
| भ्रातृशब्दात्त | भ्रातृशब्दात्तु । | ३०० | ५ |
| निष्ठा सप्तमी | निष्ठा च सप्तमी । | ३०१ | १७ |
| नदे | नवे । | ३०१ | १९ |
| समाहारो | समाहारे | ३०३ | १२ |
| धर्मार्थों | धर्मार्थौं | ,, | २४ |
| अजाद्य दन्तकस्य | अजाद्यन्तमदन्तक | ३०४ | ८ |
| दक्तुमर्हति | वक्तुमर्हति । | ,, | १४ |
| लुक् | लुङ् | ३०५ | १४ |
| रनपुंसकम् | रनपुंसकम् । | ३०५ | १७ |
| काकोलूकश्च | काकोलुकश्च । | ३०६ | १८ |
| वहिष्कृत | वहिष्कृता | ,, | २७ |
| विरोधेन | विरोधे वा । | ३०७ | २५ |
| रहोऽन्दवरहसं | रहोऽन्ववरहसं | ३२१ | १ |
| तृतोयाया | तृतीयाया | ३२३ | १९ |
| अज्ञायिनि | आज्ञायिनि । | ३२४ | १० |
| ह्यरसि लोमा | ह्यु रसिलोमा । | ३२५ | २७ |
| परेश्च वा | परेऽत्र वा | ३२९ | १७ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| व्रं वगौत्र | ब्रुवगोत्र। | ३३० | ३ |
| व्यङन्तस्य | ष्यङन्तस्य | ३३५ | १३ |
| नामि नाम | नाभिनाम | ३३८ | ९ |
| प्रतिरन्त | प्रनिरन्तः | ३४६ | ९ |
| स्यादयस्करः | स्यादपस्करः। | ३४९ | २५ |
| किष्किरः | विष्किरः | ३५० | १ |
| सुक् | लुक् | ३५६ | १२ |
| सूत्रादिञ | सूत्रादिञ् | ३६० | ५ |
| सुधातुकिश्च | सौधातकिश्च | ,, | ९ |
| फजन्तेभ्यो | फञन्तेभ्यो। | ,, | २४ |
| कल्याणिनेयः | काल्याणिनेयः | ३६६ | ५ |
| पितृष्यसुः | पितृष्वसुः | ३६७ | २५ |
| मातृष्यसेय | मातृष्वसेय | ,, | २६ |
| अण् ढकोऽप | अण् स्याड्ढकोऽय | ३६८ | ८ |
| निपातेन | निपातनात् | ३६९ | ४ |
| हिलोपोऽपि | टिलोपोऽणि | ३७१ | १४ |
| भ्रातुव्यो | भ्रातृव्यो | ३७२ | १८ |
| शाल्वेय | साल्वेय | ३७१ | ५ |
| क्रोड्या | क्रौड्या | ३७८ | २४ |
| शराव | शाराव | ३८३ | ३ |
| सूत्रं त्रुटितम् | आग्रहायण्यश्वत्थाट्ठक् ।४।२।२२ | ३८४ | ७ |
| यस्य लोप इति | यस्येति च इति सूत्रात् | ३८५ | २ |
| त्र्युषसोयत् | त्रुषसोयत् | ,, | २१ |
| वुन् | वुञ् | ३९१ | १३ |
| निर्वंत्तो | निर्वृत्ते | ३९८ | १३ |
| हरीतक्स्त्वणो | हरितक्यस्त्वणो | ३९९ | २५ |
| सूत्रं त्रुटितम् | वृद्धाच्छः ।४।२।११४ | ४०८ | ११ |
| साल्वो | साल्वको | ४१२ | ६ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| लोपः | लोॅपः | ,, | १६ |
| सूत्रं त्रुटितम् | सायं चिरं प्राह्णे प्रगेऽव्ययेभ्यष्टुट्यु लौ तुट् च ।४।३।२२ | ४१७ | ७ |
| परादिभ्यस् | परारिभ्यस् । | ,, | १२ |
| पुनवसु | पुनर्वसु । | ४२० | १ |
| साम्वत्सरा | संवत्सरा | ४२३ | ९ |
| ॠतुयज्ञेभ्यश्च | क्रतुयज्ञेभ्यश्च । | ४२६ | २४ |
| सूत्रं त्रुटितम् | शुण्डिकादिभ्योऽण् ।४।३।७६ शौल्कशालक इत्यत्र शौल्कशालिकइत्यपि । | ४२७ | २१ |
| अभिनिष्कायति | अभिनिष्कामति द्वारम् ।४।३।८६ | ४२९ | १० |
| कौधुमि | कौथुमि । | ४३३ | १६ |
| सुपवर्णणा | सुपर्वणा | ,, | १४ |
| वाहरश्चापि | वाटरश्चापि | ४३५ | ११ |
| वाह्न | वाह्न | ४३६ | ३ |
| धर्माम्नाययो | चरणाद् धर्माम्नाययोः । | ,, | १९ |
| टाञ्ज्य | टाञ्ज्यः | ४३७ | ५ |
| वाह्नच्यं | वाहृच्यं | ,, | ९ |
| पर्वादिभ्यः | पर्पादिभ्यः | ४४७ | १२ |
| विज्ञेय | पिज्ञेय | ,, | १९ |
| वेह्ननादेस्तु | वेतनादेस्तुठन् | ४४८ | ८ |
| ठक् | ठन् | ,, | २१ |
| भस्त्रादिभ्यस्ठन् | भस्त्रादिभ्यःष्ठन् । | ,, | २३ |
| वैयधिकः | वैवधिकः | ४४९ | २ |
| सूत्रंत्रुटितम् | अपमित्ययाचिताभ्यां कक्कनौ ।४।४।२१ | ,, | २ |
| किष्किरः | विष्किरः | ४५० | १ |
| शीर्षके | ठगाधिकारः । | ४५१ | |
| दादुरिकं | दार्दुरिकं | ,, | २६ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| सैम्या | सैन्या । | ४४३ | १८ |
| परश्वधिक | पारश्वधिक | ४५५ | २१ |
| ताच्छीशिके | ताच्छीलिके | ४५६ | १५ |
| सूत्रतचाच | सूत्रः श्च | ४५९ | १३ |
| सस्मितेषु | सम्मितेषु । | ४६१ | १० |
| बन्धनचर्षो | बन्धनचर्षौ । | ४६२ | ९ |
| हल्पो | हल्यो । | ,, | १७ |
| वैश्र्यजनीन | वैश्वजनीन | ४६३ | ४ |
| छदिरूपधिलेर्ढञ | छदिरुपधिवलेर्ढञ् । | ४६८ | २१ |
| मुञ्जश्च | मुञ्जश् | ४६९ | ३ |
| वभ्रैयै | वभ्रय्यै | ,, | ७ |
| प्राग्यतेष्ठञ् | प्राग्वतेष्ठञ् | ५७० | १ |
| वैशि तिकश्च | वैंशितिकश्च | ४७२ | १४ |
| प्रास्थिकीदाशि | प्रास्थिकी राशि | ४७८ | २६ |
| श्वैतच्छत्रिकः | श्वैतच्छत्रिकः ! | ४८१ | २ |
| क्रीशशत | क्रोशशत | ४८३ | १४ |
| षण्मासिकः | षाण्मासिको | ४८४ | ९ |
| गोर्भाक्क्लीवं | गोत्वं क्लीवं | ४९२ | १७ |
| नञ स्नाञौ | नञ स्नञौ | ,, | २३ |
| सिद्धयति | प्रसिद्धयति | ४९४ | ३ |
| सवांदेरिति | सर्वादेरिति | ४९५ | २ |
| माधवमस्यते | माधवस्य मते । | ,, | १८ |
| यह च | यच्च । | ४९६ | २ |
| मभिधानीयकं | माभिधानीयकं | ४९७ | ३ |
| तिलयाषो | तिलमाषो | ४९९ | १३ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| सर्वान्नीयाश्च | सर्वान्नीनाश्च | ५०० | १८ |
| अनुग्वत्वं गामी | अनुग्वलं गामी | ५०१ | २६ |
| अभ्य | अभ्य | ५०२ | ४ |
| पदं भवेन् | पदं भवेत् । | ५०३ | ६ |
| वोर्थात् | बोधार्थात् । | , | २२ |
| नतेनामिकायाः | नते नासिकायाः | ५०५ | ४ |
| कर्मणिघटोऽच् | कर्मणिघटोऽठच् । | ५०६ | ७ |
| पश्वानां | पश्वानां । | ५०९ | २६ |
| अमुकाभिकाभीकः | अनुकाभिकाभीकः | ५१३ | १० |
| भवेद् घ्राद्धी | भवेच्छ्राद्धी । | ५१५ | ९ |
| अन्तोरात्तश्च | अन्तोदात्तश्च । | ५१८ | २२ |
| गोमिम् मलित | गोमिन् मलिन | ५२२ | १६ |
| सत्वम्यात्वामि | सप्तम्यां च न स्मृतौ । | ५२३ | ९ |
| मालो | माली । | ,, | १६ |
| हृदयात् | हृदयाच्चालु | ५२५ | ३ |
| शीतोष्णतृप्र | शीतोष्णतृप्र | ५१५ | ७ |
| खलु वः चाटः | खलु वा चाटः | ५२६ | २ |
| तात्पय | तात्पर्ये । | ,, | २४ |
| रेफादी | रेफादौ । | ५२९ | १० |
| परस्प | परस्य । | ५३० | २ |
| साधीया | साधीय । | ५४० | २ |
| स्पिष्ठ | ल्पिष्ठ | ५४१ | ८ |
| विधियवे | विधीयते | ५४५ | ३ |
| यदामुत्तर | पदानामुत्तर | ,, | ८ |
| वज्रुनादिकः | वज्रुंनादिकः | ५४९ | २ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| वस्तेर्ढ | वस्तेर्ढञ् | ,, | १६ |
| देवत्तो | देवदत्तो। | ५५० | ८ |
| अङ्गल्यादे | अङ्गुल्यादे | ,, | १४ |
| दामनेदो | दामनेर्दाम | ५५१ | २१ |
| क्रोन्धायना | क्रौञ्जायनादयः। | ५५२ | १४ |
| वीप्यायां द्वितीयाऽज्ञ | वीप्सायां द्वितीयाऽत्र | ,, | २३ |
| केचिदिव्यन्ते | केचिदिष्यन्ते। | ५५४ | १० |
| विषाषाञ्चे | विभाषाञ्चे। | ,, | १३ |
| स्थावान्त | स्थानान्त। | ,, | २८ |
| नित्यो वट्ठः | निलो बट्ठः। | ५५५ | १३ |
| स्यादमुगन्त्य | स्यादनुगदन्त्य | ,, | २ |
| दाधुगादिकः | दानुगामिकः। | ,, | ३ |
| जन्मति | जन्मनि। | ,, | ८ |
| ञ्यतिकृते | ञ्यसि कृते | ५५६ | ११ |
| अत्र सूत्रत्रुटिः | समूहवच्च बहुषु ५।४।२२ | ५५६ | १ |
| वर्ज्ये | वर्णे। | ५५७ | २२ |
| लोहितालिङ्ग | लोहिताल्लिङ्ग। | ५५८ | १ |
| पुन | पुनः | ५५९ | १ |
| समृव् | सुमृद्। | ,, | ५ |
| माषंमायं | माषं माषं | ,, | १४ |
| बह्वल्पार्थान्थ | बह्वल्पार्थान् | ,, | ९ |
| आद्यादिम्मो | आद्यादिभ्यो | ,, | २० |
| जपादाने | अपादाने। | ,, | २४ |
| म्बर्गात् | स्वर्गात् | ५६० | २ |
| व्मथते | व्यथते | ,, | १० |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| हीयमात् | हीयमानात् । | ,, | १६ |
| षष्ठ्यन्साच्च | षष्ठ्यन्ताच्च । | ,, | १७ |
| उच्चक्षु | उच्चक्षू । | ५६१ | २६ |
| विरहीकृत्सा | विरजी कृत्वा | ,, | २७ |
| घटम् | पटम् | ,, | ,, |
| तदथीन | तदधीन | ५६२ | १७ |
| प्रत्ययोऽनितौरे | प्रत्ययोऽनितौ परे | ५६३ | ११ |
| सुखप्रियानु | सुखप्रियादानुलोम्ये | ५६४ | १९ |
| आतु लोम्ये | आनुलोम्ये | ,, | ,, |
| द्विरक्ति | द्विरुक्ति | ५६६ | ,, |
| आभीक्ष्यमार्थ | आभीक्ष्णमर्थस्तु | ,, | ४ |
| भत्सने चोर चोर | भर्त्सने चोर चोर त्वां घात | ५६७ | ९ |
| विधियताम् | विधीयताम् | ४६७ | २५ |
| अन्यन्यञ्च | अन्योन्यञ्च | ४६९ | ७ |
| सुखं सुखेन | सुखसुखेन | ५६९ | १५ |
| निवासि | निवासिना | ५७० | १५ |



# अथ पाणिनीयशिक्षा

अथ शिक्षां प्रवक्ष्यामि-पाणिनीयमतं यथा । शास्त्रानुपूर्वं तद्विद्याद् यथोक्तं लोकवेदयोः ॥ १ ॥ प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः । पुनर्व्यक्ती करिष्यामि वाच उच्चारणे विधिम् ॥ २ ॥ त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः । प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा ॥ ३ ॥ स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः । यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥४॥ अनुस्वारो विसर्गश्च)(क) ≍पौ चापि पराश्रितौ । दुःस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव च ॥ ५ ॥

आत्मा बुद्धया समेत्यार्थान्मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ ६ ॥ मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम् । प्रातःसवनयोगं तं छन्दो गायत्रमाश्रितम् ॥ ७ ॥ कण्ठे माध्यन्दिनयुगं मध्यगं त्रैष्टुभानुगम् । तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥ ८ ॥ सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णान् जनयते तेषां विभागः पञ्चधा स्मृतः ॥ ९ ॥ स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः । इति वर्णविदः प्राहुर्निपुणं तन्निबोधत ॥१०॥ उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः । ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि ॥११॥ उदात्ते निषादगान्धारावनुदात्त ऋषभधैवतौ । स्वरितप्रभवा ह्येते षड्मध्यमपञ्चमाः ॥ १२ ॥ अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ १३ ॥ ओभावश्च विवृतिश्च शषसा रेफ एव च । जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ १४ ॥ यद्योभावप्रसंधानमुकारादि परं पदम् । स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः ॥१५॥ हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् । औरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम् ॥ १६ ॥ कण्ठ्यावहाविचुयशास्तालव्या वोष्ठजावुपू । स्युर्मूर्धन्या ऋटुरषा दन्त्या ऌतुलसाः स्मृताः ॥ १७ ॥ जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः । एऐ तु कण्ठतालव्यावोऔ कण्ठोष्ठजौ स्मृतौ ॥ १८ ॥ अर्धमात्रा तु कण्ठ्या स्यादेकारैकारयोर्भवेत् । ओकारौकारयोर्मात्रा तयोर्विवृतसंवृतम् ॥ १९ ॥ संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् । घोषा वा संवृताः सर्वे अघोषा विवृताः स्मृताः ॥ २० ॥ स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् । तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥ २१ ॥

अनुस्वारयमानां च नासिकास्थानमुच्यते । अयोगवाहा विज्ञेया आश्रयस्थान भागिनः ॥ २२ ॥ अलाबुवीणानिर्घोषो दन्त्यमूल्यस्वराननु । अनुस्वारस्तु कर्तव्यो नित्यं ह्रोः शषसेषु च ॥ २३ ॥ अनुस्वारे विवृत्यां तु विरामे चाक्षरद्वये । द्विरोष्ठ्यौ तु विगृह्णीयाद्यत्रोकारवकारयोः ॥ २४ ॥ व्याघ्री यथा हरेत्पुत्रान्दंष्ट्राभ्यां न च पीडयेत् । भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् ॥ २५ ॥ यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते । एवं रङ्गाः प्रयोक्तव्याः खे अराँ इव खेदया ॥ २६ ॥ रङ्गवर्णं प्रयुञ्जीरन्नो ग्रसेत्पूर्वमक्षरम् । दीर्घस्वरं प्रयुञ्जीयात्पश्चान्नासिक्यमाचरेत् ॥ २७ ॥ हृदये चैकमात्रस्त्वर्धमात्रस्तु मूर्धनि । नासिकायां तथार्धं च रङ्गस्यैवं द्विमात्रता ॥ २८ ॥ हृदयादुत्करे तिष्ठन्कांस्येन स्वमनुस्वरन् । मार्दवं च द्विमात्रं च जघन्वाँ इति निदर्शनम् ॥ २९ ॥ मध्ये तु कम्पयेत्कम्पमुभौ पार्श्वौ समौ भवेत् । सरङ्गं कम्पयेत्कम्पं रथीवेति निदर्शनम् ॥ ३० ॥ एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः । सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥ ३१ ॥ गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः । अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥ ३२ ॥ माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः । धैर्यं लयसमर्थं च षडेते पाठका गुणाः ॥ ३३ ॥ शङ्कितं भीतमुद्घृष्टमव्यक्तमनुनासिकम् । काकस्वरं शिरसि गतं तथा स्थानविवर्जितम् ॥ ३४ ॥ उपांशु दष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रमीतम् । निष्पीडितं ग्रस्तपदाक्षरं च वदेन्न दीनं न तु सानुनास्यम् ॥ ३५ ॥ प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन । मध्यन्दिने कण्ठगतेन चैव चक्राह्वसंकूजितसन्निभेन ॥ ३६ ॥ तारं तु विद्यात्सवनं तृतीयं शिरोगतं तच्च सदा प्रयोज्यम् । मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन ॥ ३७ ॥ अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शरः स्मृताः । शेषाः स्पृष्टा हलः प्रोक्ताः निबोधानुप्रदानतः ॥ ३८ ॥ यमोऽनुनासिका न ह्रौ नादिनो हझषः स्मृताः । ईषन्नादा यणो जश्च श्वासिनस्तु खफादयः ॥ ३९ ॥ ईषच्छ्वासांश्चरो विद्याद् गोर्धामैतत्प्रचक्षते । दाक्षीपुत्रः पाणिनिना येनेदं व्यापितं भुवि ॥ ४० ॥ छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ ४१ ॥ शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ ४२ ॥ उदात्तमाख्याति वृषोऽङ्गुलीनां प्रदेशिनीमूलनिविष्टमूर्धा । उपान्तमध्ये स्वरितं धृतं च कनिष्ठिकायामनुदात्तमेव ॥ ४३ ॥ उदात्तं प्रदेशिनीं विद्यात्प्रचयं मध्यतोऽङ्गुलिम् । निहतं तु कनिष्ठिक्यां स्वरितोपकनिष्ठिकाम् ॥ ४४ ॥ अन्तोदात्तमाद्युदात्तमुदात्तमनुदात्तं नीचस्वरितम् । मध्योदात्तं स्वरितं द्व्युदात्तं

न्युदात्तमिति नवपदशय्या ॥४५॥ अग्निः सोमः प्रवो वीर्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती । अग्निरित्यन्तोदात्तं सोम इत्याद्युदात्तं प्रेत्युदात्तं व इत्यनुदात्तं वीर्यं नीचस्वरितम् ॥ ४६ ॥ हविषां मध्योदात्तं स्वरिति स्वरितम् । बृहस्पतिरिति द्वयुदात्तमिन्द्राबृहस्पती इति न्युदात्तम् ॥ ४७ ॥ अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः । स्वरितः कर्णमूलीयः सर्वास्ये प्रचयः स्मृतः ॥ ४८ ॥ चाषस्तु वदते मात्रां द्विमात्रं त्वेव वायसः । शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रकम् ॥४९॥ कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् । न तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥ ५० ॥ सुतीर्थादागतं व्यक्तं स्वाम्नाय्यं सुव्यवस्थितम् । सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥ ५१ ॥ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ५२ ॥ अनक्षरमनायुष्यं विस्वरं व्याधिपीडितम् । अक्षता शस्त्ररूपेण वज्रं पतति मस्तके ॥ ५३ ॥ हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥ ५४ ॥ हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् । ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥ ५५ ॥ शंकरः शांकरीं प्रादाद्दाक्षीपुत्राय धीमते । वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः ॥ ५६ ॥ येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ ५७ ॥ येन धौता गिरः पुंसां विमलैः शब्दवारिभिः । तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥ ५८ ॥ अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ॥ ५९ ॥ त्रिनयनमभिमुखनिःसृतामिमां य इह पठेत्प्रयतश्च सदा द्विजः । स भवति धनधान्यपशुपुत्रकीर्तिमानतुलंच सुखं समश्नुते दिवीति दिवीति ॥ ६० ॥ अथ शिक्षामात्मोदात्तश्च हकारं स्वराणां यथागीत्यचोस्पृष्टोदात्तं चाषस्तु शंकर एकादश ।

॥ इति पाणिनीयशिक्षा समाप्ता ॥



( ? )

# अथ गणपाठः

## प्रथमोऽध्यायः ।

### ५५ सर्वादीनि सर्वनामानि ।१।१।२७

सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । पूर्वपरावरदक्षिणोत्तरापराधराणिव्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युस्मद् अस्मद् भवतु किम् ॥

### स्वरादिनिपातमव्ययम् ।१।१।३७

स्वर् अन्तर् प्रातर् । अन्तोदात्तः । पुनर् सनुतर् उच्चैस् नीचैस् सनैस् ऋधक् ऋते युगपत् आरात् ( अन्तिकात् ) पृथक् ।

### १७० स्वरादिनिपातमव्ययम् ।१।१।३७

स्वर् अन्तर् प्रातर् अन्तोदोत्तः । पुनर् सनुतर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपद् आरात् अन्तिकात् पृथक् आद्युदात्ताः । ह्यस् श्वस् दिवारात्रौ सायम् चिरम् मनाक् शश्वत् जोषम् तूष्णीम् बहिस् अधस् अवस् समया निकषा स्वयं मृषा नक्तम् नञ् हेतौ हे है इद्धा अद्धा सामि । अन्तोदात्ताः । वत् —५।१।११५। ब्राह्मणवत् क्षत्रियवत् । सना सनत् सनात् उपधा तिरस् । आद्युदात्ताः । अन्तरा । अन्तोदात्तः । अन्तरेण मक् ज्योक् योक् नक् कम् शम् सहसा श्रद्धा अलम् स्वधा वषट् विना नाना स्वस्ति अन्यत् उपांशु क्षमा विहायसा दोषा मुधा दिष्टया वृथा मिथ्या । क्त्वातोसुन्कसुनः । कृन्मकारसंध्यक्षरान्तोऽव्ययीभावश्च । पुरा मिथो मिथस् प्रायस् मुहस् प्रवाहुकम् प्रवाहिका आर्यहलम् अभीक्ष्णम् साकम् सार्धम् सत्रम् सगम् नमस् हिरुक् । तसिलादयस्तद्धिता एधाच्पर्यन्ताः । शस्तसी कृत्वसुच् सुच् आस्थालौ । च्व्यर्थाश्च । अथ अम् आम् प्रताम् प्रतान् प्रशाम् । आकृतिगणोऽयम् । तेनाऽन्येऽपि । तथाहि माङ् श्रम् कामम् प्रकामम् भूदस् परम् साक्षात् साचि सावि सत्यम् मंक्षु संवत् अवश्यम् सपदि प्रादुस् आविस् अनिशम् नित्यम् नित्यदा सदा अजस्रम्

सततम् उपा ओम् भूर् भुवर् झटिति तरसा सुष्ठु कु अञ्जसा अ मिथु विथक् भाजक् अन्वक् चिराय चिरम् चिररात्राय चिरस्य चिरेण चिरात् अस्तम् आनुषक् अनुषक् अनुषट् अम्नस् अम्भस् अम्नर् स्थाने वरम् दुष्ठु वलात् शु अर्वाक् शुदि वदि इत्यादि । तसिलादयः प्राक् पाशपः । ६।३।३६ । शस्प्रभृतयः प्राक् समासान्तेभ्यः । ५।४।४३—६८ । मान्ताः कृत्वोऽर्थः । तसिवती नानाञाविति । इति स्वरादिः । २ ॥

## १० चादयोऽसत्त्वे १।४।५७

च वा ह अह एव एवम् नूनम् शश्वत् युगपत् भूयस् सूपत् कूपत् कुवित् नेत् चेत् चण् कश्चित् यत्र तत्र नह हन्त माकिम् माकीम् माकिर् नकिम् नकिर् आकीम् माङ् नञ् तावत् यावत् त्वा न्वै त्वै द्वै रै ( रे ) श्रौषट् वौषट् स्वाहा स्वधा ओम् तथा तथाहि खलु किल अथ सुष्ठु स्म अ इ उ ऋ ऌ ए ऐ ओ औ आदह उञ् उकञ् वेलायाम् मात्रायाम् यथा यत् तत् किम् पुरा वधा ( वध्वा ) धिक् हाहा हेहै ( हहे ) पाट् प्याट् आहो उताहो हो अहो नो ( नौ ) अथो ननु मन्ये मिथ्या असि ब्रूहि तु नु इति इव वत् वात् वन बत ( सम् वशम् शिकम् दिकम् ) सनुकम् छंवट् ( छम्बट् ) शङ्के शुकम् खम् सनात् सुनुतर् नहिकम् सत्यम् ऋतम् अद्धा इद्धा नोचेत् नचेत् नहि जातु कथम् कुतः कुत्र अव अनु हा हे ( है ) आहोस्वित् शम् कम् खम् दिष्टया पशु नट् सह ( आनुषट् ) आनुषक् अङ्ग फट् ताजक् ( भाजक् ) अये अरे वाट् ( चाटु ) कुम खुम् घुम् अम् ईम् सीम् सिम् सि वै । उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः ॥ आकृतिगणोऽयम् ॥ इति चादयः ॥ ४ ॥

## १० प्रादयः १।४।५४

प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप ॥ इति प्रादयः ॥ ४ ॥

## २६७ उर्यादिच्विडाचश्च १।४।६१

ऊरी उररी तन्थी ताली आताली वेताली धूली धूसी शकला शंसकला ध्वंसकला भ्रंसकला गुलगुधा सजूष् फल फली विक्ली आक्ली आलोष्ठी केवाली केवासी सेवाली पर्याली शेवाली वर्षाली अत्यूमशा वश्मशा मस्मसा मसमसा औषट् श्रौषट् वौषट् वषट् स्वाहा स्वधा पापी प्रादुस् श्रत् आविस् ॥ इत्यूर्यादयः ॥ ५ ॥

## २६९ साक्षात्प्रभृतीनि च १।४।७४

साक्षात् मिथ्या चिन्ता भद्रा रोचना आस्था अमा अद्धा प्राजर्या प्राजरुहा बीजर्या बीजरुहा संसर्या अर्थे लवणम् उष्णम् शीतम् उदकम् आर्द्रम् अग्नौ वशे विकसने विहसने प्रतपने प्रादुस् नवस्। आकृतिगणोऽयम्।। इति साक्षात्प्रभृतयः।।६।।

**।। इति प्रथमोऽध्यायः ।।**



# द्वितीयोऽध्यायः

## २४७ तिष्ठद्गुप्रभृतीनि च २ । १ । १७

तिष्ठद्गु वहद्गु आयतीगवम् खलेयवम् खलेबुसम् लूनयवम् लूयमानयवम् पूतयवम् पूयमानयवम् संहृतयवम् संह्रियमाणयवम् संहृतबुसम् संह्रियमाणबुसम् समभूमि समपदाति सुषमम् विषमम् दुःषमम् निःषमम् अपसमम् आयतीसमम् [ प्रोढम् ] पापसमम् पुण्यसमम् प्राह्णम् प्ररथम् प्रमृगम् प्रदक्षिणम् [ अपरदक्षिणम् ] संप्रति असंप्रति । इच्प्रत्ययः समासान्तः । [ ५।४।१२७।।५।४।१२८ ] ।। इति तिष्ठद्गुप्रभृतयः ।। ७ ।।

## २५७ सप्तमी शौण्डैः २ । । ४०

शौण्ड धूर्त कितव व्याड प्रवीण संवति अन्तर अधि पटु पण्डित कुशल चपल निपुण । इति शौण्डादयः ।। ८ ।।

## २५९ पात्रेसमितादयश्च २ । १ । ४८

पात्रेसमिताः पात्रेबहुलाः उदुम्बरमशकः उदुम्बरकृमिः कूपकच्छपः अवटकच्छपः कूपमण्डूकः कुम्भमण्डूकः नगरकाकः नगरवायसः मातरिपुरुषः पिण्डीशूरः पितरिशूरः गेहेशूरः गेहेनर्दी गेहेक्ष्वेडी गेहेविजिती गेहेव्याडः गेहेमेही गेहेदाही गेहेदृप्तः गेहेधृष्टः गर्भेतृप्तः, आखनिकबकः गोष्ठेशूरः गोष्ठेविजिती गोष्ठेक्ष्वेडी गोष्ठेपटुः गोष्ठेपण्डितः गोष्ठेप्रगल्भः कर्णेटिरिटिरा कर्णेचुरुचुरा । आकृतिगणोऽयम् । इति पात्रेसमितादयः ।। ९ ।।

## २६१ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे २।१।५६

व्याघ्र सिंह ऋक्ष ऋषभ चन्दन वृक वृष वराह हस्तिन् तरु कुञ्जर रुरु पृषत् पुण्डरीक पलाश कितव । इतिं व्याघ्रादयः ।।१०।। आकृतिगणोऽयम् । तेन मुखपद्मम् मुखकमलम् करकिसलयम् पार्थिवचन्द्रः इत्यादि ।। ५ ।।

## ७३८ श्रेण्यादयः कृतादिभिः २ । १ । ५९

(१) श्रेणि एक पूग मुकुन्द राशि निचय विषय निधन पर इन्द्रदेव मुण्ड-भूत श्रमण वदान्य अध्यापक अभिरूपक ब्राह्मण क्षत्रिय [ विशिष्ट ] पटु पण्डित कुशल चपल निपुण कृपण । इत्येते श्रेण्यादयः ॥११॥ (५) कृत मित मत भूत उक्त [ युक्त ] समाज्ञात समाम्नात समाख्यात संभावित [ संसेवित ] अवधारित अवकल्पित निराकृत उपकृत उपाकृत [ दृष्ट कलित दलित उदाहृत विश्रुत उदित ] आकृतिगणोऽयम् । इति कृतादिः ॥१२॥

## २६३ शाकपार्थिवादीनामुपसंख्यानम् २।१।६०

शाकपार्थिव कुतुपसौश्रुत अजातौल्वलि । आकृतिगणोऽयम् । कृतापकृत भुक्तविभुक्त पीतविपीत गतप्रत्यागत यातानुयात क्रयाक्रयिका पुटापुटिका फलाफलिका मनोन्मानिका । इति **शाकपार्थिवादिः ॥१३॥**

## २६५ कुमारः श्रमणादिभिः ३।१।७०

श्रमणा प्रव्रजिता कुलटा गर्भिणी तापसी दासी बन्धकी अध्यापक अभिरूपक पण्डित पटु मृदु कुशल चपल निपुण । इति श्रमणादयः ॥१४॥

## २६५ मयूरव्यंसकादयश्च २।१।७२

मयूरव्यंसक छात्रव्यंसक कम्बोजमुण्ड यवनमुण्ड । छन्दसि । हस्तेगृह्य ( हस्तगृह्य ) पादेगृह्य ( पादगृह्य ) लङ्गूलेगृह्य ( लाङ्गूलगृह्य ) पुनर्दाय । एहीडादयोऽन्यपदार्थे । एहीडम् एहियवं च एहिवाणिजा क्रिया । अपेहिवाणिजा प्रेहिवाणिजा एहिस्वागता अपेहिस्वागता एहिद्वितीया अपेहिद्वितीया प्रेहिद्वितीया ऐहिकटा अपेहिकटा प्रेहिकटा आहरकरटा प्रेहिकर्दमा प्रोहकर्दमा विधमचूडा उद्धमचूडा ( उद्धरचूडा ) आहरचेला आहरवसना [ आहरसेना ] आहरवनिता ( आहरविनता ) कृन्तविचक्षणा उद्धरोत्सृजा उद्धरावसृजा उद्धमविधमा उत्पचनिपचा उत्पतनिपता उच्चावचम् उच्चनीचम् आचोपचम् आचपराचम् [ नखप्रचम् ] निश्चप्रचम् आकिंचन स्नात्वाकालक पीत्वास्थिरक भुक्त्वासुहित प्रोष्यपापीयान् उत्पत्यपाकला निपत्यरोहिणी निषण्णश्यामा अपेहिप्रघसा एहिविघसा इहपञ्चमी इहद्वितीया । जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति । जहिजोडः ( जहिजोडम् ) जहिस्तम्बम् । जहिस्तम्बः [ उज्जहिस्तम्बम् ] आख्यातमाख्यातेन क्रियासातत्ये । अश्नीतपिबता पचतमृज्जता खादतमोदता

खादतवमता । स्वादताचमता । आहरनिवपा आहरनिष्किरा । आवपनिष्किरा । उत्पचविपचा भिन्धिलवणा कृन्धिलवणा कृन्धिविचक्षणा पचलवणा प्रचप्रकूटा । आकृतिगणोऽयम् । तेन । अकुतोभयः । कान्दिशीकः ( कान्देशीकः ) आहो-पुरुषिका अहमहमिका यदृच्छा एहिरे याहिरा उन्मृजावमृजा द्रव्यान्तरम् अवश्य-कार्यम् । इति मयूरव्यंसकादयः ॥१५॥

## २५४ याजकादिभिश्च २।२।९

याजक पूजक परिचारक परिवेषक ( परिषेचक ) स्नापक अध्यापक उत्साह उद्वर्तक होतृ भर्तृ रथगणक पत्तिगणक । इति याजकादयः ॥१६॥

## ३०३ राजदन्तादिषु परम् २।२।३१

राजदन्तः अग्रेवणम् लिप्तवासितम् नग्नमुषितम् सिक्तसंमृष्टम् मृष्टलुञ्चितम् अवक्लिन्नपक्वम् अर्पितोप्तम् । उप्तगाढम् । उलूखलमुसलम् । तण्डुलकिण्वम् । दृषदुपलम् आरड्वायनि ( आरग्वायनबन्धकी ) चित्ररथबाह्लीकम् । अवन्त्य-श्मकम् शूद्रार्यम् स्नातकराजानौ विष्वक्सेनार्जुनौ अक्षिभ्रुवम् दारगवम् शब्दार्थौ धर्मार्थौ कामार्थौ अर्थशब्दौ अर्थधर्मौ अर्थकामौ वैकारिमतम् गाजवाजम् । गोजवाजम् । गोपालिधानपूलसम् । गोपालधानीपूलासं पूलासकारण्डम् । पूलासक-कुरण्डम् । स्थूलासम् । स्थूलपूलासम् । उशीरबीजम् । [ जिज्ञास्थि ] सिञ्जा-स्थम् सिञ्जाश्वत्थम् । चित्रास्वाती । चित्रस्वाती । भार्यापती दंपती जंपती जायापती पुत्रपती पुत्रपशू केशश्मश्रू शिरोबिजु ( शिरोबीजम् ) शिरोजानु सर्पिर्मधुनी मधुसर्पिषी ( आद्यन्तौ ) अन्तादी गुणवृद्धी वृद्धिगुणौ । इति राज-दन्तादिः ॥१७॥

## ३०३ वाऽऽहिताग्न्यादिषु २ । २ । ३७

अहिताग्नि जातपुत्र जातदन्त जातश्मश्रु तैलपीत घृतपीत [ मद्यपीत ] ऊढभार्य गतार्थ । आकृतिगणोऽयम् । तेन गडुकण्ठ अस्युद्यत ( अरसुद्यत ) दण्डपाणिप्रभृतयोऽपि । इत्याहिताग्न्यादयः ॥ १८ ॥

## २६५ कडाराः कर्मधारये २ । ३ । ३८

कडार गडुल खञ्ज खोड कण कुण्ठ खलति गौर वृद्ध भिक्षुक पिङ्ग पिङ्गल ( पिङ्गल ) तड तनु ( जठर ) बधिर मठर कञ्ज बर्बर । इति कडारादयः ॥१९॥

## २२४ नौकाकान्नशुकशृगालवर्ज्येषु २ । ३ । १७

नौ काक अन्न शुक शृगाल । इति नावादयः ॥ २० ॥

## २१६ प्रकृत्यादिभ्य उपसंख्यानम् २ । ३ । १८

प्रकृति प्राय गोत्र सम विषम द्विद्रोण पञ्चक साहस्र ॥ इति प्रकृत्यादयः ॥ २१ ॥

## ३०७ गवाश्वप्रभृतीनि च २ । ४ । ११

गवाश्वम् गवाविकम् गवैडकम् अजाविकम् अजैडकम् कुब्जवमनम् कुब्जीकिरातम् पुत्रपौत्रम् श्वचण्डालम् स्त्रीकुमारम् दासीमाणवकम् शाटीपटीरम् शाटीप्रच्छदम् शाटीपट्टिकम् उष्ट्रखरम् उष्ट्रशशम् मूत्रशकृत् मूत्रपुरीषम् यकृन्मेदः मांसशोणितम् दर्भशरम् दर्भपूतीकम् अर्जुनशिरीषम् अर्जुनपुरुषम् तृणोपलम् ( तृणोलपम् ) दासीदासम् कुटीकुटम् भागवतीभागवतम् । इति गवाश्वप्रभृतीनि ॥ २२ ॥

## ३०८ न दधिपय आदीनि २ । ४ । १४

दधिपयसी सर्पिर्मधुनी मधुसर्पिषी ब्रह्मप्रजापती शिववैश्रवणौ स्कन्दविशाखौ परिव्राजककौशिकौ ( परिव्राट्कौशिकौ ) प्रवर्ग्योपसदौ शुक्लकृष्णौ इध्माबर्हिषी दीक्षातपसी [ श्रद्धातपसी मेधातपसी ] अध्ययनतपसी उलूखलमुसले आद्यवसाने श्रद्धामेधे ऋक्सामे वाङ्मनसे । इति दधिपय आदीनि ॥ २३ ॥

## ३७८ अर्धर्चाः पुंसि च २ । ४ । ३१

अर्धर्च गोमय कषाय कार्षापण कुपत कुसप ( कुणप ) कपाट शङ्ख गूथ यूथ ध्वज कबन्ध पद्म गृह सरक कंस दिवस यूप अन्धकार दण्ड कमण्डलु मण्ड भूत द्वीप द्यूत चक्र धर्म कर्मन् मोदक शतमान याननख नखर चरण पुच्छ दाडिम हिम रजत सक्तु पिधान सार पात्र घृत सैन्धव औषध आढक चषक द्रोण खलीन पात्रीव षष्टिक वारबाण ( वारण ) प्रोथ कपित्थ [ शुष्क [ शाल शील शुक्ल ( शुल्क ) शीधु कवच रेण [ ऋण ] कपट शीकर मुसल सुवर्ण वर्ण पूर्व चमस क्षीर कर्ष आकाश अष्टापद मङ्गल निधन निर्यास जृम्भ वृत्त पुस्त बुस्त क्ष्वेडित शृङ्ग निगड [ खल ] मूलक मधु मूल स्थूल शराव नाल वप्र विमान मुख प्रग्रीव शूल वज्र कटक कण्टक [ कर्पट ] शिखर कल्क ( वल्कल ) नटमक

( नाटमस्तक ) वलय कुसुम तृण पङ्क कुण्डल किरीट [ कुमुद ] अर्बुद अङ्कुश तिमिर आश्रय भूषण इक्कस ( इष्वाक ) मुकुल वसन्त तटाक ( तडाग ) पिटक विटङ्क विडङ्ग पिण्याक माष कोश फलक दिन दैवत पिनाक समर स्थाणु अनीक उपवास शाक कर्पासि [ विशाल ] चषाल ( चखाल ) खण्ड दर विटप [ रण बल मक ] मृणाल हस्त आर्द्र हल [ सूत्र ] ताण्डव गाण्डीव मण्डप पटह सौध योध पार्श्व शरीर फल [ छल ] पुर ( पुरा ) राष्ट्र अम्बर बिम्ब कुट्टिम मण्डल ( कुक्कुट ) कुडप ककुद खण्डल तोमर तोरण मञ्चक पुञ्चक पुङ्ख मध्य [ बाल ] छात्र वल्मीक वर्ष वस्त्र वसु देह उद्यान उद्योग स्नेह स्तेन [ स्तन स्वर ] संगम निष्क चेम शूक क्षत्र पवित्र [ यौवन कलह ] मालक [ पालक ] मूषिक [ मण्डल वल्कल ] कुज [ कुञ्ज ] विहार लोहित विषाण भवन अरण्य पुलिन दृढ आसन ऐरावत शूर्प तीर्थ लोमन ( लोमश ) तमाल लोह दण्डक शपथ प्रतिसर दारु धनुस् मान वर्चस्क कूर्च तण्डक मठ सहस्र ओदन प्रवाल शकट अपराह्ण नीड शकल तण्डुल। इत्यर्धर्चादिः ॥ २४ ॥

## ३५६ पैलादिभ्यश्च । २ । ४ । ५९

पैल शालङ्कि सात्यकि सात्यकामि राहवि रावणि औदञ्चि औदव्रजि औदमेधि औदव्यज्रि ( औदमज्जि औदभृज्जि ) दैवस्थानि पैङ्गलौदायनि राहक्षति भौलिङ्गि राणि औदन्यि औद्गाहमानि औज्जिहानि औदशुद्धि तद्राजाच्चाणः ( तद्राज ) । आकृतिगणोऽयम् । इति पैलादिः ॥ २५ ॥

## ३५६ न तौल्वलिभ्यः २ । ४ । ६१

तौल्वलि धारणि पारणि रावणि दैलीपि दैवति वार्कलि नैवति ( नैवकि ) दैवमित्रि ( दैवमति ) दैवयज्ञि चाफट्टकि बैल्वकि वैकि ( वैङ्कि आनुहारति (आनुराहति) पौष्करसादि आनुरोहति आनुति प्रादोहनि नैमिश्रि प्राडाहति बान्धकि वैशीति आसिनासि आहिंसि आसुरी नैमिषि आसिबन्धकि पौष्पि कारेणुपालि वैकर्णि वैरकि वैहति । इति तौल्वल्यादिः ॥ २६ ॥

## ३६९ यस्कादिभ्यो गोत्रे २ । ४ । । ६३

यस्क लह्य द्रुह्य अयस्थूण ( अयःस्थूण ) तृणकर्ण सदामत्त कम्बलहार बहिर्योग कर्णाटक पर्णाटक पिण्डीजङ्घ वक्रसक्थ ( वकसक्थ ) विश्चि कुद्रि अजबस्ति मित्रयु रक्षोमुख जङ्घारथ उत्कास कटुक मथक ( मन्थक ) पुष्करट् (पुस्करसद्) विषपुट उपरिमेखल क्रोष्टुकमान (क्रोष्टुमान) क्रोष्टुपाद क्रोष्टुमाय

शीर्षमाय खरप पदक वर्षु क भलन्दन भडिल भण्डिल भडित भण्डित । एते यस्कादयः ॥ २७ ॥

## ३६९ न गोपवनादिभ्यः २ । ४ । ६७

गोपवन शेयु ( शिग्रु ) बिन्दु भाजन अश्वावतान श्यामक ( श्योमाक ) श्यामाक श्यापर्ण । विदाद्यन्तर्गणोऽयम् (४ । १ । १०४) । इति गोपवनादि ॥ २८ ॥

## ३६९ तिककितवादिभ्यो द्वन्द्वे २ । ४ । । ६८

तिककितवाः वङ्खभण्डीरथाः उपकलमकाः पफकनरकाः बखनखगुदपरिणद्धाः उब्जककुभाः लङ्कशान्तमुखाः उत्तरशलङ्कटाः कृष्णाजिनकृष्णसुन्दराः भ्रष्टक-कपिष्ठलाः अग्निवेशदशेरुकाः । एते तिककितवादयः ॥ २६ ॥

## ३७० उपकादिभ्योऽन्यतरस्यामद्वन्द्वे २ । ४ । ६९

उपक लमक भ्राष्ट्रक कपिष्ठल कृष्णाजिन कृष्णसुन्दर चूडाकर आडारक गडुक उदङ्क सुधायुक अबन्धक पिङ्गलक पिष्ठ सुपिष्ट ( सुपिष्ठ ) मयूरकर्ण खरीजङ्घ शलाथल पतञ्जल पदञ्जल कठेराणि कुषीतक कशकृत्स्न (काशकृत्स्न) निदाघ कलशीकण्ठ दामकण्ठ कृष्णपिङ्गल कर्णक पर्णक जटिरक बधिरक जन्तुक अनुलोम अनुपद प्रतिलोम अपजग्ध प्रतान अनभिहित कमक वराटक लेखाभ्र कमन्दक पिञ्जूलक वर्णक मसूरकर्ण मदाघ कवन्तक कमन्तक कदामत दामकण्ठ । एते उपकादयः ॥ ३० ॥

इति द्वितीयोऽध्यायः ।

# तृतीयोऽध्यायः

## ७३९ पार्श्वादिषूपसंख्यानम् ३ । २ । १५

पार्श्व उदर उत्तान अवमूर्धन् इति पार्श्वादिः ॥ ३१ ॥

इति तृतीयोऽध्यायः ।

———

## चतुर्थोऽध्यायः

### १८३ अजाद्यतष्टाप् । ४ । १ । ४

अजा एडका कोकिला चष्का अश्वा मूषिका बाला होडा पाका वत्सा मन्दा विलाता पूर्वापिहाणा ( पूर्वापहाणा ) अपरापहाणा । संभस्त्राजिनशणपिण्डेभ्यः फलात् । सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् । शूद्रा चामहत्पूर्वा जातिः । क्रुञ्चा उष्णिहा देवविशा ज्येष्ठा कनिष्ठा । मध्यमा पुंयोगेऽपि । मूलान्नञः दंष्ट्रा । एतेऽजादयः ॥ ४ ॥

### १०६ न षट्स्वस्रादिभ्यः ४ । १ । १०

स्वसृ दुहितृ ननान्दृ यातृ मातृ तिसृ चतसृ । इति स्वस्रादिः ॥ ४५ ॥

### १९२ नित्यं सपत्न्यादिषु ४ । १ । ३५

समान एक वीर पिण्ड श्व ( शिरी ) भ्रातृ भद्र पुत्र । दासाच्छन्दसि । इति समानादिः ॥ ४६ ॥

### १९३ षिद्गौरादिभ्यश्च । ४ । १ । ४१

गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मुकय ऋष्य पुट तूण द्रुण द्रोण हरिण कोकण ( काकण ) पटर उणक ( आमल ) आमलक कुवल बिम्ब बदर फर्कर ( कर्करक ) तर्कार शर्कार पुष्कर शिखण्ड सलद शष्कण्ड सनन्द सुषम सुषव अलिन्द गडुल षाण्डश आढक आनन्द आश्वत्थ सृपाट आखक ( आपच्चिक ) शष्कुल सूर्य ( सूर्म ) शूर्प सूप यूष पूष यूथ मेथ वल्लक घातक सल्लक मालक मालत साल्वक वेतस वृक्ष वृस अतस-उभय भृङ्ग मह मठ छेद पेश मेद श्वन् तक्षन् अनडुही अनड्वाही । एषणः करणे । देह देहलं काकादन गवादन तेजन रजन लवण औद्गाहमानि आद्गाहमानि गौतम-गोतम पारक अयस्थूण अयः-स्थूण भौरिकि भौलिकि भौलिङ्गि यान मेध आलम्बि आलजि आलब्धि आलक्षि केवाल आपक आरट नट टोट नोट मुलाट शातन पोतन पातन पाठन पानठ आस्तरण अधिकरण अधिकार अग्रहायणी आग्रहायणी प्रत्यवरोहिणी [ सेचन ] सुमङ्गलात्संज्ञायाम् । अण्डर सुन्दर मण्डल मन्थर मङ्गल पट पिण्ड-षण्ड उर्द गुर्द शम सूद औड-आर्द्र ह्रद ह्रद पाण्ड भाण्डल भाण्ड लोहाण्ड कदर कन्दर कदल तरुण तलुन कल्माष बृहत् महत् सोम सौधर्म । रोहिणी नक्षत्रे । रेवती-

नक्षत्रे । बिकल निष्कल पुष्कल । कटाच्छ्रोणिवचने । पिप्पल्यादयश्च । पिप्पली हरितकी हरीतकी कोशातकी शमी वरी शरी पृथिवी क्रोष्टु मातामह पितामह । इति गौरादिः ।

## १९५ बह्वादिभ्यश्च । ४ । १ । ४५

बहु पद्धति अञ्चति अङ्कति अहति शकटि शक्ति । शक्तिः शस्त्रे । शारि वारि राति राधि शाधि आहि कपि यष्टि मुनि । इतः प्राण्यङ्गात् । कृदिकारा-दक्तिनः । सर्वतोऽक्तिन्नर्थादित्येके । चण्ड अराल कृपण कमल विकट विशाल विशङ्कट भरुज ध्वज । चन्द्रभागानद्याम् । कल्याण उदार पुराण अहन् क्रोड नख खुर शिखा बाल शफ गुद । आकृतिगणोऽयम् । तेन । भगगल राग इत्यादि । इति बह्वादयः ।

## २०१ शार्ङ्गरवाद्यञो ङीन् । ४ । १ । ७३

शार्ङ्गरव कापटव गौग्गुलव ब्राह्मण वैद गौतम कामण्डलेय ब्राह्मणकृतेय आनिचेय आनिधेय आशोकेय वात्स्यायन मौञ्जायन कैकश काप्य काव्य शैव्य एहि पर्येहि आश्मरथ्य औदपान अराल चण्डाल वतण्ड । भोगवद्गौरिमतोः संज्ञायां घादिषु नित्यं ह्रस्वार्थम् । नृनरयोर्वृद्धिश्च । इति शार्ङ्गरवादिः ।

## ३७८ क्रौड्यादिभ्यश्च । ४ । १ । ८०

क्रौडि लाडि व्याडि आपिशलि आपक्षिति चौटयत चैटयत वैटयत सैकयत बैल्वयत सौधातकि । सूत युवत्याम् । भोज क्षत्रिये । यौतकि कौटि भौरिकि भौलिकि शाल्मलि शालास्थलि कापिष्ठलि गौकक्ष्य । इति क्रौड्यादिः ।

## २५२ अश्वपत्यादिभ्यश्च । ४ । १ । ८४

अश्वपति ज्ञानपति शतपति धनपति गणपति स्थानपति यज्ञपति राष्ट्रपति कुलपति गृहपति पशुपति धान्यपति धन्वपति बन्धुपति धर्मपति सभापति प्राण-पति क्षेत्रपति । इत्यश्वपत्यादिः ।

## २५४ उत्सादिभ्योऽञ् । ४ । १ । ८६

उत्स उदपान विकर मिनद महानद महासन महाप्राण तरुण तलुन । वष्कयासे । पृथिवी धेनु पङ्क्ति जगती त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्म पीलुकुण । उदस्थान देशे । पृषदंश भल्लकीय रथन्तर मध्यन्दिन बृहत्

महत् सत्त्वत् कुरु पाञ्चाल इन्द्रावसान उष्णह ककुभ् सुवर्ण देव ग्रीष्मादच्छन्दसि । इत्युत्सादिः ।

### ३६० बाह्वादिभ्यश्च । ४ । १ । ९६

बाहु उपबाहु उपवाकु निवाकु शिवाकु वटाकु उष निन्दु उपविन्दु वृषली वृकला चूडा बलाका मूषिका कुशला भगला छगला ध्रुवका धुवका सुमित्रा दुर्मित्रा पुष्करसद् अनुहरत् देवशर्म्मन् अग्निशर्मन् भद्रशर्मन् सुशर्मन् कुनामन् सुनामन् पञ्चन् सप्तन् अष्टन् । अमितौजसः सलोपश्च । सुधावत् उदञ्चु शिरस् माष शराविन् मरीची क्षेमवृद्धिन् शृङ्खलतोदिन् खरनादिन् नगरमर्दिन् प्राकारमर्दिन् लोमन् अजीगर्त कृष्ण युधिष्ठिराजु र्न साम्ब गद प्रद्युम्न रक्तम् उदङ्क उदकः संज्ञायाम् । सम्भूयोम्भसोः सलोपश्च । आकृतिगणोऽयम् । तेन सात्यकिः जाङ्घिः ऐन्दशर्मिः आजधेनविरित्यादि ।

### ३६० गोत्रे कुञ्जादिभ्यःष्फञ् । ४ । १ । ९८

कुञ्ज ब्रध्न शङ्ख भस्मन् गण लोमन् शठ शाक शुण्डा शुभ विपाश् स्कन्द स्कम्भ । इति कुञ्जादिः ।

### ३६१ नडादिभ्यः फक् । ४ । १ । १९

नड चर ( वर ) बक मुञ्ज इतिक इतिश उपक ( एक ) लमक शलङ्कु शलङ्कं च । सप्तल साजप्यतिक । अग्निशर्मन् वृषगणे ! प्राण नर सायक दास मित्र द्वीप पिङ्गर पिङ्गल किङ्कर किङ्कल ( कातर ) कातल काश्यपं ( कुश्यप ) काश्य काल्य ( काव्य अज ( अमुष्य ) कृष्णरणौ ब्राह्मणवासिष्ठे । अमित्र लि चित्रगु कुमार । क्रोष्टु क्रोष्टश्च । लोह दुर्ग स्तम्ब शिंशपा अग्र तृण शकट सुमनस् सुमत मिमत ऋच् जलंधर अध्वर युगंधर हंसक दण्डिन् हस्तिन् पिण्ड पञ्चाल चमसिन् सुकृत्य स्थिरक ब्राह्मण चटक बदर अश्वल खरप लंक इन्ध अस्त्र कामुक ब्रह्मदत्त उदुम्बर शोण अलोह दण्डप । इति नडादिः ।

### ३६१ अनृष्यानन्तर्ये बिदादिभ्योऽञ् । ४ । १ । ११४

बिद उर्व.कश्यप कुशिक भरद्वाज उपमन्यु किलात कन्दर्प किंदर्भ विश्वानर ऋषिषेण ऋष्टिषेण ऋतभाग हर्यश्व प्रियक आपस्तम्ब कूचवार शरद्वत् शुनकशुनक् धेनु गोपवन शिग्रु विन्दु भोगक भाजन शमिक अश्वावतान श्यामाक श्यामक श्यावलि श्यापर्ण हरित किंदास वह्यस्क अर्कजूष अर्कलूष् वध्योग

